आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११२

राजानकरामकविकृतसर्वतोभद्राख्यटीकायुता काश्मीरपाठानुसारिणी

# श्रीमद्भगवद्गीता.

अयं ग्रन्थः

एम्. ए. प्राच्यविद्यालंकारश्चेत्युपाधिद्वयभाग्भिः "श्रीनिवास नारायण ताडपत्रीकर" इत्येतैः संशोधितः पाठान्तरादिभिः परिष्कृतश्च ।

स च

बी. ए. इत्युपपदधारिभिः

**विनायक गणेश आपटे**

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् 'महादेव चिमणाजी आपटे' इत्यभिधेय-
महाभागप्रतिष्ठापिते

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा प्रकाशितः ।

शालिवाहनशकाब्दाः १८६१ ।

खिस्ताब्दाः १९३९ ।



मूल्यं रूपकत्रयम् ( ३ ) ।

# भूमिका ।

—:०:—

परस्परवधोद्यतान्स्वजनान्दृष्ट्वा युद्धारम्भ एव ' विसृज्य सशरं चापं न योत्स्य इति गोविन्दमुक्त्वा तूष्णींभूताय ' शोकसंविग्नमानसाय पार्थाय प्रथितयशसे धनुर्धराय वीराय, श्रीमद्भगवतोपदिष्टमिदं गीताशास्त्रं, महाभारतस्य भीष्मपर्वणि यथास्थानं प्रकरणतया संबद्धमप्यात्मानात्मचर्चायां प्रमाणपदवीमारूढं, ' सर्वोपनिषदो गावो...दुग्धं गीतामृतं महत् ' इति वचनेनोपनिषत्सारभूतं, भक्तिकर्मज्ञान संन्यासमार्गप्रवर्तकानां पूज्यपादानामाचार्याणां तदनुयायिनां च महात्मनां विविधभाष्यटीकाग्रन्थैर्विशेषेण परिष्कृतमपि, तत्प्रतिपाद्यविषय ऐकमत्यमप्रतिपद्यमानमपि ' मनस आह्लादकरं, शान्तिपरं, परमपुरुषार्थप्रदमिति मन्वानैः सांसारिकतापत्रयतापितैस्तदपहारार्थं सर्वैरपि श्रद्धालुभिः पठ्यते । इदानींतनैस्तु विदेशस्थैरपि परमादरेणाभ्यस्यते, इत्यहो अस्य माहात्म्यम् । अष्टादशाध्यायात्मिकायां खल्वस्यां गीतायां मर्त्यजन्मभाजां जीवदवस्थायां नैकविधव्यवहारांश्चिकीर्षमाणानां चेतसि संपद्यमानाः सर्वेऽपि विषया यथावसरं प्रतिपादिता इति यः कोऽपि जिज्ञासुः स्वाभिलषितविषयमधिकृत्य गीताशास्त्रमधीते स तं विषयं तत्र लब्ध्वा भगवतो वचनेन समाहितो भवति । तस्माद्विश्वरूपमिदं गीताशास्त्रं किंविषयमिति निश्चये नास्मादृशानामल्पधियामधिकार इति तादृशविवेचनात्स्वयमेव विरम्यते ।

एवं सति ' को वाऽस्य प्रस्तुतस्य गीतापुस्तकस्य विशेषः, येन सत्स्वपि बहुषु भाष्यटीकाग्रन्थेषु इदं प्रकाश्यते ' इति जिज्ञासूनां प्रश्न इदमुच्यते । अद्ययावत् ' सप्तशतश्लोकात्मक एव गीताग्रन्थः । पाठभेदा अप्यत्र विरला एव ' इति सर्वेषामपि गीताध्ययनरतानां मतिरासीत् । इमामेव सरणिमनुसृत्य दिवंगतैर्लोकमान्यतिलकमहाशयैः स्वकीयगीतारहस्यग्रन्थे प्रतिपादितम् । भीष्मपर्वणस्त्रिचत्वारिंशाध्यायारम्भे गीतामाहात्म्यप्रसङ्गेन पठ्यमानेषु श्लोकेषु,

> " षट् शतानि सविंशानि श्लोकानां प्राह केशवः ।
> अर्जुनः सप्तपञ्चाशत्सप्तषष्टिं तु संजयः ।
> धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते । "

इति विद्यमानं पङ्क्तित्रयं गणपतकृष्णाजीमुद्रितमहाभारते कुम्भकोण-पुस्तके च लभ्यते । कलकत्तापाठे तु नास्ति । नीलकण्ठेनापि स्वटीकायां 'माहात्म्यश्लोका गौडैर्न पठ्यन्त' इति निर्दिष्टम् । अस्मद्दृष्टे त्वेकस्मिन्पुस्तके द्वितीयपङ्क्तौ पञ्चपञ्चाशत्पञ्चषष्टिमिति दृश्यते, येन श्लोक-चतुष्टयं न्यूनमिव दृश्येत । तथाऽप्ययं ४५ श्लोकात्मकः प्रक्षेपः गीतापाठे न संभवति । तस्या बहुभिर्नित्याभ्यासादष्टादशाध्यायानामपि मुखोद्गतत्वाच्च । वर्तमानगीतायां पाठान्तराण्यपि न बहूनि । यानि च विद्यन्ते तानि टीकाकृ-द्भिरुद्धृतानि । एवमुपरिनिर्दिष्टं श्लोकाधिक्यं निर्णेतुं न शक्यत इति सप्तशतश्लोकात्मिकैव गीतेति निश्चयः' (गी. र. पृ० ५०८) । अमे-रिकादेशस्थगीर्वाणभाषाध्यापकैः प्रो० एजर्टनमहाशयैरपि स्वकीये गीता-विवृतिग्रन्थोपसंहारप्रसङ्ग इदमेव निर्णीयते । 'प्राचीनलिखितेषु गीतापुस्त-केष्वपि प्रायः पाठान्तराणि न सन्ति । गीताया महाभारते समाविष्टत्वाद्यथा तत्र तथाऽत्रापि श्लोकप्रक्षेपाः सन्तीति केवलतर्कवादः । नाद्यावधि तादृशमेकमपि पुस्तकं लभ्यते येनेदं सम्यक्तया निश्चीयेत' (पृ० ९९।१००)।

एवं सत्यां व्यवस्थायां गतेषु हायनेषु गीतापाठस्येयं काश्मीरीयपरंपरा लब्धा, तदनुसारेण प्राक्तनविद्वद्रचितटीकाद्वयं लब्धमिति गीताभक्तानामयं नवीन एव लाभविशेषः । अस्मिन्महति कार्ये शार्मण्य ( जर्मन ) देशीयकीलविश्ववि-द्यालयस्थाः प्रो० श्राडरमहाशयाः पण्डितप्रवरा एव प्राभवन्नित्यहो तेषां संशो-धनस्य पाटवं, तत्त्वजिज्ञासायाश्चापूर्वः कोऽप्युद्गमो येन कालवशान्नष्टप्रायेयं प्राचीनपाठपरंपरा पुनरपि प्रकाशमानीता । एतेषां चिरवसतिरादावत्रैव भारतवर्ष आसीद्यैरेतैः 'अहिर्बुध्न्यसंहिता' प्रकाशिता, भागवतानामितिहासश्च संपादितः। युरोपीयमहायुद्धसमयेऽत्रैवाङ्ग्लाधिकारिभिर्निरोधिता एते युद्धावसानकाले वि-मुक्ताः स्वदेशं गतवन्तो विद्यालयीयाध्ययनाध्यापनादिनिजानित्यकर्मसु संप्रवृत्ता-श्च । तदा प्रसङ्गवशात्काश्मीरीयमहामाहेश्वराचार्याभिनवगुप्तस्य विविधग्रन्थपरि-शीलनावसरे तस्य भगवद्गीताटीकाऽप्येतैर्दृष्टा । एषा गीतार्थसंग्रहाख्या टीका, निर्णयसागरमुद्रणालयसंपादित' गीताटीका 'पुस्तकेऽतीवलघ्वक्षरैर्मुद्रिता सती न कस्यापि दृष्टिविशेषमावहति । तामेव सम्यक्तया परिशीलय-

द्भिरेतैः श्राडरपण्डितवर्यैस्तत्र निर्दिष्टानां पाठानां विद्यमानगीतापाठेभ्यो भेदबाहु-ल्यं दृष्ट्वा, काश्मीरीयगीतापाठः कोऽप्यन्यो भवतीति मनसि निश्चिन्वानैः प्राचीनगीर्वाणग्रन्थसंग्रहेषु गीतापुस्तकसंशोधनमारब्धम् । अचिरादेव च 'ब्रि-टिश म्यूझियम्' संग्रहे काश्मीरीय(शारदा)लिपिलिखितं भूर्जपत्रपुस्तकमेतैर्लब्धं, यत्राभिनवगुप्तनिर्दिष्ट एव गीतापाठो दृश्यते । एवमभिनवगुप्तादन्येऽपि केचन टीकाकृतः स्युर्यैः काश्मीरीयपाठमेवानुसृत्य स्वटीका रचिता भवेदिति सर्वत्र विचिन्वद्भिरेतैः 'सर्वतोभद्रा' टीकाऽपि समासादिता । यत्र न केवला टीका, अपि तु द्वितीयाध्यायमारभ्य विषयप्रसङ्गेन सर्वेऽपि गीताश्लोका यथाक्रमं लिखिता दृश्यन्ते ।

श्राडरमहोदयैः प्रकाशितं काश्मीरीयगीताविषयकं पुस्तकमधीयानेन मया "अयं गीतापाठस्तदनुसारि टीकाद्वयं च भारतवर्षीयाणामज्ञातं, तत्सर्वमपि भा-ण्डारकरमन्दिरस्थराजकीयग्रन्थसंग्रहाल्लब्धप्राचीनपुस्तकानुसारेण सम्यक्संशोध्य संपादनीयं यद्गीताभक्तानां प्रमोदमावहेत् । 'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति' 'अध्येष्यते च य इमम्' इत्यादिभगवद्वचनात्स्वस्यापि कृतार्थतामावहेत्" इति मनसि कृतवता मन्दिरस्थग्रन्थसंग्रहात्कतिपयानि प्राचीनपुस्तकानि लब्ध्वा टीकाद्वयं गीतापाठश्च यथामति संशोधितः । तत्राभिनवगुप्तटीका पुनः काश्मीरेषु मुद्रितेति दृष्ट्वाऽस्मिन्पुस्तके रामटीका एव प्रकाश्यते, याऽद्ययावन्न मुद्रि-ताऽऽसीत् ।

अत्र संगृहीतानि प्राचीनपुस्तकानि यथासंख्यं निर्दिश्यन्ते । **राना १–१६९** । १८८३–८४. लिपिः काश्मीरनागरी । स्थूलाक्षरैर्लिखितम् । अन्ते 'संवत् ५ वै (वैशाख) वति (–वदि) सप्तम्यां बुधवासरेऽति-शुभम्' इति । **राना २–१७०** । १८८३–८४. लिपिर्देवनागरी । अ० ६ श्लो० ११ (पृ ११०) मात्रम् । शेषं नष्टम् ।

**राशा १–४२४** । १८७५–७६. लिपिः शारदा । अल्पाकारमिदं पुस्तकं लघ्वक्षरैर्लिखितम् । अन्ते 'शुभसंवत् २७ भा (भाद्रपद) वदि तृतीयस्यां परस्ताच्चतुर्थ्यां शुक्रवासराचितायां संकरे सिं. आ. मू. ४५ उत्तरानक्षत्र इदं रामकण्ठीभगवद्गीतायां टीकाशास्त्रं संपूर्णम्' इति ।

**राशा २–४२३** । १८७५–७६ लिपिः शारदा. राशा १ सदृशमेव ।

अन्ते 'मनोहरभट्टस्य शुभं भवेत् । संवत् १०० पौ० शुदि प्रतिपदि समाप्तम्... ।

काश्मीरेषु 'शास्त्र' 'सप्तर्षि' इत्यादिनामभेदेन प्रचलिता विविधा संवत्सरपद्धतिः । तेनैषु पुस्तकेषु संवत्सरनाम्नोऽनिर्देशात्कालनिश्चयोऽशक्य-प्राय इति भाति ।

अस्मिन्पाठे ये केचन विशेषास्ते तत्र तत्र श्लोकस्थानेषु शांकरपाठानुसा-रेण निर्दिष्टाः । संख्यागणनेनैते पाठभेदाः २८२ प्रतीयन्ते । अन्यच्च, १४ संपूर्णश्लोकाः ६ श्लोकार्धानि चाऽऽधिक्येन दृश्यन्ते । शां० पाठानुसारि-द्वितीयाध्याये वर्तमानौ ६६, ६७ श्लोकावत्र न स्तः । पञ्चमाध्यायस्य १९ तमः श्लोकः षष्ठाध्याये ९ श्लोकानन्तरं दृश्यते । एवं काश्मीरीयपाठस्य शांकरपाठाद्भेदो निश्चेतुं सुकरो भवेत् ।

शांकरपाठाद्भिन्ना काश्मीरीया नाम काचिद्विशिष्टैव पाठपरंपरा विद्यत इति प्रत्ययेऽन्योऽपि कश्चिद्विशेषो विचारार्हो भवति । काश्मीरीयगीतापाठ-मनुसृत्य विरचितं टीकात्रितयं गतेषु कतिपयवत्सरेषु लब्धम् । तत्र महामा-हेश्वराचार्यैरभिनवगुप्तपादैः कृता 'गीतार्थसंग्रह'नाम्नी टीका निर्णयसागर-मुद्रितगीताटीकापुस्तके दृश्यते । सा पृथक्तयाऽपि काश्मीरेषु मुद्रिता लभ्यते । इयमन्या राजानकरामकविरचिता 'सर्वतोभद्राख्या टीका' याऽस्मिन्पुस्तके मुद्रिता । तृतीयाऽप्यानन्दवर्धननाम्ना सनाथीकृता भाण्डारकरप्राच्यविद्या-संशोधनमन्दिरस्थराजकीयप्राचीनग्रन्थसंग्रहे श्रीमाद्भिः प्रो. डॉ. बेलवलकर-महोदयैर्लब्धा । अथान्यदपि किंचिद्वक्तव्यमस्ति । रामानुजीयगीताभाष्यमनु-सृत्य वेङ्कटाचार्यैस्तात्पर्यचन्द्रिका रचिता । तत्रैकादशाध्यायस्य २६, २७ श्लोकविवरणे रामानुजादपि पूर्वतनैर्यादवप्रकाशीयैर्व्याख्याताः केचन काश्मी-रीयपाठविशिष्टाः श्लोका उद्धृताः । येन दाक्षिणात्येष्वप्ययं गीतापाठः ख्रिस्ताब्दस्य ११ मे शतके ज्ञात आसीदिति निर्णेतुं शक्येत । एतानधिक-श्लोकानुद्दिश्य 'एते श्लोका सन्ति न वेति देवो जानाति' इति या वेङ्कटा-चार्याणामुक्तिः सा तेषां कालेऽयं पाठो लुप्तप्राय आसीदित्येव निदर्शयति ।

आस्तां तावदियं कथा । इदानीमत्र संगृहीतां सर्वतोभद्राख्यां टीकाम-धिकृत्य किंचिन्निवेद्यते । 'अस्याः कर्ता रामकण्ठः, चतर्जीप्रणीतकाश्मीरशै-विज्ञम् ग्रन्थाल्लब्धैतिह्यानुसारेण ख्रिस्ताब्दीय ९५० समय आसीदिति श्राइरम-

तम्। ऑफ्रेक्ट् अपि स्वकीयकोशे ‘ राजानकरामकण्ठभट्टः, नारायणकण्ठ-पुत्रः, उत्पलदेवशिष्यः शैवागमाचार्य इति सर्वदर्शनसंग्रहेऽपि माधवेन निर्दिष्टः ’ इति प्रतिपादयति। अस्यां टीकायां तु टीकाकृतो नाम ‘ राजानकरामकविः ’ इत्येवाध्यायपुष्पिकासु प्रायो दृश्यते। अन्यच्च, टीकोपसंहारश्लोकेषु ‘ कविवरस्य प्रयोगः ’ ‘ कवीन्द्रस्य वाक् ’ इत्यादिपदैः स्वकीयां काव्यशक्तिं प्रथयताऽनेन स्वकीयैतिह्यनिवेदनावसरे—कान्यकुब्जे यः श्रुतनिधिर्नारायण इति द्विजोऽभूत्तद्वंश्यः ( ? न पुत्रः) कणाख्यो मुक्तोऽभवत्। यस्यानुजेन रामेण गीताटीका कृतेत्येव निर्दिष्टम्। अस्य कवेरस्यां टीकायां न शैवागमादिनिदर्शनं, नाप्युत्पलदेवस्य शिष्यत्वनिर्देशः कुत्रापि दृश्यते। तथैव योऽयं ‘ कवीन्द्रः ’ ‘ कविवरः ’ इत्यादिपदैः स्वकीयां निरतिशयां काव्यशक्तिं प्रदर्शयति तस्य काव्य-नाटकादिललितप्रबन्धानामद्ययावदनुपलब्धिरेव प्रतीयते। तेन श्राडरनिर्णये मनः संशयितमिव भवति ।

यः कोऽपि वाऽसौ भवतु। अस्येयं टीका प्रसादानुप्रासादिकाव्यगुणैः सहृदयानां मन आह्लादयतीति न काऽपि शङ्का। अनेन कविवरेण ‘ज्ञानकर्मसमुच्चय एव गीताप्रतिपाद्यविषयः’ इति ३.३ श्लोकप्रस्तावे ‘ एवं ज्ञानयोगस्य कर्माविनाभावात्कर्मयोगस्य च ज्ञानाविनाभावादेकैव प्रकारद्वयनिर्वर्त्या निष्ठा ’ इत्यादिना निर्दिश्यान्यत्रापि बहुषु स्थानेषु तदेव तत्त्वमङ्गीकृतमिति प्रतीयते।

अनेन टीकाकृता बहुषु स्थानेषु पाठभेदानां ग्राह्याग्राह्यत्वं युक्त्या निर्दिष्टं, तद् जिज्ञासुभिस्तत्र तत्र द्रष्टव्यम्। पाठभेदानामुत्पत्तिश्चिकित्सकैर्विविधान्प्राचीन-कोशानालोड्य निर्णीता। तत्र द्वैतमतप्रवर्तकाः श्रीमध्वाचार्याः स्वकीये ‘महाभारततात्पर्यनिर्णये ’ ‘ केचिद् ग्रन्थान्प्रक्षिपन्ति क्वचिदन्तरितानि च। कुर्युः क्वचिच्च व्यत्यासम् ’ इत्यादि वदन्ति। अयं रामकविस्तु स्वटीकायां (पृ० ११०) ‘ संस्कृतमन्यास्तु पाठान्तराणि योजयन्ति ’ इति निर्दिशति। शांकरभाष्येऽपि कानिचन पाठान्तराणि संगृहीतानि दृश्यन्ते। किंतु शांकरकाश्मीरपाठयोर्भेदो न कुत्रापि टीकाकृद्भिर्विवरितः।

सप्तमाध्यायस्य २४ तमः श्लोको रामपाठे न दृश्यते। तस्य ९.११ श्लोकेन रामपाठे सादृश्यं प्रतीयते। येन टीकाकृतेयं द्विरुक्तिरिति मन्वानेनैकश्लोको बुद्ध्यैव निःसारितो वा इति शङ्का। अन्यच्च १६।१७ अध्यायौ रामेणैकत्वेन परिगणितौ। १६ अध्यायान्ते समाप्तिश्लोको नास्ति। पुष्पिका अपि तेषु तेषु कोशेषु विसंवादेन संगृहीता दृश्यन्ते। १६ अध्यायसमाप्तिश्लोकः १७

अध्ययान्ते लिखितः। उपसंहारश्लोकेषु च 'कविवरस्यायं प्रयोगो नवः' 'अध्यायश्च नगेन्दुकः' इति निर्दिशता कविना रामेणाध्यायद्वयमेकत्र संगृहीतं, पश्चात् कोशलेखकैरितरबहुकोशानुसारेण पुष्पिका यथामति लिखिताः स्युरिति भाति।

गीतापाठेऽस्मिन्नध्यायपुष्पिकासु मयाऽध्यायनाम न निर्दिष्टं, 'ब्रह्मविद्यायां योगशास्त्रे' इत्याद्यपि निःसार्य केवलं 'भगवद्गीतासूपनिषत्सु...अध्यायः' इत्येव संगृहीतमिति बहूनां पूर्वपाठानुसारिणां शङ्कास्पदं भवेत्। विशेषतो गीताप्रतिपाद्यविषयचर्चायां 'ब्रह्मविद्यायां योगशास्त्रे' इति प्रत्यध्यायावसाने पठितत्वात्स एवात्र मुख्यतया प्रतिपादितो विषय इति बहुभिः पुरस्कृतत्वात्तस्यैव विशेषस्यात्र निःसारणं कुर्वता मया महान्प्रमादः कृत इत्यपि वचनाक्षेपः संभवति। अत्रेदमुच्यते। प्राचीनकोशेषु 'श्रीमद्भगवद्गीतासूपनिषत्सु...अध्यायः।' इत्येवोपलब्धम्। नाध्यायनाम, नापि ब्रह्मविद्यायोगशास्त्रादीनामुल्लेखः। अन्येषु कोशेषु विसंवादेनैवाध्यायनामानि दृष्टानि। तेन प्राचीनकोशेषु दृष्टमेव पुष्पिकायाः प्रथमं स्वरूपमिति निश्चिन्वता मया तथैवात्र निर्दिष्टा अध्यायपुष्पिकाः। अध्यायनामानि यथाविषयं स्वमत्यैव विविधतया प्रवर्तितानि, तेषु कानिचन युक्तानीति हेतोः, परंपरानुसारेण वा, इदानीं पुष्पिकासु प्रवेशितानीत्येव तर्कः संभवति।

अस्य पुस्तकस्य प्रकाशने आनन्दाश्रमाधिपतिभिर्यत्सौहार्दं दर्शितं, तत्र श्रीमतां प्राचार्याणां बेलवलकरमहोदयानामेव पुरस्कारो हेतुभूत इति द्वयोरप्युपकारभरमावहामि। शारदालिपिकोशानां पठनं पं. भिलवडीकरशास्त्रिभिः कृतम्। मुद्रणदोषाणां शुद्धिस्तु पं० कृष्णमूर्तिशर्मभिः कृतेति तेषामपि सौहार्दमस्मिन्कार्य उपकारकमभूत्।

'अयं काश्मीरीयगीतापाठस्तदनुसारिणी चेयं टीका प्रथमत एव भारतवर्षे प्रकाश्यते। तज्जिज्ञासुभिरियं सम्यगालोचनीया' इति विज्ञप्य विरमति,

पुण्यपत्तनस्थभाण्डारकरप्राच्य-
विद्यासंशोधनमन्दिरतः—
कार्तिक व. १० शके १८६१

विदुषां वशंवदः
श्री. ना. ताडपत्रीकरः

राजानकरामकविकृतसर्वतोभद्राख्यया टीकया समेता

काश्मीरपाठानुसारिणी

# श्रीमद्भगवद्गीता.

## उपोद्घातः ।

ॐ श्रीगणाधिपतये नमः ।

ॐ स्वर्ज्योतिर्द्योतितानन्तनामरूपाय ते नमः ।
अनामरूपाचिन्मात्रवपुषे परमात्मने ॥ १ ॥

प्रमातॄणामुद्यद्विविधरुचिभेदाच्छुरणया
विचित्राभासत्वं स्फटिकतटवत्संश्रयति यत् ।
स्वरूपं सर्वेषां विगलितविकल्पाभ्रपटल-
प्रसन्ने त्वद्व्योम्नि स्फुरतु जगतां तत्स्वपुषा ॥ २ ॥

यस्माद् व्योम्न इवाप्रमेयविमलाभोगाज्जगद्व्यक्तयो
नानादर्शनवादविस्तरगिरः स्थातुं बहिर्न क्षमाः ।
तद् ब्रह्मैव परं पराशरसुतस्यैवं महर्षेर्मतं
सन्तः संततसंनिवेशितधियो ध्यायन्तु बन्धच्छिदे ॥ ३ ॥

सकलविबुधमध्ये केऽपि गीतापदानां
विदितगुणविशेषा हन्त सन्तः कृतार्थाः ।
कतिचिदलिषु लोके ते हि वल्गन्ति लक्ष्मी-
करकमलमधूनां चर्वणे ये रसज्ञाः ॥ ४ ॥

प्रकृतिगुरुभिर्गाढोद्योगैरवन्ध्यसमाधिभि-
र्बहुभिरमलप्रज्ञैरेताः कृताः किल वृत्तयः ।
किमधिकमिह ब्रूयान्मादृक्किमत्र तु कुर्महे
स्वमतिसुहृदो मुग्धानां नो यदत्र विडम्बकाः ॥ ५ ॥

---

१ राशा १ ॐ नमो गुरवे । इत्याधिकम् । राशा २ ॐ श्रीगणेशाय विघ्नहन्त्रे नमः । श्रीगुरुवरचरणकमलेभ्यो नमः ।

प्रसन्नत्वादस्मिन्सुगम इति सर्वः प्रविशति
प्रविष्टो गाम्भीर्यादनधिगतगाधोऽत्र पतति ।
तदेवं गीतार्थार्णवमवतितीर्षुं प्रति जनं
विधास्ये वाक्यार्थान्वयमहमिमं पोतमभयम् ॥ ६ ॥

नित्यान्योन्यविरुद्धदर्शनकथाक्षेपादिना कः क्षमः
संमुग्धप्रतिकूलदुर्मदधियां प्रौढोऽपि संबोधने ।
तत्सिद्धान्ततयैव भक्त्यतिशयव्यक्तेश्वरानुग्रह–
ग्रस्तप्रायसमग्रसंशयमलः कोऽप्यत्र बोध्यो जनः ॥ ७ ॥

इह खलु निखिलवेदवेदान्तसिद्धान्तस्मृतीतिहासपुराणादिविविधशास्त्रविस्तारविप्रकीर्णं चतुर्वर्गोपदेशं कालापचितप्रज्ञाद्युपदेश्यपुरुषप्रतिपत्तिसौकर्याय सारतः संक्षिप्य महाभारताख्यमितिहासं भगवान्कृष्णद्वैपायनो व्यासाभिधो यदि वा तन्मूर्तिमाविष्टः परमेश्वर एव साक्षान्निबबन्ध । तत्रापि चापवर्गस्य परमपुरुषार्थत्वादुपादेयतमस्य मोक्षधर्मादिप्रकरणेषु विविधः प्रकारभेदैः प्रतिपाद्यस्यापि विनेयबुद्धिभिः सम्यक्प्रतिपत्तुमशक्यत्वमाशङ्कमानो मृदुतरमतीनामपि हृदयंगमेन प्रसन्नगम्भीरेण वाक्प्रबन्धेनेतिहासक्रमागतसुहृत्संवादककथारूपेण योग्याखिललोकोपदेशाय भगवद्वक्तृकमपवर्गप्रतिपादकं गीताख्यं प्रकरणं प्रतिपादयांचकार । यस्यायं समस्ताध्यात्मशास्त्रोपनिषद्भूतः सिद्धान्त आत्मैवेदं सर्वमिति । यतः परमर्षिरयमस्मिन्नेव महाभारते देहसंन्यासावसर[1]समाहृतनिरुत्तरसमाधिदशानुभूतपरमार्थामोदाधिवासितसुविमलमतिवचनगाङ्गेयगीतस्तवराजाभिधानभगवत्स्तोत्रद्वारेण तत्स्वरूपं समस्तव्यस्तमभिधायाप्युपसंहारे

'यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥'

इति श्लोकेन परमसारसंग्रहरूपं यमर्थमुद्दिष्टवांस्तमेवेह प्रकरणे गर्भीचकार । तथा चेमं श्लोकं परमार्थविवेचनविचक्षणा एवं व्याचक्षते । तस्मै यच्छब्दपञ्चकविशिष्टविशेषणप्रतिपाद्यस्वरूपाय सर्वात्मने नमः । सर्वस्याऽऽत्मने सर्वमात्मा यस्येत्युभयथा वृत्तिसमाश्रयणेन परमकारणस्याऽऽत्मन एव परमेश्वरस्य वास्तवमद्वितीयत्वमसहायत्वं चानेन पदेन प्रतिपादितम् । यदुक्तमिह–

---

१ राशा १·२ °वादकथा°. २ राशा २ °वसरे.

' यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ' इति ।
' सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ' इत्यादि ।

कस्मै तस्मै नम इत्येकत्वेऽपि सर्वज्ञत्वादिनिरतिशयैश्वर्यप्रतिपादकानि यच्छब्दविशिष्टानि विशेषणानि क्रमेण व्याख्यायन्ते तत्र । तस्मै भगवते नमो यस्मिन्सर्वम् । इदमत्यन्तभिन्नानन्ताभासमयं भावजातं संवेद्यमानतामात्रनिबन्धनतत्तत्स्वात्मलाभं सत् । सुखादिसर्वावस्थानुगतैकसंवेदितृत्वमात्रस्वभावे प्रकाशात्मनि यस्मिन्स्थितमिति शेषः । नानात्वमेवेदं यद्वशादित्थं परिस्फुरतीत्यर्थः । तस्मै नम इति संबन्धः । अनेन समस्तसंवेद्यपदार्थसार्थैकसंवेदकत्वप्रतिपादनपरेण विशेषणेनेश्वरस्याऽऽत्मनः सर्वज्ञत्वलक्षणो धर्मः शक्तिविशेषो वा प्रतिपादितः । तदेतदिहैवोक्तम् सर्वज्ञमेकमात्मानं व्यपदिशता भगवता—

' सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ' इत्यादिना । तथा ' मत्स्थानि सर्वभूतानि ' इत्यादिना च । एतेन च नानाज्ञातृवादः क्षणिके ज्ञान एव ज्ञातृभ्रमवादः तथा चैतन्यविशिष्टे शरीर एव ज्ञातृवादो निरस्तः ।

नन्वस्तु नाम कश्चिदेकः सर्वज्ञो येन संवेद्यमानमिदं सर्वमवतिष्ठते । किंतु यदिदं सर्वं तेन संवेद्यते तत्कुतो जातं कस्तस्य कर्तेति संशयनिरासाय तस्यव सर्वकर्तृत्वप्रतिपादनार्थं विशेषणमाह—यतः सर्वमिति । यतो यस्मादेकस्मात्कर्तुः सर्वमिदं कार्यं प्रभवतीति शेषः । अनेन वक्ष्यमाणया युक्त्यैकस्य चोक्तस्य तत्त्वस्य सर्वकर्तृत्वं प्रतिपादितम् । तथा चेहैवोक्तं भगवता ' मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ' इत्यादिना । तथा ' न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ' इत्यादिना च । तथा भगवदनुग्रहोन्मिषितदिव्यदृग्दृष्टवैश्वरूप्यपरामर्शप्रथितपरवाचः सव्यसाचिनो वचनादपि—' नान्योऽस्ति कर्ता जगतस्त्वमेको धाता विधाता च विभुर्भवश्च ' इत्यादिनाऽपि च । एतेन सर्वज्ञस्याकर्तृत्ववादोऽपि निरस्तः ।

ननु सर्वकर्ता यदिदं करोति तत्किमुपादाय करोतीत्याशङ्कां निरसितुं तस्य निरुपादानं सर्वकर्तृत्वं प्रतिपादयितुमन्यद्विशेषणमाह— यः सर्वमिति । सर्वत्वेन नानाभावभेदात्मना प्रसृतमपीदं कार्यं य एव । यत उक्ततत्त्वलक्षणाद्वस्तुनो

१ राना १·२ °भाग°.

न व्यतिरिक्तमित्यर्थः । तस्मै नमः । अनेन स्वेच्छामात्रव्यतिरिक्तोपादान-रूपवस्त्वन्तरानिरपेक्षत्वमस्य प्रतिपादितम् । उक्तं चैतदर्जुनोक्त्यैवेह—' कर्ताऽसि सर्वस्य यतः स्वयं वै विभो ततः सर्वमिदं त्वमेव ' इत्यादि । एतेन च मायाप्रकृत्याद्युपादानाधीनकर्तृत्ववादो निरस्तः [१]।

ननु भवतु नामैवं निरुपादानमस्य कर्तृत्वम् । किंतु यदिदं कार्यमित्थं पर-स्परविलक्षणभङ्गुरभावभेदात्मनावभासते तस्य रूपविक्रियां कस्मान्न करोती-त्याह—सर्वतश्च य इति । सर्वस्मिन्वेद्ये वस्तुनि य एवैकः स्फुरति तस्मै नम इति । अनेन तदीयाद्भुतमायाशक्तिजनितव्यामोहावस्थायामेव सर्वमिदं कार्यं संसारिणा जनेन नानात्वेन प्रतिपाद्यते । परमकारणानुग्रहशक्त्युन्मीलितविद्या-त्मकदिव्यचक्षुषा तु प्रबुद्धेन निरूप्यमाणेऽस्मिन्सर्वस्मिन्कार्ये तदेकतत्त्वव्यतिरिक्तं न किंचित्प्रकाशत इति प्रतिपादितम् । यथा तत्तदर्थक्रियाविशिष्टेन बालादिना लोकेन विलोक्यमानाः कटककुण्डलकेयूरादयो गुणीभूतकाञ्चनमयस्वभावाः पर-स्परभिन्नत्वेनैव प्रतिभासन्ते । उत्पन्नतत्प्रकृतिजिज्ञासैर्निरूप्यमाणेषु तेषु सर्वेषु गुणीभूतकटकादिभिन्नव्यक्तिकाञ्चनमयैकस्वरूपव्यतिरिक्तं परमाणुमात्रमपि नोप-लभ्यते । तथैव मायादशायां भिन्नेष्वपि प्रबोधावस्थायां प्रत्यवमृष्यमाणेषु कार्येषु सर्वभावेषु विशुद्धसंविन्मात्रस्वभावताव्यतिरिक्तं न किंचिदुपलभ्यत इति वास्तवेन रूपेणेत्थमपि स्फुरदिदं सर्वं कार्यं कर्तुर्मनागपि स्वरूपविक्रियां नाऽऽवह-तीति प्रतिपादितम् । तदेतदिहैवोक्तम्—' अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमु-च्यते ' इत्यादिना । एतेनाऽऽत्मन औपाधिकशङ्कासंपर्कवादोऽप्यपाकृतः ।

नन्वेवं सत्यपि कार्ये निरुपाधिरयमात्मा भवतु नाम यदा पुनरिदं कार्यं नाऽऽर-भते तदाऽस्य किं रूपमित्याशङ्कानिराकरणाय सदा सर्वात्मकत्वप्रतिपादनार्थं विशेषणान्तरमाह—यश्च सर्वमयो नित्यमिति । पूर्वोक्तविशेषणप्रतिपादितेन प्रकारेण यो नित्यं सततमेव सर्वमयः सर्वात्मकस्तस्मै नमः । तस्मै नमः [२] इत्यनेन स्फुरत्यपि तस्मिन्ननन्तदेवताद्भुतरूपे कार्यकलापे परमनिर्मलसुसंपूर्णचिन्मात्रस्वरू-पापरिच्युतेरीश्वरस्याऽऽत्मनः प्रयोजनविचारवादोऽपि परिहृतः । यदुक्तम्—' न मे पार्थास्ति कर्तव्यं प्रवर्तेऽथ च कर्मणि ' । तथा ' न मां कर्माणि लिम्पन्ति न मे कर्मफलेष्वपि [३] । इति मां योऽभिजानाति कर्मभिर्न स बध्यते ' इत्याद्यपि च । सर्वमेकः सर्वज्ञः सर्वकर्ता निरुपादानो निरुपाधिर्नित्यं सर्वात्मकत्वेनावभासत

---

१ राशा १·२ स्वरूप°. २ राशा २ ' तस्मै नमः ' इति नास्ति । ३ राशा २ °फले स्पृहा.

इत्यनेन श्लोकेनाऽऽत्मन एव परमेश्वरस्य स्वरूपं यत्तत्र परमर्षिणा प्रतिपादितं तदेवेह हि[1] सिद्धान्ततया गर्भीकृतमिति वेदितव्यम् ।

तदयमेवंस्वभावो भगवानात्मा स्वेच्छामात्रोपकरणो योगीन्द्रसर्गवत्स्वप्नपदार्थवन्मनोराज्यविरच्यमानविचित्रभावाभासवद्वाऽनन्यसाधारणनिरतिशयक्रीडामात्रप्रयोजनो यदिदमत्यद्भुतं जगच्चित्रमुल्लिखति तत्र तदिच्छयैव नियमिता प्रक्रियेयं प्रकरणेऽस्मिन्गर्भीकृतेत्यपि वेदितव्यम् । तथा हि—स्वेच्छामात्राधीनकर्तृत्वात्तस्यैव परस्य तत्त्वस्य मुख्यया वृत्त्या वेद्यतावभासनमात्रेण जगतः कारणत्वं व्यवस्थितम् । यदाह भगवानेव—'बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्' इत्यादि । तथा 'यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म संपद्यते तदा' । तथा 'अहं बीजप्रदः पिता' इति । तथा 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादि । ततस्तदीय एव यथाप्रतिपादितः स्वभावो वेद्यत्वमात्रसामान्यलक्षणं जगज्जडचेतनविभक्तस्थूलसूक्ष्मप्रकृत्यात्मकतया द्विधाऽवभासयति । यदाह—

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्'॥ इति ।

एतयोश्च प्रकृत्योर्जडात्मको यः स्थूलो भेदस्तमपि कारणात्मना कार्यात्मना च द्विधा स एव भगवानाभासयति । तत्र सर्वस्य वेद्यस्य वस्तुनः सुखाद्यात्मना पर्यवसितस्वरूपत्वात्सत्त्वादिगुणत्रयमयमेकं[2] सामान्यमनुगतत्वेन यदवस्थितं तदवान्तरकारणतयाऽवभासयति । यच्च महदादि पृथिव्यन्तमनुगम्य च[3] कार्यकारणकलापात्मकशरीरभावेन शब्दादिविषयभावेन च परिणतं तत्कार्यतयाऽवभासयति । यदुक्तं 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति । यश्च चेतनात्मको भेदस्तमप्यासुरसर्गतया दैवसर्गतया च द्विप्रकारं तावदवभासयति । यदुक्तम् 'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च' इत्यादि । तत्राऽऽसुरसर्गोऽधमोत्तमभेदेन द्विप्रकारः । तयोरत्यन्तन्यग्भूतसत्त्वरजस्कतमोमात्रबहलो म्लेच्छादिरूपो निकृष्ट आसुरः सर्गः । यं राक्षससंज्ञया वक्ष्यति । तदपेक्षया रजोलेशानुगततमःप्रधानो मनुष्यात्मकः किंचित्प्रकृष्टोऽपरः । यस्यैवं लक्षणमुक्तम्—

---

१ राशा १ ( पश्चाल्लिखितं ). २ 'हि' नास्ति. २ राना १·२ सत्त्वादित्रयमयम्. ३ राशा २ 'च' नास्ति.

'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥ '

इत्यादि 'प्रद्विषन्तोऽभ्यसूयकाः ' इत्यन्तम् । स्वक्रीडामपि यद्विषयामेवमाह भगवान्-

'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ' ॥ इति ।

एवं द्विप्रकारस्तावदासुरः सर्गः । दैवमपि सर्गं देवादिमनुष्यभेदेन द्विप्रकारं तावदवभासयति । तत्रापि देवाद्यात्मकः प्रकारो द्विविधः । एक इन्द्रादिदेवताविशेषात्मको यस्तत्तदधिकारनिवर्तनावधिस्तासु तासु क्रियासु नियुक्तः स्वाधिकारावसानं कालमतिवाह्य स्वाकारेण परिणमति । द्वितीयो मनुष्यत्वोपात्ततत्तद्यज्ञादिक्रियाफलभूतसुखमात्रानुभवमयं तेषु तेषु लोकान्तरेषु भोगमुपभुञ्जानः स्वकर्मफलावसानकालमतिवाह्य पुनः पुनः कर्मभूमिं प्रतिपद्यते । उभयरूपोऽप्ययं सत्त्वगुणप्रधानः । एवंगुणविशेषस्य तारतम्यादानन्त्याच्च सर्वसर्गभेदानामानन्त्यमवसेयम् । मनुष्यरूपोऽपि दैवः सर्गो द्विविधः । तत्रैकः सत्त्वलेशानुगतरजोगुणप्रधानो यः प्रवृत्तिमार्गोन्मुखत्वात्तत्त्वज्ञानानुन्मेषे सति, सत्त्वलेशानुगतरजोगुणवशात्त्रय्यादिशास्त्रचोदितयज्ञदानतपःप्रभृतिक्रियैकप्रधानः संसारमनुभवति । यस्य ज्ञानानर्हत्वादेवमुपक्रम्य लक्षणमुक्तम्-

'व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवः ।
क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति ॥

---

१ राशा १ प्रवणः. २ राशा १·२ ( प० लि० ) ज्ञानशून्यत्वात्.

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते '॥ इति ।

तथा क्रियामात्रनिर्दिष्टत्वमुद्दिश्योक्तम्—

'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते '॥ इति ।

तथा तान्प्रति स्वक्रीडामपि भगवाननेनैवाह । यत ईश्वरेच्छयैव ते तथा संसारितां संप्रत्यनुभवन्ति ।

द्वितीयो मनुष्यात्मको दैवः सर्गभेदो रजोलेशानुगतःसत्त्वप्रधानो यः प्रबलविकल्पानिलनिश्चलत्वात्कुलशैलस्थैर्याभ्यां पुरःसरीभ्यां भक्तिश्रद्धाभ्यामुत्सार्यमाणसंदेहादिघोरविघ्नाद्यावरणत्वादभिव्यञ्जितप्रत्यासन्नपरमेश्वरदर्शनमहोत्सव एव; एवंकृतलक्षणतयेह निर्दिष्टः ।

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।
दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहोऽनभिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥' इत्यादिना ।

तथाविध एव हि प्रारब्धप्रकरणप्रतिपाद्यपरमरहस्योपदेशविषयतयेह परिगृहीतः । यदाहोपदेश्यं प्रति[1]—

'इमं विवस्वते योगं प्रोक्तवानहमव्ययम्' ।

इत्याद्युपक्रम्य—

'स एवायं मया तेऽद्य योगः प्रोक्तः[2] पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं चैतदुत्तमम्' । इत्यादि ।

तथा—

'चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा' । इत्यादि ।

तथा प्रकरणपरिसमाप्तौ[3]—

---

१ राना १·२ 'तथा' नास्ति. २ राना २ 'प्रत्ययादि॰'. ३ राशा १ प्रति एवम्.

'सिद्धिं प्राप्तो यथा ब्रह्म समासेन निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ' ॥ इत्युपक्रम्य,
' समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति सोऽहं यश्चास्मि तत्त्वतः ' ॥ इति ।

श्रद्धादिविषयमाह—

' श्रद्धावाल्लँभते ज्ञानं संयतस्तत्परेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ' ॥ इति ।
' श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः ' । इति ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मत्प्रियाः ' ॥ इत्यादि च ।

इत्थं सर्गभेदेष्ववस्थितेष्वयं[1] समनन्तरप्रतिपादितो दैवसर्गभेदो मनुष्यात्मको यादृशस्योपदेशस्य विषयत्वेन परिगृहीतस्तस्य तावत्स्वरूपमुपक्षिप्यते । इह खलु प्रतिपादितस्वरूपस्य सर्वकर्तुः परमेश्वरस्य सततं कर्तृत्वा[2]विलोपात्क्रियाशक्त्य[3]विरहे सुव्यवस्थिते तन्मायावैभवोद्भावितभेदानामपि जीवानां परमार्थतस्तदात्मकत्वात्तद्वदेव क्रियाशक्त्यविरहः सर्वदैव स्थित इति ॥

## प्रथमोऽध्यायः ।

सर्वात्मनां कर्मणां परित्यागानुपपत्तेः, शास्त्रचोदितानां तेषां बन्धकत्वशक्तिप्रतिस्तम्भहेतु वक्ष्यमाणज्ञानसंस्कृतानामधिकारिदेशकालावस्थाद्यपेक्षं मुख्यकल्पानुकल्पक्रमेण यथाशक्ति यथाविधि चानुष्ठानमेव सकलस्योपदेशविषयभूतस्य जनस्य परमार्थस्वरूपसमापत्तिलक्षणमोक्षाधिगमहेतुरित्ययमिहोपदेशो विवक्षितः । अतश्च कस्यचिदप्यधिकारिणः कस्यांचिदप्यवस्थायां घोरस्यापि शास्त्रचोदितस्य कर्मणः परिहारानुपपत्तौ स्थितायां तादृशमेव घोरकर्माधिकृतमुक्तोपदेश्यलक्षणविशिष्टमर्जुनमुद्दिश्य भगवत्कर्तृकं रहस्यमिदमुपदेष्टुं मुनिपुंगवः प्रचक्रमे[4]—धर्मक्षेत्र इत्यादि किमकुर्वत संजयेत्यन्तम् ।

### धृतराष्ट्र उवाच ।

**धर्मक्षेत्रे कुरुक्षेत्रे सर्वक्षत्रसमागमे[1] ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥**

[ शांकरपाठः १—समवेता युयुत्सवः. ]

---

१ राना १·२ ' अवस्थितेषु ' नास्ति. २ राशा १·२ ( प० लि० ) ना २ °त्वानवलोपात्. ३ राशा १ ना २ शक्तिनित्याविरहे. ४ राशा १ ( प्रान्ते ) प्रक्रमते पाठः.

धृतराष्ट्रप्रश्नचोदितसंजयवाक्यानि । दृष्ट्वा तु पाण्डवानीकमित्यादितुमुलो व्यनुनादयादित्यन्तानि ।

संजय उवाच ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका[1]न्मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥
भवान्भीष्मश्च कर्णश्च कृपः शल्यो जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्ति[3]श्च वीर्यवान् ॥ ८ ॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणा नाना[4]युद्धविशारदाः ॥ ९ ॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥
अयने तु[5] सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥
तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
पाञ्चालश्च महेष्वासो द्रौपदेयाश्च पञ्च ये ।
सौद्रभश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयँत् ॥ १९ ॥

[ शांकरपाठः १—नायकाः. २—कृपश्च समितिंजयः. ३—°दत्तिस्तथैव च. ४—सर्वे युद्ध°. ५—°षु च. ६—द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते. ७—यन्. ]

परस्परवधाध्यवसायसंरब्धसकलकुरुपाण्डवसैन्यसमागतसुभटघोरसमरसंरम्भोद्योगसूचकत्वात्कर्मघोरत्वप्रतिपादनतात्पर्याणि निगदव्याख्यातानि ॥

तथा 'अथ व्यवस्थितान्दृष्ट्वा' इत्युपक्रम्य, संजयोक्तान्येवार्जुनवाक्यानि सैन्यनिरूपणोपक्रमाणि 'उभयोः सेनयोर्मध्ये' इत्यादीनि सुबोधानि । ततः संजयोक्तान्येव हृषीकेशवाक्यान्यपि स्फुटार्थान्येव ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते[१] ।
उभयोः सेनयोर्मध्ये[२] रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच ।

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
उभयोः[३] सेनयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥

[ शांकरपाठः १—पूर्वार्धानन्तरं 'अर्जुन उवाच' इत्यधिकम् । २—३—सेनयोरुभयोर्मध्ये. ]

ततस्तत्रापश्यदित्यादि, सीदमानोऽब्रवीदित्यन्तमर्जुनस्य पितृमातामहादिबन्धुवर्गदर्शनाक्रियात्मकं संजयवाक्यमपि व्यक्तार्थम् ॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥

तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।
कृपया परयाऽऽविष्टः सीदमानोऽब्रवीदिदम् ॥ २७ ॥

[ शांकरपाठः १—विषीदन्निदमब्रवीत्. ]

ततः प्रस्तुतोपदेशं प्रतिषेध्य तत्त्वाज्ञानसमुद्भूतपितृमातामहादिबन्धुवधपर्यवसायिसंग्रामकर्मविचिकित्सस्य करुणावेशविवशस्यार्जुनस्याधर्ममेव धर्मत्वेन व्यपदिशतो 'दृष्ट्वेमान्स्वजनान्' इत्यादीनि, 'तन्मे क्षेमतरम्'इत्यन्तानि मनुष्यस्वभावसुलभमिथ्याज्ञानप्रतिपादकवाक्यानि निगदव्याख्यातान्येव ॥

अर्जुन उवाच ।

दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् ।
सीदन्ति सर्वगात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २८ ॥
स्रंसते गाण्डीवं हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ २९ ॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३० ॥
न काङ्क्षे विजयं कृष्ण न राज्यं न सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३१ ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥३२॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥३३॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥ ३४ ॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३५ ॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३६ ॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं संपश्यद्भिर्जनार्दन ॥ ३८ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥

[ शांकरपाठाः १–दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्. २–मम गा°. ३–गाण्डीवं स्रंसते. ४–न च राज्यं. ५–६–त इमेऽवस्थिता युद्धे. ७–धनानि च. ८–किं नु. ९–प्रपश्य°. ]

ततश्चैवमुक्त्वेत्यादि संजयवाक्यमपि गतार्थमेव ॥

संजय उवाच ।

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
उत्सृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥

॥ इति श्रीभगवद्गीतासूपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

[ शांकरपाठः १–विसृज्य. ]

इति तात्पर्यतः प्रथमोऽध्यायो व्याख्यातो, न तु गौरवभयात्प्रतिपाद्यते ॥

एवमयं प्रथमोऽध्यायो यथोपक्रान्त उपदेश्यभगवत्प्रवृत्तिहेत्वर्जुनविषादप्रतिपादनार्थः समाप्तः ॥

योग्यानुग्रहनीतिनाटकविधिप्रस्तावनेयं प्रभो-
गीतासु प्रथमस्य या विरचना व्याख्यास्यतां ध्यायताम्।
दिव्यास्वादसुधार्द्रवस्तुविकसत्कौतूहलानां मनः
सभ्यानामवधानमात्रनिबिडं बध्नातु बद्धादरम् ॥

इति श्रीराजानकरामकण्ठविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि
भगद्गीताविवरणे प्रथमोऽध्यायः ॥ १ ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

श्रीगणेशाय नमः[1]। अथैवं व्यामोहवशविसंस्थुलमर्जुनं प्रति[2] संजातानुजिघृक्षस्य भगवतः परमार्थोपदेशप्रक्रमपिशुनानि वाक्यान्युपक्षेप्तुं

**संजय उवाच।**

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम्।**
**सीदमानमिदं वाक्यमुवाच मधुसूदनः॥ १ ॥**

[ शांकरपाठः १–विषीदन्तम्. ]

स्पष्टोऽर्थः[3] ॥

यदुवाच भगवांस्तदाह–

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

[ शांकरपाठः १–श्लोकात्पूर्वं 'श्रीभगवानुवाच' इत्यधिकम्. ]

इदमेवंविधं प्रस्तुतावश्यकरणीयस्वकर्मकरणावसादकारणव्यामोहात्मकं कश्मलं पापं त्वां भवन्तं कुतः कस्मान्निमित्ताद्विषमे संकटे उपस्थितमागतम्। कीदृशं कश्मलमनार्यजुष्टम्। अशिष्टसेवितम्। अत एवास्वर्ग्यं स्वर्गप्राप्तिप्रातिकूलम्। अकीर्तिकरमपवादसंपादकम्। इति पदसंगतिः स्फुटैव। अर्थविशेषं त्विमं गर्भीकृत्य भगवानेतदाह। अर्जुनशब्दोऽत्र न संज्ञि[4]मात्रसंबोधनार्थः। किं तु तद्गतप्रकृष्टा-

---

१ राशा १–( अस्य स्थाने ) श्रीगणपतये नमः; शा २–नास्ति; ना २–ॐ श्री°. २ राना २–प्रसंजाता. ३ राशा १–'श्लोकः' इत्यधिकम्. ४ राना २–संज्ञा°.

भिजनप्रज्ञापराक्रमादिगुणगरिमप्रत्यायनार्थः। त्वच्छब्दोऽपि परमार्थतो मोहादिमलविविक्तस्वभावस्याऽऽत्मनः। प्रत्यायकत्वेन प्रयुक्तः। तेन वस्तुतो यस्त्वं तस्यानेन व्यामोहकलङ्केन संबन्धः प्रकाशस्य तमसेवात्यन्तमसंभाव्य इति कुतस्त्वामिदमुपस्थितमित्यनेन वाक्येन गर्भीकृतम्। अत एव चैतत्पापमनार्यैरतत्त्वविद्भिरसाधुभिः सेवितम्। इत्याद्युक्तम्॥

अनेनैव क्रमेणैतद्विशेषयितुमाह।

**मा क्लैब्यं गच्छ कौन्तेय नैतत्त्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप॥ ३॥**

[ शांकरपाठः। १-क्लैब्यं मा स्म गमः पार्थ. ]

हे परंतप शत्रुजनज्वरजनक क्लैब्यं कापुरुषत्वं मा गः। यतस्त्वयि जगद्विख्यातविक्रमादिगुणमहिम्नि नैतदेवंविधमल्पसत्त्वजनोचितमुपपद्यते। तस्मात्क्षुद्रमसारं हृदयदौर्बल्यमाशयकार्श्यं विहायोत्तिष्ठ। स्वप्रस्तुते श्लाध्ये संग्रामकर्मण्युद्यमं गृह्णीष्व। अत्रापि त्वच्छब्दस्य पूर्वोक्तार्थगर्भीकारेण प्रयोगो मन्तव्यः। क्लैब्यशब्दस्य च विवेकशून्यत्वगर्भीकारेण, इत्यन्यदपि विशेषणमेवं योजनीयमिति॥

अथ संप्रत्यनाविर्भूतात्मानात्मस्वरूपविवेचनक्षमप्रज्ञत्वाद्देहादिकमेवाऽऽत्मत्वेन प्रतिपद्यमानो गर्वादिवधमहापातकपर्यवसायि समरानुष्ठानं दोषोद्भावनेन प्रतिषेद्धुम्॥

**अर्जुन उवाच।**

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन॥ ४॥**

मधुसूदन, कथं केन शास्त्रोपपन्नेन प्रकारेण भीष्मं पितामहं गुरुं द्रोणं ब्राह्मणं संगरे सायकैः प्रतीपं संप्रहारेण योजयिष्यामि। यदि वा प्रतिशब्देन द्वितीया व्याख्येया। युधिश्चाकर्मक एव। परस्मैपदमत्र च्छान्दसम्। अन्यत्राप्येवं द्रष्टव्यम्। यतस्तौ विद्याभिधानधनप्रदानपरमोपकारिणौ प्राणैरपि परितोषणीयहृदयौ पूजनमेवार्हतः॥

---

१ राना १·२-श्लाघ्य॑. २ राशा १-द्रोणं च गुरुं.

अत्रैतेन कथमितिप्रकारप्रश्नेन प्रस्तुतरणपरिजिहीर्षायाः कश्मलत्वं भगवतोपन्यस्तं धर्मविरोधादनुपपन्नमेवेत्यभिप्रायः सूचितोऽर्जुनेन । यत आह,

गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयश्चर्तुं भैक्ष्यमपीह लोके ।
नं त्वर्थकामांस्तु गुरूनिहत्य
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥

[ शांकरपाठाः १–श्रेयो भोक्तुं. २–हत्वाऽर्थ°. ३–गुरूनिहैव. ]

यस्मात्संग्रामपरिहारेण गुरूणां वधः परिहृतो भवति । तांश्च अहत्वा भिक्षान्नमप्यभ्यवहर्तुं प्रशस्यं स्यान्मम । न पुनरहं धर्मलिप्सुस्तान्व्यापाद्य तच्छोणितोपचितानिष्टान्विषयान्समश्नीयाम् ॥

किं च,

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्ते नः स्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

[ शांकरपाठः १–तेऽवस्थिताः. ]

एतदेव न जानीमः । द्वयोर्मध्यात्कतरद्वस्त्वस्माकं प्रयोजनवत्तया गरीयो गुरुतरं स्यात् । कयोस्तयोर्वस्तुनोरित्याह । यदि वा वयं तान्प्रतिद्वंद्विनो जयेम तिरस्कुर्वीमहि । यदि वाऽस्मांस्ते तिरस्कुर्वीरन् । एतयोरेकतरस्य गरीयस्त्वापरिज्ञाने कारणमाह–यस्माद्यान्कुरून्व्यापाद्य वयं बन्धुविरहात्प्राणानेव धारयितुं नेच्छामः । ते धृतराष्ट्रपुत्रा भ्रातरोऽस्माकं पुरः स्थिताः । किमुक्तं भवति । यदि तावदस्माभिः कुरवो हताः स्युस्तदस्य पक्षस्य का गरीयस्ता दुःखमात्रफलत्वात् । एवं चार्थादिदमुक्तं स्यात् । यदि तेऽस्माञ्जयेयुः स पक्षो गरीयान्भवेदिति ॥

अथ समरकर्मानुष्ठानं धर्मसुखबाधकत्वात्परिहार्यतया प्रतिपाद्यापि स्वात्मनि वैदुष्याभिमानदोषमाशङ्कमानो भगवति संशयानमात्मानमावेदयन्नाह,

---

१ राशा १–°शस्तं ( प्रान्ते, °स्यं ). २ राशा १·२–धन°.

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

[ शांकरपाठः १–त्वाम्. ]

हे भगवन्नहं कार्पण्यदोषेण बन्धुहिंसाजनितेन दैन्येनोपहतस्वभावः प्रध्वंसितक्षत्त्रधर्मा, अत एव धर्मेषु शास्त्रोदितेष्वाचारेषु संमूढचेताः संशयितमनस्को भवन्तं पृच्छामि । अतश्च यन्मे वस्तु श्रेयः प्रशस्यतरं स्यात्तन्निश्चितं निःसंदेहमादिश । यतः शिष्यः शासनीयस्तवाहम् । एतेन प्रपन्नमुपपन्नं सन्तं गुरुर्भूत्वा मां शाधि व्युत्पादयेति ॥

किं च,

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाऽऽधिपत्यम् ॥ ८ ॥

यस्मात्तमहं कंचित्त्वां वर्जयित्वा न तर्कयामि यो मम शोकं शोचनमपसारयेत् । कीदृशमिन्द्रियाणां बाह्याभ्यन्तराणां करणानाम् । उच्छोषणं संतापकम् । किं कृत्वा । शोचनं निर्विपक्षं स्फीतं भूपालाधिपत्यं लब्ध्वाऽपि । अथवाऽत्यल्पमिदमुच्यते । देवानामप्यैश्वर्यमधिगम्य मम कार्पण्यदोषोपहतस्वभावस्य शोचनमेव स्यात् । राज्यं सुराधिपत्यं चावाप्य यच्छोचनं मम स्यात्तन्निवारकं कंचिदपि न पश्यामीति संबन्धः । अतो मां शाधीति । एवं शोचनक्रियापेक्षमवाप्तिक्रियायाः पौर्वकाल्यमवसेयम् । न त्वपनोदनक्रियापेक्षम् । अपनोदनक्रियाया अवाप्तिक्रियायाश्च कर्तृकत्वं स्यात् । तथा हि सति भिन्नकर्तृकत्वाच्छब्ददोषः । समन्वयाभावाच्चार्थदोषो दुर्निवारः स्यादिति ॥

अथ युद्धनिषेधनिश्चितबुद्धित्वं धनंजयस्य प्रतिपादयितुम्—

संजय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्यामीति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये सीदमानमिदं वचः ॥ १० ॥

[ शांकरपाठौ १–योत्स्य इति. २–विषीदन्तम्. श्लोकानन्तरं ‘ श्रीभगवानुवाच ’ इत्यधिकम् ] ।

श्लोकद्वयमेतद्गतार्थम् । किंतु हृषीकाणीन्द्रियाणि तेषामीशो नियन्ता भगवान् । गुडाकां निन्द्रामाचक्षते तस्या ईशस्तयाऽनभिभावनीय इत्यर्जुनविशेषणं व्याख्येयमिति ॥

एवमविद्याख्यांमोहपरित्यक्तसंग्रामाध्यवसायमर्जुनं सम्यग्ज्ञानोपदेशेनात्र स्वकर्मणि प्रवर्तयिषुर्भगवानुवाच ।

त्वं मानुष्येणोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञः ।
कृपागृहीतः समवेक्ष्य बन्धू-
नभिप्रपन्नान्मुखमन्तकस्य ॥ ११ ॥

[एष श्लोकः शां० पाठे नास्ति. ]

उपदेशाभावात्संमत्यनुदितदैवसर्गोचितमज्ञस्त्वं मानुष्येण मनुष्यभावेन संशयविपर्ययाज्ञानबहुलेनोपहतान्तरात्मा मत्यभिज्ञाभावात्तिरस्कृतसत्यात्मस्वरूपो, वर्तस इति शेषः । यस्माद्विषादेन शोकजेनानध्यवसायेन मोहेन च विपर्ययमत्ययहेतुना वैचित्र्येण यस्तेऽभिभवः सामर्थ्यभङ्गः कृतः, तस्माद्धेतोर्विसंज्ञो विगतवक्ष्यमाणसम्यग्ज्ञानोऽसि । कुत एतदवगतमित्याह । यतस्त्वं दुर्निवारप्रसरस्य कृतान्तस्य वदने प्रविष्टान्बान्धवान्निरूप्य कृपागृहीतो गृहीतकृपः स्वीकृतकरुणः संवृत्तः । आहिताग्न्यादेराकृतिगणत्वाद्गृहीतशब्दस्य पूर्वनिपाताभावोऽवसेयः । तेन बहुव्रीहिरेवायं न तत्पुरुषः । तस्मिन्सति भिन्नकर्तृत्वप्रसङ्गः । अनेन श्लोकेन वक्ष्यमाणस्याऽऽत्मज्ञानस्य प्रथमप्रतिपाद्यं शरीरशरीरिव्यतिरेकज्ञानमासूत्रितम् ।

यत एकान्तविनश्वरशरीरसंनिवेशविशेषबद्धबन्धुबुद्धित्वमिदं शरीरिस्वरूपापरामर्शनिबन्धनम् । अत एवाह-

अशोच्याननुशोचंस्त्वं प्राज्ञवन्नाभिभाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ १२ ॥

[ शांकरपाठः १-अन्वशोचस्त्वं प्रज्ञावादांश्च भा°. ]

---

१ रामा १-°सर्गोदित°. २-रामा २-°बाहुल्येन. ३ राशा १-( प्रान्ते ) गृहीता कृपा येन स कृपागृहीतः । बहुव्रीहिः, न तत्पुरुषः कृपया गृहीतः । यदि कृपया गृहीत इति स्यात्, तदा कृपा कर्त्री(?)समवेक्षणे तत्त्वमिति कर्ता भिन्नकर्तृत्वं स्यात.

त्वं ज्ञातिगुर्वादिवधपर्यवसायिनः समरव्यापारस्याधर्म्यत्वदुःखोदर्कत्वादुपन्यस्य लोकद्वयबाधकत्वं प्राज्ञवद्बुद्धिमानिव न जल्पसि। नैषा नैष्ठिकी बुद्धिः, शरीरशरीरिविवेकज्ञानाभावजनिता विमतिरेवैषा। न ह्येते गुर्वादयोऽवश्यं विनाशिशरीरमात्रात्मकाः। किंतु नित्याः शरीरिण एते तद्व्यतिरिक्ताः। अत एव किं कुर्वंस्त्वं प्राज्ञवन्नाभिभाषसे। अशोच्यान् विनाशाभावात्परमार्थतश्च दुःखयोगाभावादशोचनीयान् परिदेवनस्याविषयभूताननुशोचन् शोकविषयत्वेन भावयन्। यतश्चैते नित्या अत एव तान् गतासूंस्तेभ्यस्तेभ्यः शरीरेभ्य उत्क्रान्तप्राणान्मृतव्यपदेशभाजस्तथा चागतासूंस्तेषु तेषु शरीरेष्ववस्थितप्राणत्वाज्जीवद्व्यपदेशभाजः। पण्डिता विज्ञातपरमार्था नानुशोचन्ति॥

तथा च जीवावस्थायामेवैषां तावन्नित्यत्वं प्रतिपादयितुमाह–

**न ह्येवाहं जातु नाऽऽसं न त्वं नामी[१] जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमितः[२] परम्॥ १३॥**

[ शांकरपाठः १–त्वेवाहं. २–नेमे. ३–वयमतः. ]

यं मां वर्तमानं मन्यसे सोऽहं जातु नाऽऽसम्। नञ्द्वयेन पूर्वकालमेव प्रकृतं[३] प्रतिपादयति। नाहमभूत्वा भवामि, किंतु प्रागपि भूत्वा, इदानीमपि भवामि। यथाऽहं तथा त्वमपि संप्रति वर्तमानत्वेन प्रतिभासमानः पूर्वमप्यासीरेव, न त्वभूत्वा भवसि। यथा च त्वमेवमिमेऽपि वर्तमानत्वेन प्रतिभासमानाः सर्वे राजानः पूर्वमासन्नेव। न पुनरभूत्वा भाव एषाम्। न च[४] सर्व एव वयमितः परमस्माच्छरीरादनन्तरं न भविष्यामः। भविष्याम एवेत्यनेन युष्मदस्मदादिपरिभेदेन व्यवस्थितस्य जीवलोकस्य कालत्रयेऽपि सत्तासंभवान्नित्यत्वं प्रतिजानीते। आसमित्यादि तु भूतादिक्रियाकर्तृत्वव्यपदेशो विनाशधर्मकशरीरसामानाधिकरण्यभ्रमकृतः। न तु नित्यस्य भूतादिव्यपदेश उपपद्यत इति॥

ननु देहनिष्ठस्य जीवस्य कर्तृत्वज्ञातृत्वाद्युपलम्भस्तत्कथं तद्विनाशे तस्य नित्यत्वं स्यादिति दुराशङ्कां प्रत्यक्षोपलभ्य निदर्शनप्रतिपादनेन परिहर्तुमाह–

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ १४॥**

---

१ राना १–संवर्त°. २ राना २–कालभावमेव. ३ राना २–प्राकृतं. ४ राना १.२–‘च’ नास्ति.

अस्मिन्वर्तमानबुद्ध्या परिगृहीते देहे यथाऽस्य देहिनस्तत्संवेदितुरात्मनः कौमारं कुमारभावो बाल्यं, तथा यौवनं तारुण्यं, तथा जरा वृद्धभाव इत्यवस्थात्रयमनित्यं तेन देहिना भूतादित्वेनानुबन्धीयमानं संबध्यते । तथा तेनैव निदर्शनेनेतो देहादन्यस्य प्राप्तिस्तस्याऽऽत्मनो देहद्वयव्यापकस्य स्थितैव । तत्र तत्त्वज्ञो मोहं न गच्छति, शरीरविनाशे शरीरिणमविनष्टं मन्यते, नित्यमेव तमवगच्छति । किमनेनोक्तं भवति । यथा बाल्याद्यवस्थाविनाशेन न कश्चिदात्मविनाशं मन्यते, किंतु सर्वः कश्चित्प्रतिपन्नां बाल्याद्यवस्थामतीतानागतत्वेनानुसंदधानः प्रतिपत्तारमात्मानमेकं स्थितं मन्यते । तथैव नानादेहसंबन्धमतीतानागतत्वेनानुसंदधानः प्रबुद्धो नित्यमात्मानमवगच्छति । एताभिश्च स्थूलाभिः कौमाराद्यवस्थाभिस्तद्गता जागराद्योऽप्यवस्थाः प्रतिपादिता वेदितव्याः। तथा हि—तास्वन्योन्यभिन्नरूपासु प्रवर्तमानासूत्पादविनाशवतीषूपलब्धृत्वेनैकेन लक्षणेन युक्तस्ताभ्योऽत्यन्तविलक्षणस्वभाव आत्मा सर्वस्यैव संवेदनसिद्धो व्यापकत्वेन व्यवस्थितः[3] । यथैकस्मिन्देहे परस्परविविक्तलक्षण[4]स्वभावजागराद्यवस्थाविशेषसंवेदितत्वमात्रैकलक्षणविशेषणस्य सुसूक्ष्मस्याप्यभावादेक एव सिद्धः ॥

तदनेन मायैकीकृतदेहदेहिव्यतिरेकोपपत्तिप्रतिपादनद्वारेण पारमार्थिकमात्माद्वैतमुपक्रम्येदानीं यथाप्रतिपादित आत्मस्वरूपे, येन हेतुना सर्वजन्तवो मुह्यन्ति, अन्यथैव तं प्रतिपद्यन्ते, तत्प्रतिपादनपूर्वं तत्प्रतिषेधोपायमुपदेष्टुमाह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १५ ॥**

मीयन्त एताभिरिति कृत्वा देहत्वविशिष्टस्य प्रमातुः प्रमेयार्थपरिच्छेदसाधनं मात्रा इन्द्रियशक्तय उच्यन्ते । स्पृश्यन्ते वेद्यतया परामृश्यन्त इति स्पर्शा इन्द्रियार्थास्ते च द्विप्रकाराः । श्रोत्रादिबाह्येन्द्रियस्पृश्यमानाः शब्दादिरूपाः, केवलान्तःकरणस्पृश्यमानाः सुखादिरूपाः । तुशब्दो व्यतिरेके । परमार्थतो नित्यस्याऽऽत्मनो मात्रास्पर्शाः पुनः शीतोष्णसुखदुःखदा इति संबन्धः । ते च शरीरेण संबध्यमानाः शीतमनुभवाम्युष्णमनुभवामीति प्रत्ययं ददति । अन्तःकरणे संबध्यमानाः सुखमनुभवामि दुःखमनुभवामीति प्रत्ययं ददति । ततश्च शीतोष्णसुखदुःखादिष्वात्मधर्ममारोपयन्त उत्पादविनाशस्वभावत्वादनित्या आत्म-

१ राना १·२–बाला°. २ राना १–' अनु— ' नास्ति. ३ राना २–°स्थितश्च; राशा १–स्थितः । ततश्च. ४ राना २–°लक्षणिक°.

न्यनित्यताभ्रममुत्पादयन्तः सर्वप्राणभृतो मोहयन्तीत्यर्थः। यतश्च ते परमार्थतः प्रतिक्षणविनाशिनः। ततः प्रोदितोपपत्त्या नित्यमात्मानं प्रत्यवमृशंस्तांस्तितिक्षस्व सहस्व। तत्समर्पितेनानित्यसुखादिस्पर्शमात्रेण नित्यनिर्विकारस्वात्मावष्टम्भप्रतिष्ठां मा त्याक्षीः। यथा त्रैलोक्यैकवीरेण त्वया दर्पोद्धुरमापतन्तः प्रतिद्वंद्विनो निष्प्रकम्पनिजपौरुषपरिस्पन्दसुस्थितेन मनागप्यन्तरनुपजातविक्रियेण सकृत्सावज्ञमुद्व्यूढतरतया सोढास्तथैव निसर्गनिर्विकारे[१] स्वात्मन्यहंकारमारोप्य तेऽपि स्पर्शाख्याः प्रतिद्वंद्विनः प्रकृतिनिःसारतत्स्वरूपनिरूपणमात्रेण सह्यन्ताम्। यथास्थितवस्तुविमर्शाभावमात्रजनितोऽयं व्यामोहः। यदात्मनि देहबुद्ध्यादिधर्मारोपेण कृशोऽहं पूर्णोऽहं सुखितोऽहं दुःखितोऽहमित्यादयः प्रत्ययास्तत्सामानाधिकरण्येन प्रादुर्भवन्ति। तत्त्वतः पुनस्ते स्वात्मैकेनावस्थिता बहिरन्तःकरणशक्तिभिः केवलं स्पृश्यन्ते, न तु तावता कांचिदप्यात्मनो विकारकणिकां संपादयितुं क्षमाः। स्फटिकदर्पणोपमो ह्ययमात्मा नीलपीताद्याभासतुल्याभिः स्फुरन्तीभिरपि सुखादिप्रतीतिभिर्नान्यथा कर्तुं शक्यते। यथोक्तम्-

आसक्तिसामर्थ्यवशाद्विचित्राः पदार्थजातस्य विभान्ति भासाः।
प्रपद्यते[२] तन्न तु जातु धीमान्विकारमादर्श इव प्रसन्नः॥ इति।

अत एव मात्रास्पर्शशब्देनेन्द्रियार्थव्यपदेशः कृतः। तदनेन श्लोकेन सर्वसंवेद्यभङ्गुरस्वभावकौमारजागराद्यवस्थावत्सुखाद्यवस्थास्वपि सर्वप्राणिगतासु संवेदकत्वेनैवैकेन युक्तो नित्यो व्यापक एक एवाऽऽत्मा प्रतिपादितः। न चैतावतैकस्य सुखित्वादौ सति सर्वसुखित्वादिप्रसंगः। यतो मायोद्भाविताऩ्योन्यभेदाभासा एव प्रमातारः सततं परस्परविभक्तमात्मानमवगच्छन्ति। न तु पारमार्थिकः परः प्रमाता। तत्र ह्येकस्मिन्सर्वदा सर्वत्र सर्वथा निर्विशेषस्वभावे सर्वमिदं प्रतिबद्धम्। यथोक्तं, तं प्रपद्ये प्रजासृजमिति उपक्रम्य-

यस्मिन्नित्ये तते तन्तौ दृढे संव्यवतिष्ठति।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि॥ इति।

तदेवंस्वभावे सत्ये स्वात्मनि सुव्यवस्थितत्वमुक्तलक्षणमिति प्रतिपादयितुमाह-

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥ १६॥**

---

१ राना २-°रे सत्त्वे. २ राशा १-निकटसुखा°. ३ राशा १-°तेऽन्तर्न तु.

यं पुरुषमुक्तलक्षणज्ञानैकतानर्निर्विकल्पप्रज्ञैकतया मुमुक्षुवस्थायां वर्तमानमत एव धीरं, परिज्ञातसदसत्पदार्थमत एव च समदुःखसुखं, समे मनोवेद्यत्वमात्रेणैकेन रूपेण स्पृश्यमाने तुल्ये दुःखसुखे यस्य तथाविधं, घटादिवद्वेद्यत्वमात्रविशिष्टरूपैः सुखादिभिरनुपजनितविकारं सन्तमेते जन्मविनाशधर्मयोगादनित्याः सुखितोऽहमित्यादिविपर्ययप्रत्ययरूपाः शब्दादयो न व्यथयन्ति तद्विविक्तवेदकैकस्वभावात्सत्यादात्मनो न प्रच्यावयन्ति । सोऽमृतत्वाय परमात्मसमापत्तिवशादविनाशत्वाय कल्पते संपद्यते मुक्तो भवतीत्यर्थः ॥

अथोपपच्युपन्यासपूर्वमात्मनो वेदकैकस्वभावस्य पारमार्थिकीं सत्तां तथा तत्प्रमेयस्वरूपस्य देहादेर्श्च जन्मविनाशवतस्तदभावं प्रतिपादयितुमाह—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १७ ॥

इह स्वभावादेव यदविद्यमानं वस्तु तस्यासतो भावः सत्ता नास्ति । तथैव स्वभावतः सतो नित्यस्याभावो विनाशो नास्ति । एतयोः सदसतोः प्रकाशतमसोरिवात्यन्तपरस्परविरोधात् । किंत्वेतयोर्द्वयोरपि तत्त्वविद्भिः साक्षात्कृतपरमार्थैरन्तो निष्ठा निश्चयो दृष्टो विज्ञातः । न त्वतत्त्वविद्भिः । ते ह्यचिन्त्याद्भुतस्वभावपरमेश्वरमायाशक्त्युद्भावितविषयप्रत्ययतया सत्यमात्मानमप्रत्यवमृष्यन्त एवासदनित्यत्वादिना वास्तवसद्भावरहितं देहादिवस्त्विदंतया संवेद्यमानत्वात्सत्त्वेन प्रतिपद्यन्ते । परमार्थतस्तु सन्नित्यमात्मतत्त्वमप्रत्यभिज्ञायमानत्वादसत्त्वेन प्रतिपद्यन्ते ॥

ततश्च तत्त्वतः किं सत्किमसदित्युपदेष्टुमाह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १८ ॥

एतयोः सदसतोर्मध्यात्तदविनाशि विनाशधर्मरहितत्वात्परमार्थतः सद्विद्धि जानीहि । किं तद् येनैकेनेदमन्योन्यभिन्नस्वभावमयं सर्वं चराचरवस्तुजातं ततम् । कर्तृत्वविवक्षया विस्फारितम् । ज्ञातृत्वविवक्षया व्याप्तम् । एक एव हि परमार्थतः सर्वकर्ता सर्वज्ञः परमेश्वरः परमात्मा । तदवभासितान्योन्यभेदानां तु क्षेत्रज्ञानां देहादिकमेवाऽऽत्मत्वेन प्रतिपद्यमानानां परिमितविषयं कर्तृत्वं ज्ञत्वं च न वास्तवम् ।

१ राशा १—प्रत्ययहेतवः श°. २ राशा १—परमार्थसत्परवशात्. ३ राना १—°देश्चोत्पादविनाश°. ४ राशा १·२—°भिन्नावभासमयं. ५ राना २—( उपरि )—शा २ (प्रान्ते)—विस्ता°. ६ राशा १·२ (प्रान्ते)—वा व्याप्तम्. ७ राशा १—ज्ञातृत्वम्.

एवमस्याऽऽत्मतत्त्वाभिधानस्य वस्तुनोऽव्ययस्यामायस्य देशकालाद्यवच्छेदरहितत्वादक्षयस्वभावस्य तद्विलक्षणः कार्यज्ञेयरूपो न किंचिदर्थो विनाशमभावं कर्तुमर्हति ॥

'न हि' नित्यस्य सर्वथाऽनवच्छिन्नमहिम्नोऽर्थस्यानित्योऽवच्छेद्यः पदार्थो विनाशाय प्रभवतीति सत्स्वरूपं प्रतिपाद्यासत्स्वरूपं प्रतिपादयितुमाह-

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १९ ॥

सर्वशरीरेषु सर्वावस्थासु चाविलुप्तोपलब्धृत्वमात्रैकलक्षणत्वान्नित्याविनाशिनस्तथा देहादिभिरवच्छेत्तुमशक्यत्वादप्रमेयस्येयत्तादिकैलनाविषयभूतस्य शरीरिण आत्मन इमे देहास्तद्विलक्षणा अन्योन्यभिन्नागमापायिधर्मकत्वाद्विनाशिनो विनश्वरस्वभावत्वात् । तथा देशकालादिपरिच्छेद्यत्वाद् अन्तवन्त इयत्तादिकलनाविषयभूता वेद्यत्वमात्रेण संबद्धा इति देहरूपस्य वस्तुनः परमार्थविनश्वरस्य ज्ञेयत्वमात्रादिना हेतुनाऽऽत्मसंबद्धस्य विनाशे सत्यात्मनोऽपि विनाशप्रतिपत्तिरविद्याविजृम्भितम् । तच्च त्वयि नोपपन्नम् । अतो यथाप्रतिपादितात्मतत्त्वप्रतिष्ठाहंकारो वक्ष्यमाणयोपपत्त्या दुष्परिहरं स्वकर्मानुतिष्ठन्युध्यस्व प्रस्तुतं समरकर्म समाचरेति ॥

अथ युद्धं नाम परहननरूपतया हिंसात्मकं कर्म, तत्कथमहं गुरुज्ञात्यादिवधलक्षणे घोरे कर्मणि प्रवर्तयेति यन्मन्यसे तदात्मस्वरूपानभिज्ञत्वजनितमोहविलसितमेव । यतः-

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २० ॥

यो मायावशादत्यन्तनिर्विकारपरमार्थसन्तमात्मानमप्रत्यवमृशंस्तद्विलक्षणं देहमेवाऽऽत्मत्वेन मन्यमानो हननादिदेहधर्माधिरोपणेनैवं सत्यमात्मानं हन्तारं हननक्रियाकर्तारं वेत्ति प्रतिपद्यते । यश्चैनमेव प्रतिपादितलक्षणमविनाशिनमात्मानं विनाशलक्षणदेहधर्माध्यारोपणेन हतं हिंसितं मन्यते। तावुभावपि मोहवशादात्मन्यनात्माभिमानग्रहग्रस्तसम्यग्ज्ञानौ न जानीतः सत्यस्याऽऽत्मनः स्वरूपं न बुध्येते ।

---

१ राशा १-'अमायस्य' नास्ति; शा २ प्रान्ते वर्तते. २ राना १-'दि' नास्ति. ३ राशा १-°पाय°. ४ राना २( उपरि ) °ज्ञातिवधादि. ५ राना २-अनात्मन्यात्माभि°.

यतोऽयं पर आत्मा सर्वमेवेदं परमानिर्विकारचिन्मात्रस्वरूपः स्वात्मतया सर्वदा विमृशन्न हन्ति न च हन्यते, हन्तृहन्तव्यतानिबन्धनं हननक्रियाकर्तृत्वं न प्रतिपद्यते । नापि हननक्रियायाः कर्मत्वम् । एते हि विकल्पविपर्ययज्ञानात्मकव्यवहाराणां क्षेत्रज्ञानामेव संभवन्ति न परमात्मनः ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २१[1] ॥

अयमुक्तलक्षण आत्मा देशकालाकारावस्थाद्यवच्छेदरहितश्चिन्मात्रस्वरूपत्वान्न जायते नोत्पद्यते । नित्यमुत्पन्नरूपत्वान्नापि म्रियते विनश्यति । नापि जन्ममरणान्तरालवर्तिस्थित्यवस्थारूप[2]भावमनुभवति । ते हि जन्मस्थितिविनाशात्मका अवस्थाभेदा देहाद्यनित्यभावाश्रयाः । ते हि भावा अभूतपूर्वधर्माविर्भावे जाता इत्युच्यन्ते । भूतपूर्वधर्मतिरोभावे च विनष्टा इत्युच्यन्ते । तदन्तराले च तत्तत्प्रत्ययप्रवाहसादृश्यभ्रमाः स्थिता इत्युच्यन्ते । स च तेषामपुनर्भावी भावः । आत्मनस्तु सदाभूतस्य नाभावसंबन्धः । स चैकलक्षणव्यभिचाराच्च न धर्मान्तराविर्भावतिरोभावावेति । जन्मस्थितिविनाशलक्षणावस्थात्रयप्रतिषेधोऽस्यानेन श्लोकेन प्रतिपादितः । इदानीमेत एव भावविकारा विशेषै[4]स्य प्रतिषिध्यन्ते । तत्रायमात्मा न जायते नोक्तेन क्रमेणोत्पद्यते इत्यजो[5] जन्मादि[6]लक्षणानित्यभावविकाररहितः । तथा नित्यः सदैकस्वभावाविवियुक्तः । इत्यनेनास्य प्रतिक्षणं धर्मान्तराविर्भावतिरोभावलक्षणो विपरिणामाख्यो विकारः प्रतिषिध्यते । शाश्वतः शश्वत्संपूर्णेन स्वरूपेण युक्त इत्यनेन विवृद्धलक्षणो विकारोऽस्य प्रतिषिध्यते । न ह्ययमनित्यभाववत्पूर्वमपचितो भूत्वोपचयरूपं विकारमापद्यते । तथा पुराणः । पूर्वकोटेरसंभवात्सततमेव चिरंतन इत्यनेनापक्षयलक्षणो विकारोऽ[7]स्य प्रतिषिध्यते । न ह्ययमुपचितो भूत्वा पुनरपचीयते । देहादि[8]भाववत् । तथा शरीरे हन्यमाने नायमात्मा हन्यते शरीरस्यैवानित्यत्वाज्जन्माद्यवस्थाजुषो विनाशावस्थाऽपि संभवति न तु नित्यस्याऽऽत्मन इत्यनेन विनाशलक्षणो विकारोऽस्य

१ राना १·२–' नच हन्यते ' नास्ति. २ राना १·२–°त्यावि°. ३ राना २–°रूपं. ४ राना २–°षणैरस्य. ५ राना १–' इत्यजो ' नास्ति. ६ राशा १·२–जन्मलक्षणा°. ७ राशा १·२–' अस्य ' नास्ति. ८ राना २–°द्यभाव°.

प्रतिषिद्धः । अस्तित्वलक्षणस्तु षष्ठो विकारः प्रागुक्तावस्थात्रयमध्ये भूत्वा भावशब्देन प्रतिपादित इति, अधुना नोक्तो यदि वा केचिदस्तित्वं विकारत्वेन नेच्छन्तीति नोक्तः ॥

एवं सकलभावविकाररहितम्,

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ हन्यते हन्ति वा कथम् ॥ २२ ॥

[ शांकरपाठः-१ कं घातयति हन्ति कम्. ]

एवं प्रतिपादितस्वरूपमविनाशिनमात्मानं यः पुरुषः प्रमाता नित्यं सदैव जानाति स तदभिन्नमात्मानं प्रतिपद्यमानः कथं केन प्रकारेण हन्यते विनश्यते । हन्ति वा परं विनाशयति । हननक्रियाकर्तृकर्मभावोऽयं शरीरमात्रप्रतिबद्धात्माभिमानेष्वप्रतिबुद्धेषु क्षेत्रज्ञेष्वेव व्यवस्थितः ॥

ननु हननादिना देहविनाशे सति चेतनधर्मानुपलम्भः । तदात्मनो देहविनाशे सति कथमविनाशित्वमवगम्यत इति व्यामोहव्यपोहाय दृष्टान्तनिदर्शनपूर्वं पुनरपि नित्यत्वमस्य द्रढयितुमाह,

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २३ ॥

यथा कश्चित्पुरुषो जीर्णान्युपभुक्तानि वस्त्राणि त्यक्त्वा स एव सन्नन्यानि नवान्युपभोगक्षमाणि गृह्णात्युपादत्ते । इत्यनेन जन्मादिविविधविकाराक्रान्तनानाशरीरसंयोगवियोगवशान्नास्यै तत्संवेदितृत्वमात्रैकलक्षणवियोग इति नित्य एवायमनित्यैः शरीरधर्मैर्मनागप्यसंस्पृष्टः ॥

यतः,

नैनं छिन्दति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २४ ॥

एनमात्मानं शस्त्राणि खड्गादीनि शरीरमिव न च्छिन्दन्ति न द्विधा

१ राना २-' ति ' नास्ति. २ राना १·२-' व्यव ' नास्ति. ३ राशा १-नास्य पुरुषस्य तत्सं°. ४ राना १·२-' यतः ' नास्ति. ५ राना १·२-एवम्.

कुर्वन्ति। तथैवाग्निर्नैनं दहति, नाऽऽपः क्लेदयन्ति न च मारुतः शोषमुपनयति । छेदादिभिर्विक्रियमाणे शरीरे न तस्य निसर्गनिर्विकारस्य विकारसंस्पर्शः ॥

तथा हि,

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २५ ॥**

अयमात्मा छेदादिक्रियाविकार्यो न भवति । पूर्वोक्तस्यैव निर्वचनमेतत् । तथा नित्य इत्यादीनि विशेषणान्यविनाशित्वार्थानि परस्परसहायभूतानि । प्रतिपत्तिदार्ढ्याय बहूनि प्रयुक्तानि वेदितव्यानि ॥

तथा चेदम्,

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २६ ॥**

शब्दादिव्यक्तार्थविषयाणां श्रोत्रादीनामिन्द्रियाणामविषयभूतत्वादयमव्यक्त इत्युच्यते । तथा वेदकैकस्वभावत्वादन्तःकरणेनापीदंतया वेद्यीकर्तुमशक्य इत्यचिन्त्यश्चिन्तनक्रियाया अगोचरः। तथा सर्वदा चैतन्यमात्रातिरिक्तधर्मान्तरासंस्पर्शादविकार्यो विक्रियां नेतुमशक्यः । तस्मादेवमुक्तेन प्रकारेण सर्वतः सर्वेन्द्रियगोचरादर्थादत्यन्तव्यतिरिक्तं वेदकत्वेन सर्वार्थव्यापकमेनमात्मानं बुद्ध्वा शरीरविनाशेन तद्विनाशभ्रमेण नैनमनुशोचितुमर्हसि ॥

एवं त्वं मानुष्येणेत्यादिग्रन्थेन वितत्य प्रतिपादितामपि सकलप्रकरणप्रतिपाद्यस्य ब्रह्माद्वैतज्ञानस्य शरीरशरीरिव्यतिरेकोपपत्तिप्रतिपादनरूपां प्रथमां भूमिकामपि सुसूक्ष्मनिर्मलप्रज्ञावधानविशेषावसेयत्वात्संप्रत्यप्रतिपद्यमानमर्जुनं मन्वानो भगवान्सर्वपक्षान्तराक्षेपेण बोधयितुमाह—

**अथैवेनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २७ ॥**

[ शांकरपाठः १—चैनं. ]

अथवा मदुपदिष्टोपपत्तिक्रमेण यथोक्तमर्थमप्रतिपद्यमानस्त्वमेनमात्मानं नि-

---

१ राशा १—चायम्. २ राशा १—विषयीकर्तुम्. ३ राना १·२—सर्वथा. ४ राशा १—' अपि ' नास्ति.

त्यजातं नित्यं वा मृतं मन्यसे, तथाऽपि तेनापि प्रकारेण नैनं विनाशित्वेन शोचितुमर्हसि । इदमत्र तात्पर्यम् । आत्मविषया द्वयी प्रतिपत्तिः संभाव्यते । नित्यो वा स्यादनित्यो वा । तृतीयः पक्षो न संभवति । तत्र नित्यत्वप्रतिपत्त्या यद्येनं नित्यजातमेव सदैवोत्पन्नं विनाशरहितं मन्यसे, तथाऽप्यस्याविनाशित्वाच्छोकस्य कोऽवसरः । अथ विनाशित्वप्रतिपत्त्या नित्यमेव मृतं सत्तारहितमेनं मन्यसे तथाऽपि नित्यविनष्टत्वादस्य शोचनीयत्वाभावः । अन्ये त्वेवं व्याचक्षते । यद्येनमात्मानं सदैव जन्ममरणाभ्यासमनुशक्तमनित्यत्वान्मन्यसे, तथाऽप्येनं न शोचितुमर्हसि ॥

एतमेव जन्ममरणं प्रवाहाविच्छेदं कैश्चिन्नित्यत्वेनावगम्यमानस्याऽऽत्मनः प्रतिपादयितुमाह—

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २८ ॥**

हिशब्दो हेतौ । यस्माज्जातस्य जन्मलक्षणविकारभाजो देहस्यैवाऽऽत्मत्वेन प्रतिपन्नस्य ध्रुवोऽवश्यंभावी मृत्युर्विनाशाख्यो विकारः । एवमेव मृतस्य विनष्टस्य जन्मावश्यंभावीति, कस्यैष जन्ममरणविकारलक्षणयोग इति तत्त्वमविचारयतोऽपि लोकस्यायं प्रवादः स्थित एव, 'जातो म्रियते मृतो जायते' इत्येवंविधः । तस्माल्लोकप्रवाददृष्ट्याऽपि शोकस्यानुपपत्तिरेव ॥

अन्यमपि प्रकारं शोकपरिहारायाऽऽह—

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २९ ॥**

पृथिव्यादिभूतसंनिवेशविषयशरीरात्मकत्वात्सर्वप्राणभृतो भूतशब्देनात्रोच्यन्ते । तान्येतानि भूतान्यव्यक्तादीन्यप्रत्यक्षपूर्वरूपाणि । तथैवाव्यक्तनिधनानि परोक्षपर्यन्तानि । न ह्येतानि पूर्वमेवंविधान्यासन्पुनश्चैवंविधानि भविष्यन्तीति ज्ञायन्ते । ततो द्वयोरप्येतयोः काष्ठयोरतान्यशोच्यानि । यद्यपि व्यक्तमध्यानि, व्यक्ता तेन[1] तेन रूपेण वेद्यमानमध्यावस्था जन्मविनाशान्तरालवर्तिनी दशा येषां, तथाविधान्यप्यशोच्यान्येव । व्यक्तावस्थायामेषां हि भ्रममात्रमेव स्थैर्यप्रतिपत्तिः । एतानि हि येन येन प्रकारेण कल्प्यन्ते, तेन तेन विनश्वराण्येवं[2]

---

१ राना १·२–'तेन' इत्येकवारमेव. २ राना १–°ण्येवं.

क्षणिकानि वा भवन्तु, परिणामत्वादाविर्भावतिरोभावधर्माक्रान्तानि वा भवन्तु, सर्वथा विकल्प्यमानान्येतस्य स्थिरस्य रूपस्यासंभवादशोच्यान्येवेति देहात्मकभूतसंनिवेशमात्रत्वेन प्रतिपन्नेषु शरीरेषु कः परिदेवनावसर इति ॥

इदानीं बहुप्रकारं प्रतिपाद्यमानोऽप्ययमर्थोऽतिगम्भीरत्वान्मनो धारयितुमनुष्ठातुमशक्य इत्यर्जुनस्यैतदर्थविषयमनध्यवसायनं परिहर्तुं प्रकृष्टप्रयत्नप्रतिपत्तव्यतामस्यार्थस्य दर्शयितुमाह,

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ ३० ॥

एनमात्मानं यथाप्रतिपादितस्वरूपं कश्चिदुत्कृष्टपुण्यः क्षणमात्रं पश्यति । कश्चिन्मनुष्यसहस्रेषु प्रकृष्टपुण्यपरिपाकवशाद्बहूनां जन्मनामन्ते पश्यति, तत्त्वतः प्रत्यभिज्ञानेन साक्षात्कुरुते । योऽपि[1] पश्यति स आश्चर्यवद्यथाऽऽश्चर्यं कश्चिदृदृष्टपूर्वमद्भुतं कदाचित्कथंचित्क्षणमात्रं पश्यति तथैवाद्भुतरूपमिव प्रतिभासमानं कश्चिदेवं तथाविधमेनं वदति परप्रबोधनायाऽऽचष्टे । तथैव कश्चित्तादृश एव परेण प्रतिपाद्यमानं शृणोत्यवधारयति । कश्चित्संप्रति भगवदनुग्रहेणानधिष्ठितत्वादविद्योपहतान्तःकरण एनं यथाप्रतिपादितस्वरूपमात्मानं श्रुत्वाऽपि कुतश्चित्तत्प्रतिपादनकुशलादाकर्ण्यापि न वेद, तत्त्वतो न जानाति । स च तथाविधोऽनुपदेश्य एव । त्वं पुनर्भक्तिश्रद्धानुगुण[2]सूचितभगवदनुग्राहकत्वात्मा[3] त्वपात्रस्त्वमेवैतत्तत्त्वत उपदेशस्येत्यत्रोद्युक्तो भवेत्यर्थः । किमत्र तात्पर्यम् । अस्याऽऽत्मनो गुरुशिष्यक्रमेण स्वयमनुभवेन वा सन्ति जातु[4] केचित्पुण्यभाजः प्रतिपत्तारः । किंतु निरन्तराभ्यासपरिशीलनविशीर्णकल्पसकलविकल्पावरणतां विना वैमल्येन सर्वकालं स्थिरतया चास्य प्रतिपत्तिमात्रमिति । विरलविरलो लक्षेष्वेकः[5] कश्चिदेव चरमजन्मा भवेदिति यथोक्तेन क्रमेण सम्यगवधारणीयं न तु मन्दोत्साहेनात्र योग्येनापि भवता भवितव्यम् ॥

तदयमत्र निश्चय इत्याह,

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३१ ॥

---

१ राशा २ ना १·२–' अपि ' नास्ति. २ राना १·२–'श्रद्धादिगुण°. ३ राशा १–'ग्रहत्वात्मा. ४ राना १·२–' जातु ' नास्ति. ५ राशा २ ना१·२–लक्षणेषु कश्चि°.

अयं समनन्तरप्रतिपादितदेहादिसमस्तवेद्यपदार्थात्यन्तव्यतिरिक्तवेदकत्वमात्रैकलक्षणो देही देहस्य वेद्यत्वमात्रेण स्वस्य वेदकत्वमात्रेण स्वामी परः प्रमाता । सर्वस्य देहमात्रमेवाऽऽत्मत्वेनाभिमन्यमानस्य प्रमातुर्जन्तोर्जातस्य तत्र तत्र नानारूपे देहे शरीर एक एव व्यापकतया तिष्ठन्नित्यं सततमेवावश्यो हन्तुं विनाशयितुमशक्यः । न ह्यागमापायिधर्मकाणां नानाविधानां सर्वदा वेद्यत्वमात्रस्वभावानां शरीराणां विनाशे तद्व्यापकस्यैकस्यानवच्छिन्नमाहिम्नो वेदकत्वमात्राव्यभिचार्येकलक्षणस्य सत्यस्याऽऽत्मनो विनाशः संभवति । यत एवमतस्तस्याविनाशित्वे नित्येऽनुशोचितत्वं तावन्नास्त्येव । तस्माद्विनाशैकस्वभावानि भूतानि पृथिव्यादिभूतसंनिवेश्यविशेषात्मकानि शरीराण्येव शरीरित्वे प्रतिपन्नानि विनश्यन्ति । पश्यन्नानुशोचितुं परिदेवितुं नार्हसि । नष्टस्य विनाशे विवेकिनः कः शोकस्यावसर इत्यर्थः ॥

अथ प्रतिपादितोपपत्त्या तात्त्विकमात्मस्वरूपं संप्रतिपत्तुमशक्तमर्जुनं मन्यमानो भगवान्क्षत्रियजात्युचिताभिमानोद्दीपनेनावश्यानुष्ठेये स्वकर्मणि प्रवर्तयितुमाह,

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३२ ॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३३ ॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३४ ॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३५ ॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३६ ॥
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३७ ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३८ ॥

स्वधर्ममपीत्यादि श्लोकसप्तकमेतन्निगदव्याख्यातम् । एवं स्वर्गाद्यनित्यफलहेतुप्रतिपत्तिलक्षणधर्मसमाश्रयणेनापि पूर्वप्रकारं स्वकर्मफलत्यागे व्यवस्थिते निरतिशयनित्यफलप्राप्तिहेतुनिवृत्तिलक्षणधर्मसमाश्रयणेन तदपरित्यागे को दोष इति ॥

प्रकृतमेव ज्ञानोपदेशं पुनरपि सिद्धान्तीकुर्वन्नाह,

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३९ ॥**

एवमनेन प्रकारेण वर्तमानो ज्ञातिवधादितः संभाव्यमानं किल्बिषं नावाप्स्यसि न लप्स्यसे । कथं वर्तमानः, तावद्यथोपदिष्टार्थनिःसंशयप्रतिपत्तिप्ररूढनिष्प्रकम्पप्रज्ञाप्रत्यभिज्ञातसमस्तप्राणभृत्सर्वावस्थाव्यापकसामान्यसंविन्मात्रस्वभावे नित्यनिरुत्तरानन्दनिर्भरतया स्वरूपाव्यतिरिक्तप्राप्यपदार्थान्तरप्रेप्साविरहिते सत्ये स्वात्मन्यकृत्रिमात्माभिमानमास्थाय, मायाव्यामोहजनितं देहाद्यनात्मभूतभावात्मप्रत्ययलक्षणविपर्ययज्ञानैः सर्वप्राणिभिरुपादेयतया हेयतया च परिकल्पितभेदे प्रतिक्षणविनश्वरे सुखदुःखे हर्षविषादौ समे[2] द्रष्टव्यात्मनि दृश्यतामात्रेण संबन्धत्वादनुपजनितविशेषात्मकविकारतया निर्विशेषे कृत्वा, सम्यक्प्रतिपत्त्या संपाद्य । एवमेव तद्धेतुभूतौ राज्यादिलिप्सितार्थलाभालाभौ, तयोरपि हेतुभूतौ जयपराजयौ, तथैव समौ निर्विशेषौ संपाद्य, तत्त्वतो यथावस्थितेन रूपेण[1] निश्चित्येत्यर्थः । एते हि सुखदुःखादयो वेद्यत्वमात्रेण संबद्धा वेदकस्याऽऽत्मनो न कश्चिद्विकारलेशमर्पयितुं क्षमाः । यथा नीलपीतादयः प्रकाश्यत्वमात्रेण संबद्धाः प्रकाशकस्याऽऽलोकस्य[3] न कंचिद्विशेषं नीलपीतादिकमुन्मेषयितुं शक्ताः, केवलं प्रकाश्यत्वमात्रेणैकेन रूपेण तत्र संबद्धास्तदेतत्सुखादीनां वेद्यत्वमात्ररूपं साम्यम् । एवं सुखादीनि समीकृत्य तत एतत्समाधिप्रतिपत्तेरनन्तरमेतत्समाधिसुप्रतिष्ठितमतिर्युद्धधर्मोपलक्षिताय स्वकर्मणे युज्यस्व संबध्यस्व । यथोक्तज्ञाननिष्ठतया स्वकर्मानुतिष्ठेत्यर्थः ॥

एवं ज्ञानकर्मसमुच्चयमेवोपदेश्यतया विनिश्चित्य ज्ञानविषयां[4] प्रतिपत्तिमुक्तकल्पां[5] मत्वा तां क्रियाविषयां वक्तुमुपक्रममाणस्त एव ज्ञानकर्मणी सांख्ययोगशब्दाभ्यां व्यवहरन्नाह,

---

राशा १ ना २—°रूपव्यति°. २ राना १·२—'समे' नास्ति. ३ राना १·२—°शस्यालो°. ४ राशा १·२—ज्ञानक्रिया°. ५ राशा १·२—°यां मतिमुक्त°.

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥

इदमात्मादि सत्, इदं देहाद्यसदिति हेयोपादेयपदार्थपरिगणना संख्या तामधिकृत्य कृतं शास्त्रमन्वर्थतया मुख्यं सांख्यमिहोच्यते । तद्धेतुकं ज्ञानमपि सांख्यम् । न तु कपिलादिप्रणीतं, तस्य नानात्मवादपरमार्थत्वात् । तस्मिन्सांख्ये विषय एषा प्रबन्धेन प्रतिपादिता बुद्धिः प्रज्ञा तवोपदिष्टा, यया प्रज्ञया तत्सांख्यं सम्यग् युज्यते बुध्यते वा । उक्तज्ञानसमाधिगम्येन परमार्थलक्षणेनार्थेन संबन्धो योगः । तद्धेतुकत्वात्कर्मैवेह योगशब्देनोक्तम् । न हि केवलस्य ज्ञानस्य योगार्थसंबन्धहेतुत्वं संभवति। किंतु तदनुगतस्य कर्मण एवेति प्रबन्धेन वक्ष्यते । इत्येवंविधे योगे कर्मणीमां वक्ष्यमाणां बुद्धिं शृणु, अवधारय। यथा कर्मैव तत्त्वतो मोक्षकारणतया विज्ञायतेऽत एवाऽऽह। यया वक्ष्यमाणया बुद्ध्या युक्तः संबद्धस्त्वं कर्मकृतं ज्ञानशून्यजनविषयं बन्धमस्वातन्त्र्यं प्रहास्यसि त्यक्ष्यसि ॥

तादृशं हि कर्मानुष्ठानमिहोपदेक्ष्यते येन सकलसंमूढजनबन्धहेतोरपि कर्मणो मोक्षहेतुत्वमेव पर्यवस्यति । अत एवास्य कर्मयोगस्य चित्तवृत्तिनिरोधलक्षणयोगातिरिक्तशक्तितां प्रतिपादयितुमाह,

नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥

[ शांकरपाठः १–°हाभिक्रम°. ]

इह वक्तुं प्रक्रान्ते कर्मयोगे चित्तवृत्तिनिरोधलक्षणयोगवदातिक्रमनाशो नास्ति । स हि यथोपदिष्टक्रमस्वभ्यस्तभूमिकाभिनिवर्त्यस्वरूपत्वात् पूर्वभूमिकानामनवाप्तावुत्तरोत्तरभूमिकारोहणरूपक्रमोल्लङ्घनलक्षणेऽतिक्रमे सति विनश्यति स्वरूपमेव न लभते । स तादृशो विनाश इह योगे समनन्तरवक्ष्यमाणोपपत्त्या न विद्यते । तथा तत्र तत्तदङ्गवैकल्यादसम्यगनुतिष्ठतो व्याध्यादिवर्तमानशरीरानुभवनीयः पुनर्गर्भवासदुःखादिर्भविष्यच्छरीरानुभवनीयः प्रत्यवायोऽनिष्टयोगः संभवति । इह तु पूर्ववत्सोऽपि न विद्यते । यतोऽस्य धर्मस्य यथोक्तज्ञानपूर्वतया शास्त्रचोदितस्य कर्मानुष्ठानसमाधिरूपस्य सदाचारविशेषसंबन्धि स्वल्पमपि परिमितकाललवानुभूतं स्वरूपं महतः समस्तभवहेतोरनात्मन्यात्मप्रत्ययलक्षणा-

द्भयात्साध्वसादनुष्ठातारं योगिनं त्रायते परिरक्षति । पुनरस्तत्संबन्धं तिरस्करोतीत्यर्थः। अत्र हि धर्मे सततमनस्तमितसमस्तवस्तुप्रथनैकहेतुसामान्यसंविद्रूपपरप्रकाशैकलक्षणस्वात्मप्रत्यवमर्शो निरुत्तरः समाधिः सकृद्विभातत्वेनैव निर्वर्त्यं संपूर्णस्वरूपो विधीयते । स च विभातमात्रः संपूर्णं फलं संपादयति । तथा च वक्ष्यति ।

' स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ' इति ।

ततोऽस्मिन्पूर्वापरक्रमाभ्यस्तभूमिकां संपाद्य चित्तवृत्तिनिरोधयोगस्येह सर्वात्मना परिहारोऽवगन्तव्यः । स ह्यत्र तत्तत्स्थानादिक्रियाविशेषवत्पूर्वापररात्रादिनियतकालानुष्ठेयतया नियतेतिकर्तव्यताकोऽन्तर्भवत्येव ॥

अस्मिंश्च विशुद्धभक्तिश्रद्धादिगुणव्यक्तिसूचिताविवेकजज्ञानाविर्भावो भवादृशोऽधिकृतो न सर्वः कश्चिदिति प्रतिपादयितुमाह,

**व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥**

[शांकरपाठः १–°रेकेह. ]

व्यवसायो निश्चयः । स आत्मा स्वरूपं यस्याः सा तथारूपा स्वभावतो बुद्धिरेकलक्षणैव । निश्चय आत्मादिसदर्थविषयोऽपि संभवति । अत्र योऽसदर्थविषयः स निश्चयाभासो निश्चय एव न भवत्यतः सदर्थविषयमुख्यव्यवसायरहितानामव्यवसायिनां बुद्धयो बहुशाखा एकस्मिन्नप्यर्थे नानाविकल्पजालाकुला अपर्यवसिताश्च ॥

यतः सर्वाभिकाङ्क्षापरिक्षयैकहेतौ परमार्थसत्यात्मन्यलब्धबुद्धिप्रतिष्ठा इदं प्राप्यमिदं प्राप्यमित्यनित्यमर्थं प्राप्यतयाऽऽलम्बमाना न क्वचिद्विश्रान्तिं लभन्त इत्येवंविधानां पुरुषाणां स्वर्गादिभोगमात्रपरत्वेन प्रतिपन्नानां या बुद्धिः सा वक्तुं प्रक्रान्ते परस्मिन्धर्मे न नियुज्यत इत्याह,

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादपराः पार्थ नान्यदस्तीति वादिनः ॥ ४३ ॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलेप्सवः ।**
**क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति ॥ ४४ ॥**

[ शांकरपाठः १–°वादरताः. २–°फलप्रदाम्. ३–°बहुलां. ४–°गतिं. ]

---

१ राशा १·२–°प्रथक°. २ राना १·८–°महँते.

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

सैषा व्यवसायात्मिका निश्चयस्वभावा बुद्धिर्भोगैश्वर्यप्रसक्तानां पुंसां समाधावात्मलक्षणपरमार्थसत्तत्त्वविषये प्रणिधाने न विधीयते नानुलिप्यते[1], तस्यास्तदर्थप्रतिपत्तियोग्यताभावात् । ये हि भोगानामिष्टानां विषयाणामैश्वर्ये स्वाम्ये प्रकर्षेण वस्त्वन्तरपरिहाररूपेणातिशयेनाऽऽसक्ता निषण्णास्तत्परा एव । तेषां[2] भोगात्मिका नित्यवस्तुव्यवसायात्मिका बुद्धिः समाधिविषयं व्यवसायं नावलम्बत एव । कीदृशानां तेषां भोगैश्वर्यप्रसक्तानां समाधौ बुद्धिर्न विधीयते । तया वाचाऽपहृतचेतसां स्वीकृतमनसाम् । कया वाचा, यामिमां पुष्पितां परमार्थबोधलक्षणफलरहितत्वाद्भोगरूपपुष्पमात्रसंयुक्तां प्रसिद्धां वाचं वेदवादपरा अविपश्चितो वदन्ति व्याचक्षते । वेदशब्दोऽत्र ज्ञानशून्यक्रियामात्रविधायकवेदैकदेशवचनोऽवगन्तव्यः । तस्य तथाविधस्य वेदस्य वादोऽभिधानं परं प्रकृष्टं तदेव तत्त्वं येषां ते तथोक्ताः। अत एव नान्यदस्तीति वादिनः। स्वर्गादिफलप्राप्तिहेतुभूतानां क्रियाविशेषाणां विधायकाद्वेदादृतेऽन्यच्छास्त्रं नास्त्येवेति वदनशीलाः । अत एवाविपश्चितः । यज्ञादिक्रियाफलभूतानित्याशुचिसातिशयभोगमात्ररूपमर्थं पुरुषार्थफलत्वेन प्रतिपन्नाः सन्तो न विद्वांसो, ये ह्यविनाशिविशुद्धनिरतिशयमात्मतत्त्वलक्षणमेतद्विपरीतमर्थं फलत्वेन प्रतिपद्यन्ते विपश्चितस्ते विपश्चित्त्वं भजन्ते । अत एवाविपश्चित्त्वप्रतिपादकानि तेषां विशेषणान्याह । तथा च कामात्मानः, कामाः प्रियाः शब्दादयः सर्वभूतत्वादात्मा येषाम् । अत एव कामात्मत्वात्स्वर्गपराः । उत्तमभोगाधिकरणं स्वर्गः प्राप्यतया परः प्रकृष्टो येषां ते तथाविधाः । तथा जन्मकर्मफलेप्सवः । भोगप्रक्षयेऽवश्यंभावि जन्म क्वचिदपि योन्यन्तरे संभवति । यस्मिंश्च सति धर्माधर्मात्मकं कर्म तस्मिंश्च सति सुखादिलक्षणं फलमित्येतान्याप्तुमिच्छवः, अत एव भोगैश्वर्यस्येष्टविषयाधिपत्यस्य गतीर्विविधमार्गान्प्रति[3] तत्र साधनभूता नानाविधा यज्ञदानतपःप्रभृतयः कर्मभेदा बहुला भूयांसो येषाम् । न केवलं नित्यनैमित्तिकक्रियामात्रसक्ता यावत्काम्यानपि क्रियाविशेषान्विस्तारयन्तः । इत्येवंविधा

---

१ राशा १-°शिष्यते. २ राशा १-' भोगासक्तानां ' इत्यधिकम्. ३ राशा १-°मार्गान्फलभूतान्प्रति.

प्रवक्तारो यां वाचं वदन्ति, तयावर्जितचित्तानां भोगासक्तानां बुद्धिः समाधौ न विधीयत इति संबन्धः । इदमत्र तात्पर्यम् । ये स्वयमेव प्रबोधशून्यत्वाद्भोगमात्रपरास्तेऽन्यैस्तथाविधैस्तैमेवमर्थं प्रशंसद्भिः परिपोषमाणतातादृक्संकल्पाः परमार्थप्राप्तिव्यवसायाः पॆरमपकृष्यन्त इति । तथाविधानां बुद्धिः कथं समाधौ विधीयतामर्हति ।

अतश्च स्वभावतः प्रस्तुतविज्ञानोपदेशमात्रभूतस्त्वमाविपश्चित्प्ररोचनावचनवश्यमानचित्ततां विहाय यथोपदिष्टविज्ञाननिष्ठो भवेत्याह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४६ ॥**

सत्त्वरजस्तमांसि त्रयो गुणा एव त्रैगुण्यम् । सुखदुःखमोहमयबुद्धिमयत्वात्त्रैगुण्ये विषय आश्रयो यस्य स त्रैगुण्यविषयः । संसारिपुरुषवर्ग उपचारात्त्रैगुण्यशब्देनात्रोच्यते । तदेवंविधं त्रैगुण्यं विषयो गोचरं येषां ते तथाभूता वेदाः। ये हि सुखाद्यर्थिनस्ते तत्प्राप्तिहेतुषु क्रियाविशेषेषु वेदैर्नियुज्यन्ते । यतस्तैः सर्वतो व्यतिरिक्तस्वरूपः सर्वगत एको यथोक्तविशेषणः सत्य आत्मा आत्मत्वेन न प्रतिपद्यते, ततस्तेषां सन्नेवाऽऽत्मा नास्ति । त्वं तु निस्त्रैगुण्यः सन्नात्मवान्भव। निष्क्रान्तस्त्रैगुण्यान्निस्त्रैगुण्यो गुणत्रयातीतो वेद्यत्वमात्रेण सुखाद्यात्मभिर्गुणैर्वेदकैकस्वभावः संबन्धेनैं तु तद्धर्मको गुणेभ्योऽत्यन्तविविक्तस्वभावः । परमार्थतोऽयमात्मा तमीदृशमात्मत्वेन प्रत्यवमृश्यन्नात्मवान्भव । परमार्थसन्तमेवाऽऽत्मानमुक्तोपदेशप्रतिपत्तिशैथिल्यादसन्तमिव मा कार्षीरित्यर्थः । यदा च गुणत्रयातीतस्वभावमात्मानमात्मतया प्रतिपद्यसे तदा निर्द्वंद्वो द्वंद्वेभ्यः सुखदुःखतृष्णाजरामरणादिभ्यः क्लेशेभ्यो निष्क्रान्तो भव । एतानि हि द्वंद्वानि अनात्मनि त्रिगुणे देहादावात्मप्रत्ययनिबन्धनानि । यतश्च निर्द्वंद्वस्ततो नित्यसत्त्वस्थोऽपि भव । नित्यमविनाशि यत्सत्त्वं सद्भावस्तत्र स्थित उपलब्धप्रतिष्ठस्तादृशः सन्निर्योगक्षेमोऽपि भव । अप्राप्तस्य प्राप्यस्य वस्तुनः प्राप्तिर्योगः । प्राप्तस्य परिरक्षणं क्षेमः । निष्क्रान्तस्ताभ्यां निर्योगक्षेमस्तथाविधो भव । न हि नित्यसंपूर्णत्वात्सर्वतो निरभिलाषात्मनः प्राप्यं किंचित्संभवति । न चापूर्वतया प्राप्तस्य कस्यचिदर्थस्य विनाशाशङ्कया परिरक्षणम् । अतो विपर्ययप्रत्ययगृहीतात्मा-

१ राना १·२–' तम् ' नास्ति. २ राशा १–' परम् ' इत्यत्र ' दूरम् '. ३ राशा १·२ °बन्धी तु.

भासदेहादिनिबन्धने एव योगक्षेमे इति ततो व्यावृत्तात्मप्रत्ययतया सत्यात्मप्रत्यवमर्शादात्मवान्भव ॥

न तु भोगैश्वर्यप्रसक्तत्वात्प्रवृत्तिधर्मानुष्ठानैकनिष्ठोपदेश्यपुरुषविषयत्वेन विधीयमानक्रियाविशेषेतिकर्तव्यतोपदेशशतसंकुले वेदशास्त्रे सर्वमनुष्ठेयतयाऽवगन्तव्यम् । किंतु यावता परमार्थबोधलक्षणस्वाभिप्रेतार्थक्रियासिद्धिर्भवति तावदेव तत उपादेयतया बुधेन प्रतिपत्तव्यमित्याह–

**यावानर्थ उदपाने सर्वतः संप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४७ ॥**

सर्वतः सर्वासु दिक्षु समृद्धसलिल उदपाने ह्रदप्रस्रवणादावर्थिनो यावानर्थः, यावन्मात्रमेवं तृष्णाप्रशमनाद्यर्थक्रियासमर्थसलिललवोपयोगमात्रं प्रयोजनं, तावानेव विजानतो विज्ञानवतो ब्राह्मणस्य ब्रह्मवेदिनः सर्वेषु निखिलेषु सरहस्येषु वेदेष्वर्थः प्रयोजनम् । यावता शास्त्रैकदेशेन परमार्थोपलब्धिलक्षणार्थक्रियानिवृत्तिर्भवति तावदेव तेन ततो विधिसहस्रसंकुलादप्युपादातव्यम् । किमुक्तं भवति । यथा तृषितेनार्थिना सुसंपूर्णात्समुद्रकल्पादपि जलाशयात्स्वार्थक्रियासंपत्तिमात्रक्षम उदकस्तोकः समुपादीयते, न सर्वो जलाशयः, एवं ज्ञानक्रियाविषयविविधार्थसंपूर्णादपि वेदशास्त्रात्तत्त्वजिज्ञासुना तदवगममात्रोपयोग्येवार्थ उपादातव्यो, न तु सर्वमेव वेदशास्त्रमिति ॥

अथ विजानता सर्वशास्त्रेभ्यो यदुपादेयं तदर्जुनं पुरस्कृत्योपदेष्टुमाह,

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४८ ॥**

[ शां. पाठः–१–°ण्येवाधि°. ]

तव संप्रत्येवोपदिष्टतत्त्वज्ञानोपपत्तिप्ररूढदृढप्रतिपत्तिवशादनित्येभ्यो देहादिभ्यो व्यावृत्तमानात्मप्रत्ययत्वे सत्यद्वैतचिन्मयज्योतीरूपं परं तत्त्वमहमित्यात्मत्वेन प्रतिपद्यमानस्य सतः कर्मण्यधिकारोऽस्तु । यत्कर्म कायवाङ्मनोभिर्निर्वर्त्यं व्यापारविशेषात्मकं वर्णाश्रमविभागेन देशकालावस्थापेक्षमुख्यगौणविविधेतिकर्तव्यताकलापेन नित्यादिभेदेनावश्यकर्तव्यतया शास्त्रेषु विहितं, तस्मिन्नधिकारः कर्तृत्वं भवतु तदधिकृतस्वार्थसिद्धये प्रवर्तस्वेत्यर्थः । यतः कर्म

१ राशा १–'एव' इत्यत्र 'एकदेशात्.' २ राशा १–व्यावर्त'. ३ राना १·२–भवति.

तावच्छरीरत्वाव्यभिचारि न कदाचित्त्यक्तुं शक्यम् । अथ यत्याद्यवस्थायां कश्चिन्नियमविशेषोऽवलम्बनीय एव । ततश्च स एव कर्मविशेषतां प्राप्नोति । आश्रमान्तरकर्मनियमवत् । इत्थमशक्यः सर्वात्मना कर्मत्यागः । किंच गृह्यतां नामात्यागोऽपि त्यागाभिधानः। स तु तत्त्वज्ञानबाह्यतामेवाऽऽविष्करोति । तथाविधस्य यतो द्वेष्यतां विना कस्यचिदर्थस्य हानं न संभवतीति 'नै चोपादित्सितं प्रियमर्थं विना रागता संभवतीति ' कर्मत्यागाभिधाने रागद्वेषप्रसङ्गो दुर्निवारः । यदि च तत्त्वस्यैकत्वात्कर्मणां यथेष्टमनियमेनानुष्ठानमेव त्यागत्वेनाभिमतम्, तथाऽपि पूर्ववद्रागद्वेषवशान्यथानुपपत्त्या सोऽप्यतत्त्वज्ञतामेवानुष्ठातुरभिव्यनक्तीत्यकर्मता वा विरुद्धकर्मता वा निरुत्तरानन्तनिजानन्दनिर्भरं परं तत्त्वमात्मत्वेन प्रतिपद्यमानस्य सर्वसाम्यलक्षणं परमं समाधिमारुरुक्षतः तत्त्वज्ञानाभिनिवेशिनो योगिनो द्वयमप्यनुपपन्नम्, इति तथाविधस्य तव कर्मण्येवाधिकारोऽस्तु । किंतु तेषां कर्मणामनात्मज्ञजनसमुचितनानाभिसंधानप्रार्थितेषु दृष्टानुश्राविकाविविधभोगात्मकेषु बन्धहेतुषु फलेष्वधिकारो मा भूत् । ये ह्यतत्त्वज्ञतया फलान्यधिकृत्य तेषु तेषु कर्मसु प्रवर्तन्ते, तेषां तानि क्रियमाणान्येव कर्माणि वासनारूपतयाऽन्तःकरणभूमौ बीजभूतान्येव तिष्ठन्ति । अतश्चानित्यक्रियाफलोपभोगप्रक्षये विविधवासनारूपस्य तेषु तेषु योन्यन्तरेषु तस्य तस्य जन्मनः पुनः पुनः कारणतां प्रतिपद्यन्ते । जन्म च तस्य कर्मणः, कर्म च तस्य तस्य फलस्य हेतुत्वं भजते, इति वासनाजन्मकर्मफलचक्रमेतदनिशमावर्तमानमज्ञानां बन्धाय कल्पत इति त्वमपि सामान्यपुरुषवत्कर्मफलहेतुर्मा भूः । उक्तया प्रक्रियया कर्मणां शुभाशुभानां फलानि सुखाद्यात्मकानि हेतुर्जन्मनो निमित्तं यस्य स तथाविधो यथा न भवसि । तथोक्तज्ञाननिष्ठः सन्कुर्वन्नेव कर्माणि तेन ज्ञानाग्निना दग्धबीजतामापादयन्परमेश्वरस्वभावसमापत्तिलक्षणं मोक्षमवाप्नुहीत्यर्थः ॥

अन्यच्च कस्यांचिदवस्थायां प्रस्तुतस्य कर्मपरिहारस्य विधीयमानत्वाद्यदकर्मेति मन्यसे, तत्र तादृशेऽप्यकर्मणि सङ्गः कर्मान्तरबन्धहेतुरेवेत्युक्तमेव प्राक् । यत एवमतः,

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४९ ॥**

---

१ राशा २ ( उपरि )—केनचित्. २ ' ' एतच्चिह्नाङ्कितो भागो रामा १·२ नास्ति. राशा २ प्रान्ते लिखितः यत्र ' रागता ' इत्यत्र ' द्वेष्यता ' इति पाठः. ३ राशा १·२–°धिमधिरु°.

इह शास्त्रविहितानां कर्मणामनुष्ठाने यथोक्तात्माद्वैतज्ञाननिष्ठत्वलक्षणः समाधिर्योग उच्यते । यथा कपिलादिप्रणीतस्य सांख्यसंज्ञस्य ज्ञानस्य पातञ्जलादिप्रणीते चित्तवृत्तिनिरोधलक्षणयोगे निष्ठा, तथेहोपदिष्टस्य आत्माद्वयज्ञानस्य कर्मानुष्ठानसमाधौ निष्ठेति योगशब्देन सोऽप्युक्तः । तत्र तादृशे योगे स्थित आश्रमान्तरपरिहारेण कृतप्रतिष्ठः सन्यथोक्तनियतकर्माण्यनुतिष्ठ । कथं, संगं तत्तदभिसंहितफलप्राप्तिहेतुत्वप्रतिपत्त्या तावन्मात्रोपायलीनचित्तत्वं त्यक्त्वा परित्यज्य । अत एव सिद्धौ फलसंपत्तौ, असिद्धौ तद्विघाते, द्वयोरपि निर्विकारत्वात्समो निर्विशेषो भूत्वा यथोक्तज्ञाननिष्ठत्वान्नित्यपरिपूर्णयथोक्तात्मतत्त्वप्रत्यवमर्शजनितानन्दतृप्तस्य कर्मणः फलेनानित्येन सिद्धेनासिद्धेन वा न कश्चित्सुखदुःखात्मको विशेष इति सर्वसाम्यदशाधिरूढो भूत्वा यथोक्तयोगनिष्ठो भव । यतः समत्वं सर्वास्ववस्थासु विकारलेशासंस्पृष्टत्वमेवैष योग उच्यते । साम्यप्राप्तिरेवास्य निष्ठेत्यर्थः ॥

अत एवैतद्योगनिष्ठस्य योगिनो लक्षणमाह-

**यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।**
**त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५० ॥**

[१-एष श्लोकः शां० पाठे नास्ति.]

यस्य यथोक्तयोगाधिकारिणः पुरुषस्य सर्वे समारम्भाः सर्वासु क्रियासु प्रवृत्तयोऽवश्यंभाविनोऽपि निराशीर्बन्धना भवन्ति । निष्क्रान्ता आशीर्बन्धना निराशीर्बन्धना भोगात्मकबन्धरहिता इत्यर्थः । अत एवावश्यानुष्ठेयकर्मरूपं सर्वं शुभमशुभं च त्यागे फलाशासंन्यासे हुतमग्नाविव बीजजातं फलप्रसवसामर्थ्यविनाशाय निक्षिप्तम् । स एवंविधो नित्यकर्मानुष्ठातैव त्यागी त्यागवान् । न पुनः क्लेशभीरुत्वादिना कर्माण्येव त्यजंस्त्यागी भवति । इति युक्तिरत्र प्रागेवोक्ता । स एव चैवंविधः प्रशस्यज्ञानयुक्तो, न तु यः कर्मत्यागादिमात्रं ज्ञानं मन्यते ॥

अत एवंविधोत्कृष्टबुद्धियुक्तं कर्म समाचरेत्, न केवलमित्याह,

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५१ ॥**

---

१ राना १·२-' च ' नास्ति. २ राना १·२-' एव ' नास्ति.

यस्माद् बुद्धियोगाद्यथोक्तज्ञानसमाधानाद् दूरेणातिशयेन केवलं तद्विरहितं कर्मावरं निकृष्टम् । ज्ञानशून्यं कर्म संसारहेतुत्वात्ततोऽत्यन्ताधममित्यर्थः। अतश्च बुद्धौ यथोक्ते सम्यग्ज्ञाने शरणमाश्रयमन्विच्छ अभिकाङ्क्ष। तामेवोपायतयाऽवलम्बस्वेत्यर्थः । यतो ये फलहेतवः अनित्यं भोगलक्षणं फलमेव हेतु, तत्साधनभूतासु क्रियासु प्रयोजकं कारणं येषां ते ज्ञानशून्यकर्ममात्रानुष्ठायिनः । कृपणास्तु फलार्थित्वाद्दीनाः तत्तज्जातिशरीराद्यभिमानावच्छिन्नमत एवानित्यभोगात्मकफलतृष्णान्तरमात्मानं मन्यमानाः सन्तो दुराचाराः ॥

अत एव तद्विलक्षणस्य ज्ञानिनः स्वरूपं प्रतिपादयितुमाह,

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५२ ॥**

इह आत्मैव परमेश्वर एकं तत्त्वम् । स एव च स्वमायामहिम्ना ज्ञेयभावापादनेन सर्वस्य कार्यजातस्यैकः कर्ता पारमार्थिकः, विचित्रं चेदं कार्यं निर्मिमाणः स्वेच्छामात्रव्यतिरिक्तं न तस्योपादानमपेक्षते । नापि सहकारिणं न चेदमित्थमवभासमानमधिकार्यं चिन्मात्रस्वरूपत्वादतिरिक्तं विकारलेशं कंचिदर्पयितुं प्रभवति । तदेवंविधनित्यनिरातिशयैश्वर्ययुक्तमेकं तत्त्वमात्मत्वेन निष्प्रकम्पया प्रतिपत्त्या यः प्रत्यवमृशति, स बुद्ध्या परमेण बोधेन सम्यक्ज्ञानेन युक्तसंबन्ध इहोच्यते। स च एवंविध इहोपदिश्यमाने कर्मयोगेऽधिकृतः। कुर्वन्नपि कर्माणीश्वरभावानुप्रवेशात्सर्वं समत्वेन पश्यन्निदं स्वर्गादिसुखफलहेतुत्वात्सुकृतं सत्कर्म, इदं दुःखहेतुत्वाद् दुष्कृतं दुष्टकर्मेत्यनुत्पन्नविवेकज्ञानैर्विषमदर्शिभिः परिकल्पितभेदे सुकृतदुष्कृते द्वे अपि जहाति त्यजति । न तस्य योगिनः सर्वसमत्वसमाहितस्य क्रियमाणमपि कर्म सुकृतदुष्कृतलक्षणं भेदं जनयतीत्यर्थः। एवमनेन श्लोकार्थेन तत्त्वज्ञानवान्नियतं कर्म कुर्यादेव । न च तत्रापारमार्थिकसदसद्विवेककल्पनामारोपयेदित्युपदिष्टं भवति ॥

यत एवं तस्मात्त्वं यथोक्ततत्त्वज्ञानाभिनिविष्टः सन्समाधये युज्यस्व, कर्मानुष्ठानद्वारेण युक्तो भव । यतः कर्मसु क्रियमाणेषु यत्कौशलमुक्तज्ञाननिष्ठत्वेन साधुकारितं स एव योगः समाधिरिह नान्यः । एवमेवार्थं हेतूपन्यासपूर्वं विवरीतुमाह,

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धनेनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

[ शां. पाठः-१-°बन्धविनि°. ]

यस्मात्कर्मजं अतत्त्वज्ञैः क्रियमाणस्य कर्मणोऽवश्यंभावि सुखाद्यात्मकं फलं सर्वदा सर्वतो निरभिकाङ्क्षात्मनिष्ठत्वात् अनभिसंधानेन विहाय त्यक्त्वा फलाभिसंध्यनुष्ठीयमानकर्मप्रतिबद्धत्वाज्जन्मनः पुनर्भवलक्षणाद्बन्धनादस्वातन्त्र्या-न्निर्मुक्ताः सन्तो निर्विघ्नतयानामयमनित्यसुखादिसंकल्पदोषरहितं पदं पारमा-र्थिकस्वरूपप्रतिष्ठात्मकं धाम गच्छन्ति प्राप्नुवन्ति । अतस्त्वं बुद्धियुक्तो योगाय युज्यस्वेति पूर्वेण संबन्धः ॥

यदा चैतत्परमदुरवगाहं तत्त्वज्ञानमुक्तमपि झगिति मनसि प्रतिष्ठां न निबध्नाति, तदा त्वयात्र शिथिलोत्साहेन न भवितव्यम् । यतः क्रमेणैतज्ज्ञा-स्यसे इत्याह,

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चिता ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

[ शां. पाठः-१-निश्चला. ]

यदा यस्मिन्काले त्वमस्योपदिष्टस्य ज्ञानस्योपपन्नमात्रप्रतिपत्त्या मोहकालिलं अनादिजन्माभ्यस्तदेहाद्यात्मप्रत्ययस्वरूपमज्ञानकर्दमं व्यवतरिष्यसि[१], विपर्य-यत्वप्रतिपत्त्या लङ्घयिष्यसि, तदैवं श्रुतमिदं श्रोतव्यमिति संशयाविष्टजन-चित्तयोर्नानाशास्त्रविषययोः श्रोतव्यश्रुतयोर्निर्वेदं विरागं गमिष्यासि । ततश्च निश्चयाभावादिदं श्रुतमिदं श्रोतव्यमिति विचिकित्साविष्टतया या श्रुतिर्नाना-शास्त्रश्रवणं, तस्यामनुपादेयत्वादप्रतिपन्ना प्रतिकूला सती तव[२] मतिः प्रज्ञा निश्चिता यथोक्तात्मज्ञाननिवृत्तसंदेहा अत एवाचला विकल्पैर्बलवद्भिरप्यप्र-कम्प्या सती स्थास्यति अस्मिन्समाधौ स्थितिं प्रतिष्ठां लप्स्यते । तदानेन क्रमेण यथोक्तं योगं कर्मसमाधिलक्षणमवाप्स्यसि प्रतिपत्स्यसे, संश्रयिष्यसे ॥

अथ ते तदा मतिः स्थास्यतीति भगवद्वचनं श्रुत्वा स्थिरप्रज्ञत्वसम्यक्-त्वमनवगच्छन्

---

१-' यदात्वं..·दुध्याव्यवतरिष्यसि ' इति टीकापाठः २ राना १·२-तच्च.

अर्जुन उवाच।

स्थिरप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थिरधीः किं प्रभाषेत किमासीत व्रजेच्च किम् ॥ ५६ ॥

[१–एषु श्लोकेषु 'स्थिरप्रज्ञः–' 'स्थिरधीः–' इत्यत्र शां० पाठे 'स्थितप्रज्ञः–' 'स्थितधीः–' इति दृश्यते. २–व्रजेत।]

हे भगवन्केशव, कर्मसु कौशलं योग उक्तो निश्चलप्रज्ञता च स्थिरप्रज्ञता। तदेवंविधस्यास्य स्थिरप्रज्ञस्य का भाषा कथमसौ भाषते। किमस्य व्याख्यानविरुद्धमिवास्य चेष्टितम्। यतो वाङ्मनःकायैस्त्रिभिर्व्यापारणं कर्मोच्यते। तास्तिस्रोऽपि चेष्टा नास्योपपद्यन्ते। किमसौ भाषेत भाषणक्रियां चानुतिष्ठेत्। न ह्यस्यैकतत्त्वनिश्चलप्रज्ञत्वाद्भाषणं वचनकर्मोपपद्यते। उत आसीत, वाङ्मनसप्रचारपरिहारेणान्तर्यैव वृत्त्या तिष्ठेत। किमसौ व्रजेत् गमनक्रियोपलक्षितं कायव्यापारमाचरेत्। सोऽप्यस्य कर्मकौशललक्षणे यागे वर्तमानस्योभयकर्मनिर्वृत्त्यात्मिको नोपपद्यते। इति स्वरूपानवधारणात्कास्य भाषेत्युक्तम्। एतच्च प्रश्नत्रयमविवक्षितकर्मकक्रियामात्रविषयं वेदितव्यम् ॥

अथ 'यस्य सर्वे समारम्भा' इत्यादौ बुद्धिमच्छब्देनोक्तस्य स्थिरप्रज्ञस्य स्वरूपमुक्तप्रायमपि दुरधिगमत्वात्सम्यगनवधारितोऽपीदानीं केनाप्यंशेन विशेष्य पुनरुच्यमानमवधारयेत्यर्जुनं बोधयितुं भगवानाह,

श्रीभगवानुवाच।

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।
आत्मन्येवाऽऽत्मना तुष्टः स्थिरप्रज्ञस्तदोच्यते ॥ ५७ ॥

इह खलु सर्वरहस्यानामुपनिषद्भूतेऽस्मिन्विज्ञाने कश्चिदेव लक्षेष्वेको जन्मसहस्रपरिशीलितपर्यवभानैकात्मतापरामृष्टरजस्तमोमलतया सत्त्वमात्रशेषत्वे सति समुपजातस्वरूपप्रत्यवमर्शयोग्यप्रज्ञश्चरमजन्मा पुरुषातिशयोऽधिकारी यस्तथाविधावसरोपजातानुजिघृक्षः परमेश्वरप्रेषिताभ्यां सततसहचरीभ्यां भक्तिश्रद्धाभ्यां दत्तदृढहस्तावलम्बो यथोक्तज्ञाननिःश्रेणीस्थिरनिवेशितपदः परमकारणसमापत्तिप्रतिबिम्बरूपं परमं धामाधिरोढुमध्यवसितः यमुद्दिश्यात्मतत्त्वमेवार्हंतया व्यपदिशन्, वक्ष्यति,

---

१ राशा १·२–°सु किल कौ°. २ राशा १·२–°भानैका° ३ राना १·२–°र्श्चि°.

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ इति ।

तथा, 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।' इत्यादि । तादृशश्च संन्यस्येदमाचरति तदा स्थिरप्रज्ञो भवति । किमाचरति । यदा मनोगतान्संकल्पवर्तिनः कामान्, तत्त्वज्ञानुष्ठेयकर्मफलभूतान्सुखादीन्प्रजहाति प्रकर्षेण त्यजति । मनागपि तान्न संकल्पयति । न तु कर्माणि प्रजहाति । कथमेतत्संभवति । कर्माणि च करोति, फलं च प्रजहातीत्येतदुपपादयितुं विशेषणमाह । आत्मन्येवात्मना तुष्ट इति । सर्वः कश्चित्स्वसंविदधिकरणं तोषं प्रीतिमनुभवति । किंतु प्राप्तपूर्वेण केनचिदनित्येन प्राप्येन सुखसाधनभूतेन वस्तुना प्राप्तेनानित्यमेव तोषं प्राप्नोति । अयं तु योगी सततसंनिहितानस्तमितचित्प्रकाशात्मना परामर्शाभावमात्राव्यवधानमिव प्राप्तेन सर्वदा सुखसंपूर्णस्वमहिमत्वादखिलवस्तुस्पृहाविच्छेदकारिणा स्वयं निहितविस्मृतेन महानिधानेनैव पुनः प्रत्युदितस्मृतिवशात्प्रतिलब्धेनात्मनैव सत्येन स्वभावेन निरुत्तरेण लाभेन लब्धसहजानन्दः । एवंविधश्चायं कृपणप्रार्थनीयानुत्पादविनाशधर्मकान्कथं न प्रजह्यात् ॥

यदा चेत्थंभूतः स कामान्सर्वकर्माणि कुर्वन्नपि प्रजहाति तदा स्थिरप्रज्ञो यथोक्तस्वभावलब्धप्रतिष्ठबुद्धिर्भवतीति सामान्येन स्थिरप्रज्ञलक्षणमुक्त्वा तदेव विशेषतो वक्तुमाह,

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते ॥ ५८ ॥**

इह कर्मफलभूते सुखदुःखे प्राप्स्यमाने प्राप्ते च द्विप्रकारतया सर्वप्राणिनां विकारहेतुत्वमापद्यते । अयं तूक्तलक्षणः स्थितप्रज्ञः प्राप्स्यमानेषु सुखदुःखेष्वनुद्विग्नमना निर्भयचित्त एव भवति । सुखेषु च प्राप्स्यमानेषु विगतस्पृहो निवृत्ताभिलाषो भवति । यथोक्तपरिपूर्णात्मस्वरूपलब्धप्रतिष्ठत्वात्सर्वसाम्यसमाधिसमापन्नोऽत एव वीतरागभयक्रोधो, रागः सुखविषयोऽभिलाषस्तथा भयं सुखप्रतीघातहेतोरशक्यप्रतीकारात्संत्रासः, तथा क्रोधः शक्यप्रतीकारं तथाविधं प्रति रोषः । एते वीता विगता यस्य स तथाविधः स्थिरप्रज्ञ उच्यते ॥

१ राना १·२—व्युत्क°.

एवं प्राप्स्यमानसुखदुःखनिर्विकारतया तं प्रतिपादयितुमाह ।

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥**

योगी तत्तदनन्तभेदं सुखसाधनभूतं दुःखसाधनभूतं वा सुखात्मकं दुःखात्मकमेव वा शुभाशुभं प्राप्य नाभिनन्दति नापूर्वक्षणिकहर्षलक्षणं क्षोभं श्रयति । यतः सर्वस्मिन्वस्तुन्यनभिस्नेह इदं मम सर्वस्वमेतेन विना मम सर्वमन्यद् दुःखकारणमित्यभीष्टेषु वस्तुष्वनुरागोऽभिस्नेहः स यस्य नास्ति स तथोक्तः । तथाऽशुभं प्राप्य न द्वेष्टि, न तत्प्रतिषेधप्रयत्नलक्षणं क्षोभमुपयाति । य एवंविधः प्राप्तयोरपि प्रिययोर्नित्यनिर्विकारस्वात्ममात्रसुव्यवस्थितस्तस्य प्रतिष्ठिता प्रज्ञोच्यते ॥

एवं प्रतिष्ठितप्रज्ञत्वं येन कर्मणा उपायभूतेन निष्पद्यते, तद्वानपि स्थितप्रज्ञ एवेति प्रतिपादयितुमाह ।

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वतः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यः स्थिरप्रज्ञस्तदोच्यते ॥ ६० ॥**

[ शां. पा.– १–सर्वशः. २–तस्य प्रज्ञा प्रतिष्ठिता. ]

चशब्दो व्यतिरेके । यदा पुनरयं योगी सर्वतः सर्वेभ्य इन्द्रियार्थेभ्यः शब्दादिभ्य इन्द्रियाणि श्रोत्रादीनि संहरति व्यतिरेचयति । स्वभावतश्चिदर्करश्मिरूपाणि तन्निष्ठान्येव करोति । कथं, कूर्मः कच्छपो यथा स्वावयवान्स्वशरीरनिष्ठान्करोत्येवम् । तदाऽसौ स्थिरप्रज्ञ इत्युच्यते ॥

अथो विषयेभ्य इन्द्रियसंहारः किं शब्दाद्यग्रहणेन वा, किंवा ग्राह्यमाणेषु शब्दादिष्वपि निर्विकारत्वेनात्रोक्तः । इति पक्षद्वयसंभावनायां पूर्वपक्षस्थैर्यप्रतिपादनपूर्वमुत्तरमेव पक्षं समर्थयितुमाह ।

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥**

अभ्युपगम्येदमुच्यते, अस्त्येतत् । निराहारस्य शास्त्रविहितानपि शब्दादीननाहारतस्तान्दूरतः परिहरतो विषया इष्टाः शब्दादयो विनिवर्तन्ते प्रत्यासत्त्यभावात्स्वकार्यं रागादिकं नाऽऽरभन्ते । किंतु रसवर्जं तद्विषयं रसमभिलाषं रागाख्यं

---

१ राना १·२–सर्वशः.

क्लेशं वर्जयित्वा। स हि तदानीं प्रसुप्ततनुर्वा वर्तते । येदि वा परमनैष्ठिकस्य रसोऽपि निवर्तते नाम। परं प्रकृष्टं समाध्युपेयं वस्तु दृष्ट्वा साक्षात्कृत्य, ऐष योगी यदा परं तत्त्वं विषयपरिहारं समाधिक्रमेण पश्यति, तदा तं दृष्टवतस्तस्य रसोऽपि जातु निवर्तत इति, प्रक्रान्तं निष्ठार्थत्वेन व्याख्येयम् ॥

एवं विषयपरिहारपरमसमाधेः परामपि काष्ठां प्राप्तस्य सशूलत्वं प्रतिपादयन्यथोक्तज्ञानप्रवेशनिषिद्धविषयसेवात्मकं सच्छलं समाधिं दृष्टान्तीकुर्वन्नाह।

**यत्तस्यापि हि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६१ ॥**
**तानिं संयम्य मनसा युक्त आसीत तंत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६२ ॥**

[शां. पा.–१–यततो ह्यपि. २–तानि सर्वाणि संयम्य. ३–मत्परः. ]

यद्यस्मात्तस्यापि विषयानाहरणसमाहितस्य परतत्त्वदर्शनयोग्यतामपि प्राप्तस्य विदुषो विपश्चितो ज्ञानविघातजागरूकत्वाच्छिद्रान्वेषणपराणि प्रमथनशीलानीन्द्रियाणि प्रसभं प्रसह्यैव कंचिदवकाशलेशं लब्ध्वा मनश्चित्तं हरन्ति, लब्धादपि समाधिफलादपकर्षन्ति, विषयाभिमुखतां नयन्ति । श्रूयते हि तथाविधविषयप्रतिषेधयोगनिष्ठा योगिनश्चिरादपि, इन्द्रियैः कामान्प्रति प्रवर्तनेन प्रमथितचित्ताः । यत एवमयं संश्वलो विषयप्रतिहारसमाधिरततस्तानीन्द्रियाणि मनसा यथोक्तज्ञाननिष्ठेन चेतसा संयम्याऽऽत्मवशानि कृत्वा युक्तो यथोक्तलक्षणो स्वात्मतत्त्वे समाहितः सर्वास्ववस्थासु तदेकनिष्ठः संस्तत्परः शास्त्रनिषिद्धशब्दादिग्रहणाप्रवृत्तेन्द्रियनिष्ठ एवाऽऽसीत। यस्माद् यथोक्तेन क्रमेण यस्य योगिन इन्द्रियाणि वशे विधेयत्वे वर्तन्ते तस्य प्रतिष्ठिता लब्धनिश्चलस्थितिः प्रज्ञोच्यते। अत्रायं दृष्टान्तः । कश्चिद्गारुडिकस्तादृशः संभवति यो मन्त्रप्रभावेण भुजगान्प्रतिषेद्धुमलम्। स यदा तादृङ्मन्त्रोपासनशैथिल्यलक्षणं प्रमादमातिष्ठति, तदा ते छिद्रान्वेषिणो भुजगास्तं व्यापादयन्त्येव। कश्चिद्गारुडशास्त्ररहस्यवेदितत्वात्तादृशातिशययुक्तो भवति, येन तैरेव भुजगैः स्रग्दामभिरिव क्रीडति। तं च ते न कदाचिदभिभवितुं प्रभवन्ति। एवं योगी कयाचिद्युक्त्या कंचित्कालं विषयान्परिहृत्य समाधिमभ्यस्यति। तस्य मनागप्यवधानविच्छेदात्ते लब्धाव-

---

१ राशा १–' यदि वा ' नास्ति. २ राशा १–यदि वा एष. ३ राना १.२–°प्रतिहार°.

काशा विषयाश्चित्तं प्रमथन्त्येव। यस्तु यथोक्ते पारमार्थिके स्वात्मन्येव सदा सुव्यवस्थितः स विषयैः क्रीडन्नपि न कथंचिद्बाधितुं शक्यः। यथोक्तम्–

बसन्विषयमध्येऽपि न वसत्येव बुद्धिमान्।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि॥

अथ कूर्मोऽङ्गानीवेत्युपमाननिर्देशाद्विषयेभ्योऽत्यन्तव्यावर्तनमेवेन्द्रियाणां संहारः संयमो यस्तेभ्योऽन्यथेव तं प्रतिपादयन्प्रतिष्ठितप्रज्ञत्वस्य श्लोकपञ्चकेन मुख्यं लक्षणमाह।

**ध्यायतो विषयान्पुंसः संगस्तेषूपजायते।**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते॥ ६४॥**
**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ ६५॥**
**रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥ ६६॥**
**प्रसादे सर्वदुःखानां हानिरस्योपजायते।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते॥ ६७॥**
**तस्माद्यस्य महाबाहो निगृहीतानि सर्वतः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥ ६८॥**

[ शां. पा.–१–'वियुक्तैः. २–श्लोकानन्तरं–' नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना। न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥ इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥' इति श्लोकद्वयं शां० पाठे अधिकम्. ३–सर्वशः.]

इह खल्वचिन्त्यपरमेश्वरमायामुषितसम्यग्ज्ञानतया शरीरमात्रमात्मत्वेन प्रतिपन्नस्य संसारिणः सतः पुंसः संनिहितमपि मुख्यध्येयं निरुपमानन्तनिजानन्दसुधासागरं सत्यं स्वात्मानमविमृष(श)तो दुःखैकपरिणामानित्यकृत्रिमसुखसाधनस्पृहया शब्दादीन्विषयान्ध्यायतः सततं चिन्तयतस्तेषु संगो निबिडनिमग्नमानसत्वमुपजायत उत्पद्यते। तस्मात्तथाविधात्संगात्कामस्तद्विषयोऽभिलाषो रागाख्यः क्लेशः संजायते समुद्भवति। तस्माच्च तत्प्रातिकूल्येषु वस्तुषु क्रोधो द्वेषाख्यः क्लेशप्रकारोऽभिजायते प्रभवति। ततश्च संमोह आत्मानात्मादिवस्तुविवेकविरहात्मकमज्ञानं प्रभवति, मोहाख्यः क्लेश उन्मज्जतीत्यर्थः। ततश्च स्मृतिर्विभ्रा-

१ राशा १–निरुत्तरानन्त°. २ राशा १–ततस्तु.

ष्यति । सत्यं स्मर्तव्यमात्मानमस्पृशन्ती स्वरूपलोपमिवाऽऽप्नोति । तादृशाच्च स्मृतिभ्रंशाद्बुद्धिः परमार्थनिश्चयात्मकं ज्ञानं नश्यति तिरो भवति । तस्माच्च हेतोः पुरुषः सत्यस्वरूपप्रतिष्ठाभावलक्षणं नाशमुपगच्छतीति संसारिणं पुरुषमुद्दिश्याप्रतिष्ठितबुद्धित्वस्य हेतुपरम्परां प्रतिपाद्येदानीमनुजिघृक्षाक्षणाक्षिप्यमाणसंदेहतिरस्कारिणी तिरोधानतया प्रकाशमानयथोक्तस्वस्वभावप्रकाशस्य प्राप्तप्रबोधस्य मुमुक्षोः प्रतिष्ठितप्रज्ञत्वस्य कारणक्रमं प्रतिपादयितुमाह–आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छतीत्यादि । आत्मवश्यैर्विधेयात्मा तु पुमान् विधेयः प्रत्यवमर्शविषयभूतत्वात्स्वाधीन आत्मस्वभावो यस्य स तादृशः पुरुष आत्मवश्यैस्तादृशस्य सत्यस्याऽऽत्मनः स्वशक्तितया प्रतिपाद्यमानत्वाद्विधेयैस्तदधीनप्रवृत्तिस्थितिसंहृतिभिरिन्द्रियैर्बाह्याभ्यन्तरैः करणैः किरणैरिवार्कः पदार्थान्विषयांश्चरन् गच्छन्प्रसादं सुखादिकलङ्कसंपर्काभावरूपं वैषाद्यमधिगच्छति प्रतिलभते । अत एव कीदृशैरिन्द्रियैर्विषयांश्चरन्–रागद्वेषविमुक्तैः[1] । रागद्वेषौ हि विषयमात्रध्यानसंप्रसक्तस्य विस्मृतस्वात्मनः पुंसो विषयान्[2]प्रवर्तमानेष्विन्द्रियेषु परिस्फुरतः । यस्य तु सर्वतः परिपूर्णत्वान्नित्यनिरभिलाषस्वरूपप्रत्यवमर्शपूर्वकः सर्वज्ञानक्रियाव्यवहारः, तस्य रागद्वेषाभ्यां विमुक्तानीन्द्रियाणि स्वं स्वं विषयमभिप्रवर्तन्त इति तादृशैरिन्द्रियैर्विषयान्तश्चरन्प्रसादमधिगच्छतीत्युक्तम् । एवंविधे च निसर्गनिर्मले स्वरूपाभिव्यक्तिलक्षणे प्रसादे सति रागादिक्लेशनिबन्धनानां सर्वेषामाध्यात्मिकाधिदैविकाधिभौतिकानां दुःखानां हानिः परिक्षयोऽस्य पुंस उपजायते । यतो यथोक्तेन प्रकारेण प्रसन्नं नीरागद्वेषकलङ्कं चेतो यस्य तादृशस्य पुंस आशु प्रसादसमनन्तरमेव[3] बुद्धिः प्रज्ञा पर्यवतिष्ठते । परितः समन्तात्सत्ये स्वात्मनि निर्विप्लवां प्रतिष्ठां लभते । यत एवं तस्मात्कारणाद्यस्य पुरुषस्य सर्वतः सर्वेभ्यः सुखहेतुभ्यो दुःखहेतुभ्यश्चेन्द्रियार्थेभ्यो विषयेभ्यो दुःखहेतुष्वपि द्वेषरहितत्वेन सुखहेतुष्वपि नीरागतया प्रसृतान्येव निगृहीतानि नियमितानि बाह्याभ्यन्तराणीन्द्रियाणि तस्य तथाविधस्य प्रत्यासन्नपरमेश्वरसायुज्यस्य प्रज्ञा बुद्धिः प्रतिष्ठिता, स्वात्मनि लब्धस्थितिः। न त्वन्यस्य। यः प्रतनुप्रयत्नलक्षणसमाधिनिरुद्धान्यनुत्खातरागद्वेषमलमयमूलत्वात्प्रसृतानि कार्यकारणान्येव निगृहीतानीन्द्रियाणि मन्यन्ते ॥

---

१ राना १·२–स्मृतिभ्रंशात् ' इत्यत्र ' तस्मात् '. २ राना १·२–' वि ' नास्ति. ३ राना १·२–प्रतिवर्त°.

अत एव समस्तसंसारिपुरुषविलक्षणां प्रबुद्धस्य वृत्तिं प्रतिपादयितुमाह ।

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

सर्ववस्तुप्रकाशस्वरूपप्रकाशनिरूपणरूपा वृत्तिरेवेह संसारिणः प्रति निशा-शब्देनोक्ता । तद्विषयत्वेन सर्वभूतान्यनुन्मिषितदृक्शक्तित्वात्प्रसुप्तानि तिष्ठन्ति । एवंविधा या सर्वभूतानां निशा तस्यां तद्विषये संयमी यथोक्तप्रकारेण निगृहीतसर्वेन्द्रियः प्रबुद्धो जागर्ति, प्रविकसितस्वभावनिर्मलविज्ञानमयविलोचनविभाव्यमानां तामेवाविमुञ्चन्विगतमोहनिद्र आस्ते । यस्यां तु प्रतिक्षणविनश्वरसुखदुःखसाधनभूतविषयग्रहणोत्सर्गव्यग्रसमग्रेन्द्रियग्रामायां संसारव्यवहारवृत्तौ सर्वभूतानि समस्तप्राणभृतो जाग्रति, तावन्मात्रावहितत्वाद् विनिद्रतामिवानुभवन्ति । सा तादृशी वृत्तिः पश्यतः सदसत्पदार्थसार्थपरमार्थमालोकयतो मुनेः संयमिनः प्रबुद्धस्य निशा रात्रिः । तां प्रति तस्य निरवधानत्वात् ॥

एवं सततमनस्तमितसामान्यसंवित्प्रकाशात्मनि स्वभावे सुव्यवस्थितप्रसन्नबुद्धिः प्रबुद्धः पवन इव सदसदात्मकामोदैः[1] विविधैः पदार्थैः परिचयमुपगच्छन्नपि तत्संपर्कजातैः सुखादिभिर्मनागपि न विकृतिं नीयत इत्युपमाननिदर्शनेन स्फुटतरं तत्स्वरूपं प्रतिपादयितुमाह ।

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

स प्रबुद्धः पुरुषातिशयः शान्तिं सकलविकल्पकल्लोलक्षोभपरिक्षयान्निस्तिमितचित्तवृत्तिमधिगच्छति प्राप्नोति । कोऽसौ । यं कामविषयास्तद्वत्प्रविशन्ति निरभिलाषमेवावगाहन्ते । कथम् । यथा समुद्रं नानादिगन्तरागतसरिद्रूपा आपः । कीदृशम् । ताभिरापूर्यमाणं भ्रियमाणमप्यचलप्रतिष्ठं निष्प्रकम्पापारगम्भीरनिजावस्थानम् । अनेनोपमानेन प्रत्यासत्तिसामर्थ्यात्संबध्यमानैरपि सुखादिहेतुभिः शब्दादिभिर्यः क्षोभं नेतुं न शक्यते स एव शान्त इत्युच्यते । न तु यस्तेषु संनिहितेष्वशान्तः । यथोक्तम्—

---

१ राशा २—°सदामोदैः. राना १ ( प० लि० ) सदात्मकैः.

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः। इत्यत एवाऽऽह-
न कामकामी शान्तिमाप्नोति ॥

मानसान्कामान्सुखसाधनभूतान्विषयान्कामयमानोऽभिलष्यन्नेवेन्द्रियव्यापारप-
रिहारमात्रेण न शममाप्नोतीत्येवमभिप्रायं प्रकटयितुमाह ।

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

यः सर्वानशेषान्कामानिष्टान् शब्दादिविषयानभिलाषान्मनसैव विहाय परि-
त्यज्येन्द्रियैर्विषयांश्चरत्यवगाहते स शान्तिं मुक्तिरूपामधिगच्छति प्राप्नोति ।
कीदृशः सन् । नित्यतृप्ताद्वयाचिन्मात्रप्रतिलब्धात्मप्रत्ययत्वान्निःस्पृहः स्पृहातो
विषयसुखलोलुपताया निष्क्रान्तः । तथा निर्ममः प्रतिनियतेषु देहेन्द्रियविषया-
दिषु भावेषु ममैवेदमिति ममत्वाभिमानान्निष्क्रान्तः । तथा निरहंकारो देहबुद्धि-
प्राणादिष्वात्मप्रत्ययरूपादविच्छिन्नादहंकारादपि निष्क्रान्तः ॥

इत्येतदन्तेन ग्रन्थेनापवर्गमार्गप्रवणस्य पुंसः प्रथममेव सहजभक्त्याद्यव्यभिचार-
चिह्नसूचितोपदेशयोग्यबुद्धितया सद्गुरूपदिष्टदेहदेहिव्यतिरेकज्ञाननिरन्तराभ्या-
सवशाद्देहादिवर्गव्यावर्तमानात्मप्रत्ययस्याद्वैतसामान्यसंवित्प्ररोहादहंप्रतीतेश्चिदर्कर-
श्मिरूपाणामन्तर्बहिष्करणशक्तीनां शास्त्रचोदितेषु विषयेषु विसृष्टत्वमेव निग्रहं
निरुत्तरपदप्राप्तिहेतुं सिद्धान्तीकृत्य सप्तदशाध्यायप्रदर्शितपरमरहस्योपदेशप्राणभू-
तार्थप्रतिपादकं द्वितीयमध्यायमुपसंहरन्नाह ।

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**
**इति श्रीभगवद्गीतासूपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥**

एषा विहाय कामान्यः सर्वानित्यन्तेन ग्रन्थेन प्रतिपादिता ब्रह्मणः परस्य
तत्त्वस्य परमात्मसंज्ञकस्य संबन्धिनी स्थितिः। एतया ब्रह्मणि स्थीयत इति विष-
यान्तरनिवृत्तगतितया प्रतिष्ठा क्रियते । अत एवैनां प्राप्य यथोक्तेन क्रमेण
स्वात्मीकारेण स्वीकृत्याभियुक्तो न मुह्यति, देहादिष्वात्मप्रत्ययरूपं वैचित्र्यं न
भजते । यतोऽस्यामन्तकालेऽप्युपरमसत्स्वभावमयेऽपि स्थित्वा विश्राम्य निर्वाणं
नानाविकल्पक्षोभप्रत्ययात्प्रशान्तं ब्रह्म परं तत्त्वं स्वस्वभावमयमृच्छति गच्छति ।
तदैकात्म्यमापद्यत इत्योम् ॥

---

१ राना-१-२ °लष्यत्येव.

द्वितीयेऽध्यायेऽस्मिन्ह्रदय इव गम्भीरविमले
　　गृहीते गीतानां विबुधदयितानां प्रणयतः ।
तदाश्लेषानन्दामृतरसमपूर्वं रसयतां
सदा वः पुंभावो भवतु कृतकृत्यः कृतधियाम् ॥

इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतो-
भद्रनाम्नि भगवद्गीताविवरणे द्वितीयोऽध्यायः ॥

॥ तृतीयोऽध्यायः ॥

अथ ज्ञानस्य कर्मणश्च भगवद्भाषितानि पृथक्प्रशंसावचनान्यनुविमृषन् सम्य-क्समुच्चयार्थमनवधार्य किमेतयोरुपादेयतरं स्यादिति संशयानो भगवन्तम् ।

अर्जुन उवाच ।

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

दूरेण ह्यवरं कर्म बुद्धियोगादित्यादि वदतस्तव कर्मणः सकाशाद्यदि बुद्धि-र्ज्यायसी मता ज्ञानं प्रकृष्टतरत्वेनाभिप्रेतं तत्किं केन हेतुना बन्धहेतुत्वात्सर्वस्मि-न्कर्मणि, दारुणविपाकत्वात् घोरे विशेषतोऽस्मिन्गुरुज्ञातिघातादिमहापातकहेतौ संग्रामरूपे, मां 'कर्मण्यस्त्वधिकारस्ते' इत्यादिना नियोजयसि प्रवर्तयासि । इत्थं च परस्परविरुद्धज्ञानकर्मप्रशंसारूपत्वाद्व्यामिश्रेण संकीर्णेन वाक्येन मम बुद्धिं प्रज्ञां मोहयसीव, निश्चयोपदेशेन प्रबोधनमिच्छन्संशयापादकवचनप्रणय-नाद्वैचित्र्यमिव मां प्रापयसीत्यर्थः । तस्मात्कारणादेतयोर्ज्ञानकर्मणोर्मध्यादेकं ज्ञानं वा कर्म वेदमेवानुष्ठेयमिति निश्चित्य निर्णीय ब्रूहि । येनैकतरेण सुगृहीतेन सता श्रेयोऽपवर्गलक्षणमभ्युदयमहं प्राप्नुयां लभेयेति ॥

अथान्यथैव मयोक्तमन्यथैव प्रतिपन्नमित्यर्जुनं प्रत्युपालम्भमिवाविप्लवंस्तत्सं-शयव्युदासाय ।

---

१ राशा १–त्रिचित्रार्थान्वय°. २ अध्यायारम्भे राना २–ॐ श्रीज्वालाभगवत्यै नमः । ३ राना १·२–अविचार्य.

श्रीभगवानुवाच ।

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

सांख्या, यथाप्रतिपादितलक्षणशरीरिशरीराद्युपादेयहेयपदार्थसंख्यानं, तद्विदो मुख्यतया सांख्या उच्यन्ते । योगो यथोक्तसांख्यनिश्चितार्थसाक्षात्कारकरणं[1] क्रियाविशेषः । स विद्यते येषां तेऽपि मुख्यतया योगिनः । कपिलादयो हैरण्यगर्भादयश्च गौण्या वृत्त्या सांख्या योगिनश्चोच्यन्ते । यथोक्तलक्षणस्य परमात्मादेरर्थस्य तेषामनिश्चयादसाक्षात्काराच्च । तदेवंविधानां मुख्यानां सांख्यानां योगिनां च पुराऽस्मादध्यायात्पूर्वं द्वितीयेऽध्याये मयैकैव निष्ठोक्ता निश्चयसिद्धान्तः प्रतिपादितः । कीदृशी निष्ठा, द्विविधा । द्वे एकानुष्ठातृपुरुषनिष्ठे युगपत्प्रयोज्ये विधे विधाने प्रकारौ यस्याः सा तथोक्ता । केन प्रकारेण द्विविधेत्याह—ज्ञानयोगेनेत्यादि । यथा प्रतिपादिताद्वयचिन्मात्रस्वरूपस्याऽऽत्मतत्त्वस्य प्रत्यभिज्ञालक्षणप्रतिपत्तिरिह ज्ञानमुच्यते । तद्विषयो योगः समाधिः । कर्मण्यपि सत्ययथोक्तस्वरूपाप्रच्युतिलक्षणं प्रणीतम् । तेन ज्ञानयोगेन यथोक्तानां मुख्यानां सांख्यानां निष्ठा मयोक्ता । ते हि नैष्ठिकाः सांख्या येषां कर्मणि प्रवृत्तानामपि यथोक्तात्मज्ञानविषयः समाधिरविप्लुतः । कर्म यथावर्णं यथाश्रमं, शास्त्रचोदिता सा सा क्रिया । तत्र योगः समाधिर्यथोक्तज्ञानापरित्यागेन तदनुष्ठाननिष्ठिता । तेन कर्मयोगेण मुख्यानां योगिनां निष्ठोक्ता । एवं ज्ञानयोगस्य कर्माविनाभावात्कर्मयोगस्य च ज्ञानाविनाभावादेकैव प्रकारद्वयनिर्वर्त्या निष्ठा मया पूर्वमुक्ता । तत्प्रतिपादकश्च ग्रन्थस्तत्रोक्तः कथं विस्मृतो भवता । तथा च दूरेण ह्यवरं कर्मेत्यादिना ज्ञानस्य प्रकर्षप्रतिपादनमुपक्रम्य तत्समाधिप्रतिपादनायोक्तम् ‘ तस्माद्योगाय युज्यस्व, ’ कर्मनिष्ठो भव । यतः कर्मसु यो योगस्तत्कौशलं सा बुद्धिमत्ता ज्ञानित्वमित्यनेन ज्ञानयोगेन सांख्यानां निष्ठेति तत्रोक्तम् । तथा कर्मण्यस्त्वधिकारस्ते, तस्माद्योगाय युज्यस्वेत्यादिना कर्मणोऽवश्यकरणीयत्वं व्यवस्थाप्य तत्समाधिप्रतिपादनायोक्तम् ।

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
कर्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ इति ।

---

१ राशा २ ना १·२–°करणविशेषः. २ राशा १–प्रणिधानम्.

तथा, रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥

इत्याद्यनेनापि कर्मयोगेण योगिनां निष्ठा तत्रोक्ता। किं बहुना, दूरेण ह्यवरं कर्मेत्यतःप्रभृत्यध्यायपरिसमाप्तिर्यावदेकपुरुषानुष्ठेयद्विविधनिष्ठाप्रतिपादनपरत्वेन सर्वो ग्रन्थस्तत्र व्याख्यातः[1]। तत्का मे व्यामिश्रवचनता ययैवं ते बुद्धिमोह उत्पन्नः॥

अथ मन्यसे यथोक्तात्मलक्षणैकार्थावधि तत्त्वं ज्ञानमित्युक्तम्। कर्म च नानाविषयहानादानरूपव्यापारात्मकम्। तदेतयोर्ज्ञानकर्मणोः परस्परविरुद्धयोर्युगपदेकपुरुषानुष्ठेयत्वं कथमुपपद्यत इत्यत्रोच्यते। सम्यगनवधारिता ज्ञानकर्मानुष्ठाननिष्ठा तवैवं बुद्धिमोहकारणमतस्तां पुनरुच्यमानामवधारयेति मनसि कृत्वाऽऽह।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

अगृहीतयथाप्रतिपादितसमुचितसमुच्चयार्थानिश्चयत्वात् सर्वथा कर्मणां ज्ञानविरोधित्वं मन्वानस्य तव यदेतन्नैष्कर्म्यमविद्यमानकर्मत्वं सिद्धिहेतुत्वेन प्रतिभाति, तत्सिद्धिकामः पुरुषः कर्मणां सर्वक्रियाणामनारम्भादननुष्ठानान्नाश्नुते न प्राप्नोति। वक्ष्यमाणया युक्त्या शरीरित्वाव्यभिचारिणां शास्त्रीयाणां च कर्मणां दुष्परिहरत्वात्। अतो न कर्मणामेषामकरणमात्रमभावत्वेनेह विवक्षितम्। किंतु बन्धलक्षणस्वकार्यसंपादनसामर्थ्यभङ्गेनैषामभावापादनमिहाभिप्रेतम्। अथ विहितकर्मानुष्ठानमात्रं कर्मत्यागः संन्यासोऽभिमतः। तदेवंविधात्संन्यसनमात्रादेव केवलाद्यथाप्रतिपादितज्ञानशून्यान्न पुरुषः सिद्धिमपवर्गलक्षणां संपत्तिमधिगच्छति समासादयति॥

यदीह ज्ञानरहिताद्विहितकर्मपरिहारमात्रान्मोक्षलक्षणफलावाप्तिः स्यात्तत्सुषुप्तादयो मोहात्मकत्वान्नैष्कर्म्यमावहन्तोऽवस्थाविशेषाः सिद्धिहेतवः स्युर्न स्युर्न च विहितकर्मानारम्भमात्रान्नैष्कर्म्यसिद्धिरिति यदुक्तं तत्र हेतुमाह।

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

हिशब्दो हेतौ। यस्मात्कश्चिद्देही जातु कदाचित्तत्तदवस्थाविशिष्टे

---

१ राना १·२–' व्याख्यातः ' इत्यत्र ' उक्तः.

कस्मिंश्चिदपि काले न क्षणमपि सुसूक्ष्ममपि तदवयवकर्मकृत्तिष्ठति, कर्म कुर्वाणः स्थितिमनुभवति वर्तत इत्यर्थः। तथा च बाल्ययौवनवार्धकरूपासु स्थूलास्ववस्थासु मनोवाक्कायैः सर्वः कश्चिद्देही कर्म कुर्वन्नास्त इति सुव्यक्तमेव। तदन्तर्गतासु च जागरस्वप्नसुषुप्तरूपासु सूक्ष्मास्ववस्थासु न कश्चिदकर्मकृत्। यतो जागरावस्थायां शब्दादिविषयग्रहणव्यग्रेन्द्रियव्यापाररूपायां सर्वस्य तत्कर्मनिष्ठत्वं स्फुटमेव। स्वप्नावस्थायामपि विषयग्रहणाविलोपान्न कस्यचिदकर्मत्वे स्थितिः। सुषुप्तावस्थायां तु तत्कालव्यतिरिक्तविषयसंवेदनाभावेऽपि प्रतिबोधकाले सुखदुःखमोहरूपानुभूतविषयप्रत्यवमर्शान्यथानुपपत्त्या मानसं कर्म विद्यत एव। या अपि योगिविषया एता जागरादयोऽवस्थास्तास्वप्येषैव वार्ता, यतो जागरस्वप्नयोर्ग्राह्यग्रहीत्रादिविकल्पानुस्मरणात्, सुषुप्तावस्थायामपि तत्कालग्राह्यग्रहणग्रहीतृभेदसंवेदनाभावे सत्यपि व्युत्थाने तथाविधसमाध्यवस्थाप्रत्यवमर्शान्यथानुपपत्तिरिति तिसृष्वपि योग्यवस्थासु न कश्चिदकर्मकृद् वर्तितुमर्हतीति विहितकर्मानारम्भमात्रान्न नैष्कर्म्यसिद्धिरिति पूर्वेण संबन्धः। इत्थं सर्वकर्माभावस्यानुपपत्तौ हेतुमाह। हिशब्दो हेतौ। यस्मात्सर्वः कश्चिद्देहभृदवशः परतन्त्र एव सम्प्रकृतिजैः प्रधानभावैर्गुणैः सत्त्वादिभिः कर्म शास्त्रविहितं शरीरित्वाव्यभिचारि च ग्राह्यतेऽनुष्ठाप्यते। इह हि परमेश्वरेच्छापरिकल्पितकारणभावं प्रकृत्याख्यं तत्त्वमन्योन्यगुणप्रधानभावपरिणतसत्त्वादिगुणमयं तत्तच्छरीरमशेषशरीरिणामारभते। गुणश्चान्योन्याविनाभाववृत्तित्वाद्रजोगुणानुगतत्वे सति सर्वं कंचिच्छरीरिणं सात्त्विकादिकर्माधिकृतं कुर्वत इति प्रकृतिजैर्गुणैः सर्वः कर्म कार्यते इत्युक्तम्॥

एवं च सर्वदेहिनां सर्वावस्थासु सर्वकर्मावच्छेदानुपपत्तौ स्थितायां विहितानां[1] कर्मणामनारम्भमात्रेण नैष्कर्म्याभिमानिनो योगिनः शरीरित्वाव्यभिचारिदुष्परिहरकर्मान्तरसद्भावात्कैवल्यलक्षणासिद्ध्यभावः प्रसक्त इति तथाविधस्य प्रायेण योगित्वप्रतिपादनार्थमाह।

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥ ६॥**

उक्तयोपपत्त्या मानसस्य कर्मण उपरमाभावाद्यो योगी मनसाऽन्तःकरणेनेन्द्रियार्थान् शब्दादीन्स्मरंश्चिन्तयन्नास्ते, नैष्कर्म्यबुद्धिमालम्ब्यावतिष्ठति, स मिथ्या-

---

१ शशा १·२–' विहितानां ' नास्ति.

चार उच्यते। तादृशं योगाचरणं फलविसंवादाद् वृथैवेत्यर्थः। यतः कर्मेन्द्रियाणि, कर्मेन्द्रियशब्देनेह बहिष्करणानि श्रोत्रादीनि वागादीनि च गृह्यन्ते। तेन शब्दादिग्रहणव्यापाराधिकृतानि श्रोत्रादीन्यक्षाणि नियम्य प्रयत्नविशेषेण स्वव्यापारान् प्रतिषिध्यासौ किंचित्कालं तथाऽऽस्ते। न तु तावता सर्वात्मना सर्वक्लेशोच्छेदनलक्षणकैवल्यफलप्राप्तिः। यतस्तथाविधायां समाध्यवस्थायां यदि परं क्लेशाः प्रसुप्ता भवेयुः, येषां व्युत्थाने पुनः प्रबोधादनुच्छेदो गम्यते ॥

यस्मिंस्तु समाधौ दग्धबीजकल्पतामापाद्यमानास्ते क्लेशाः सत्यप्यालम्बने प्ररोहसामर्थ्यं न भजन्ते, तदधिकृतस्येह विवक्षितस्य योगिनः पूर्वस्माद्विशेषं 'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्' इत्यादिना पूर्वोक्तमपि स्मारयन्पुनराह।

**यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

तुशब्दो व्यतिरेके। स पुनरसक्तः सङ्गरहितो योगी पूर्वस्माद्योगिनो विशिष्यते, प्रकर्षत्वेन व्यतिरिच्यते। कोऽसौ। यो मनसा यथाप्रतिपादितलक्षणसत्यात्मलब्धप्रतिष्ठत्वात्सर्वसाम्यदशाधिरूढनान्तःकरणेन बुद्ध्या श्रोत्रादीनि नियम्य रागादिदोषसंस्पर्शान्न तु शब्दादीन्विषयान्प्रतिषिध्यत। एवंविधै रागादिस्पर्शशून्यैः कर्मेन्द्रियैः कर्मसु शब्दादिग्रहणरूपेषु व्यापारेष्वधिकृतैरक्षैः कर्मयोगमारभते, कर्मणा शास्त्रचोदितशब्दादिग्रहणरूपेण योगसंबन्धमारभते प्रस्तौति। रागद्वेषपरिहारः प्रकरणप्रतिपाद्यासिद्धिसाधनं, न तु कर्मणामनारम्भः ॥ तस्मात्,

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

तस्मान्नियतं वर्णविभागेनाऽऽश्रमविभागेन च शास्त्रेण नियन्त्रितं कर्म, तां तां क्रियां कुरु, अनुतिष्ठ, मा कदाचन त्याक्षीः। यतोऽकर्मणः कर्माभावात् क्रियात्यागात् कर्म विहितकर्मानुष्ठानं ज्यायः श्रेष्ठम्। यतः केषांचिदेव कर्मणामनारम्भो कर्माभावभ्रमो न सिद्धिहेतुः। क्लेशानामनुच्छेदात्। यथोक्तेन समाधिना त्वनुष्ठीयमानं कर्म व्युत्थानहेतुषु विषयेषु सत्स्वपि क्लेशोन्मेषाभावाय पर्यवस्यति तत्प्रशस्यतरम्। न च शरीरित्वे सति सर्वकर्माभाव उपपद्यते। यतस्तवाकर्मणः सर्वात्मना कर्मरहितस्य स्थाणुकल्पस्य शरीरयात्राऽपि देहवृत्तिरपि न प्रसिध्येन्न

---

१ राशा १–तादृश्यरूपं. २ राना १·२–' पुनः ' इत्यत्र ' इति '. ३ राना २–क्रियया योग°.

घटेत। न च पानाशनशयनासनगमनात्कंचन कण्डूयनादिक्रियाकलापमन्तरेण केनचिद्वर्तितुं शक्यम् ॥

इत्थं च कर्मणः सर्वथाभावानुपपत्तौ स्थितायां न सर्वं नाम कर्मानुष्ठीयमानं सिद्धये कल्पत इत्याह।

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

यज्ञो यजनं, मुख्यया वृत्त्या दैवतपूजनम्। दैवतमपि यस्मिन्सर्वमित्यादिश्लोकव्याख्यातस्वरूपः परमेश्वरः परमात्मैवैकं तत्त्वमिहाभिप्रेतम्। तस्य पूजनमपि यथाप्रतिपादितविज्ञानपरिशीलनविशुद्धया संविदा स्वभावत्वेन परामर्शलक्षणमाराधनम्। सोऽर्थः प्रयोजनं यस्य तादृशं यत्कर्म तस्मात्तथाविधात्कर्मणोऽन्यत्र, तादृशं कर्म वर्जयित्वाऽन्यादृशं कर्म कुर्वाणः सर्वोऽयं लोकः कर्मबन्धनो भवति। कर्म शास्त्रचोदितमप्यनुष्ठानं बन्धनं संसारदायित्वात्पारतन्त्र्यहेतुर्यस्य स तथा यथोक्तात्मतत्त्वज्ञानशून्यतया विधिवदनुष्ठीयमानं शास्त्रीयमपि कर्म बन्धनायैव कल्पते। यथाप्रतिपादितविज्ञाननिष्ठतयाऽनुष्ठीयमानं तु परमेश्वराराधनलक्षणमुख्ययोगहेतुत्वात्परासिद्धिदं भवतीत्यर्थः। तथा च वक्ष्यति।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमेवाऽऽभ्यर्च्य सिद्धिं विन्दति मानवः॥ इति।

यत एवं ततस्त्वं तादृशस्य यज्ञस्य संपत्तये कर्म, शास्त्रचोदितां क्रियां समाचर सम्यक्कुर्वित्यर्थः। कीदृशस्तस्य सम्यक्करणेऽधिकृत इति विशेषणमाह, मुक्तसङ्ग इति। मुक्तोऽसंकल्पात्परिहृतसङ्गो रागद्वेषादिदोषहेतुर्विषयेषु निमज्जनं, तदेकनिमग्नचित्तत्वं येन स तथाविधः सन्नित्यनेन मुमुक्षोस्तावत्कर्मापरित्यागः प्रतिपादितः॥

इदानीं कश्चित्प्रवृत्तिलक्षणधर्माधिकृतः कश्चिन्निवृत्तिलक्षणधर्माधिकृत इति द्विविधे शास्त्रोपदेशविषयभूते लोके न कस्यचिदपि कर्मपरित्याग उपपद्यत इति क्रमेण प्रतिपादयितुं प्रवृत्तिधर्माधिकृतस्यैव तावदागमोपन्यासपूर्वं कर्मापरित्यागमुपपादयितुमाह।

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

प्रजाशब्देनात्र कर्मभूमिजन्मानः परिज्ञानरहिताः स्वर्गादिभोगार्थिनो मनुष्या एव गृह्यन्ते । तेषामेव प्रक्रान्तप्रजापत्युपदेशविषयत्वोपपत्तेः । तेन प्रजापतिः परमेश्वरेच्छाकल्पितसर्गलक्षणकर्माधिकारो देवताविशेषः । यथोक्ताः प्रजाः सहयज्ञा यज्ञेन नानादेवतायजनात्मकेन विधिविशेषेण सह सार्धं सृष्ट्वा निर्मायो-वाचोपदिदेश ॥ किमुवाचेत्याह ।

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**
**इष्टान्कामान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

[ शां. पा.–१–वः. २–भोगान् . ]

अनेन सह जन्मना यज्ञेन क्रियमाणेन यूयं प्रसविष्यध्वम् । प्रसवं संतान-मवाप्स्यथ, वृद्धिं गमिष्यथेत्यर्थः । प्रसविष्यध्वमिति प्रयोगश्छान्दसोऽन्यत्राप्येवं द्रष्टव्यः । ऐवं युष्माकमनुष्ठीयमानः सन्निष्टकामधुग्भवतु, क्रियाफलत्वेनाभि-मतान् कामान्स्वर्गादिभोगान्दुग्धान्पूरयतु । किमनेन कुर्म इत्याह । अनेन देवानिन्द्रप्रभृतीन्भावयत, शास्त्रोपदिष्टेतिकर्तव्यताविशिष्टेन यज्ञेन तर्पितान्सन्त-स्तृप्तिलक्षणां सत्तां लम्बयत इत्यर्थः । ते चैवं भवतीभिरिष्टत्वात्तृप्ताः सन्तो युष्मान् भावयन्तु नरकतिर्यक्त्वादिपतनलक्षणादभावादुत्तारयन्तु वा । एवमन्यो-न्यभावनपराः सन्तः परं श्रेयो यथाभिमतमभ्युदयमवाप्स्यथ लप्स्यध्वम् । यस्माद्यज्ञेन यागेन भाविताः सन्तो देवा इष्टानभिमतान्कामान्भोगान्युष्मभ्यं दास्यन्ति प्रतिपादयिष्यन्ति । एवं तैर्देवैर्दत्तान्भोगानेभ्यो देवेभ्यो यथा विधि-नाऽनुपहृत्य यस्तान्कामानश्नाति स स्तेनश्चोर एव । देवद्रव्यापहारिप्रत्यवायेन युज्यत इत्यर्थः ॥

एतदन्तं प्रजापतिवचनम् । अतःपरं भगवद्वाक्यम् ।

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जन्ते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

[ शां. पा.–१–भुञ्जते. ]

---

१ राना १·२–‘ सर्ग ’ नास्ति. २ राशा १·२–‘ एवं ’ इत्यत्र ‘ एष च ’. ३ गना १·२ ‘ यज्ञेन ’ नास्ति.

एवं प्रजापतिनियममनतिक्रामन्तो यथोक्ताद्यज्ञादनुष्ठिताच्छिष्टं विघससंज्ञमन्नमश्नन्तो भुञ्जानाः सर्वैः समस्तैर्नित्यादियज्ञा[न]नुष्ठानसंभवैः किल्बिषैः पापैर्मुच्यन्ते त्यज्यन्ते। न ते स्तेना भवन्तीत्यर्थः। ते पुनः पापाः पातकिनोऽघं पापमेव भुञ्जन्ते, य आत्मकारणात्स्वहेतोर्न तु देवाद्यर्थं पचन्ति पाकं साधयन्ति। त्यक्तशास्त्रीयक्रियाः सन्तो निरयमेव प्राप्नुवन्तीत्यर्थः ॥

यस्मात्सर्वमेतदक्षरसंज्ञात्परस्माद् ब्रह्मणः प्रवृत्तमनतिक्रमणीयमेवेति क्रममाह–

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**
**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

अन्नात्प्राणसंधारणहेतोरोदनादेरभ्यवहाराद्भूतानि सर्वप्राणभृतो भवन्ति सत्तां लभन्ते। प्राणवृत्तिनिबन्धनं हि भूतानां जीवितमन्ननिबन्धना हि[1] प्राणवृत्तिः। तदेवंविधस्यान्नस्य पर्जन्यान्मेघात्संभवः। स चैवंविधः पर्जन्यो यज्ञात् सोमार्काग्नीन्द्रादिदेवतायजनात्मकाद्विधिविशेषाद्भवति। यज्ञेन हि तर्पिता देवता व्रीह्यादिसंपत्तये पर्जन्यं नियुञ्जते। स च काले वर्षादिना व्रीह्यादीन्संपादयति। यथोक्तम्।

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति।

ईदृशश्च यज्ञः कर्मसमुद्भवः, कर्मणो विशिष्टेतिकर्तव्यतारूपाद्विधानात्संभवो यस्य स तथाविधः। तच्चेदृशं कर्म ब्रह्मोद्भवं, ब्रह्मणः शास्त्ररूपादुद्भवो यस्य तत्तथाविधम्। अपरेण शब्दात्मकेन वेदादिशास्त्ररूपेण ब्रह्मणा यज्ञसंपादनसाधनं कर्मोपदिश्यते। तच्चेत्थंभूतं शब्दात्मकं ब्रह्म, अक्षरसंभवम्। न क्षरति संचलति, न स्वरूपाच्च्यवत इत्यक्षरम्। परं ब्रह्म परमकारणं तस्मादुद्भवो यस्य तत्तादृशम्। परस्माद्ब्रह्मणः परमकारणात्स्वरूपमजहत एव। शास्त्रं वस्तुस्थित्या चित्स्वरूपतामव्यभिचरत्सूर्यादिप्रकाशो व्यपदेशमात्रभिन्नस्वरूपं प्रसरति। अत एव तदपि ब्रह्मशब्देनोक्तम्। यत एवंविधेयं प्रक्रिया प्रवृत्ता ततः परं ब्रह्म सर्वगतत्वेन समस्तवस्तुव्यापकत्वेन व्यवस्थितं सन्नित्यं सदैव यथोक्तस्वरूपे यज्ञे प्रतिष्ठितम्। यदर्थमेव प्रसृजं तस्यार्थस्य यज्ञे प्रतिष्ठा स्थितिः ॥

---

१ राशा १·२–'हि' इत्यत्र 'च'.

यत एवमतः,

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

एवं यथोक्तेन प्रकारेण परब्रह्मस्वरूपेण परमेश्वरेणैव जगत्क्रीडास्थितये प्रवर्तितं प्रवृत्तिलक्षणधर्मनिष्ठतयाऽऽविष्कृतं चक्रं शास्त्रादिपदार्थसमूहं य इह लोके नानुवर्तयति, स्वयं यथाशास्त्रमननुवर्तमानोऽन्यानपि जनान्नानुष्ठापयति । स तादृशः परमेश्वरप्रवर्तितप्रक्रियाव्युत्थापकादघायुः, पापायैऽऽवायुः जीवितं यस्य स तादृशः सन्मोघं निष्फलं जीवति । तादृशस्य हि तत्त्वज्ञानशून्यत्वादपवर्गलक्षणोत्तमफलाभावादीश्वरव्यवस्थापितनियमातिक्रमाच्च स्वर्गादिभोगलक्षणावरफलाभावादपि निष्फलमेव जीवितम् ॥

एवं प्रवृत्तिलक्षणधर्माधिकृतस्योपदेशस्य संसारिणः शास्त्रोक्तकर्मपरिहारानुपपत्तिं प्रतिपाद्येदानीं निवृत्तिलक्षणधर्मानुष्ठानप्रतिष्ठितबुद्धेरपि मुमुक्षोस्तां प्रतिपादयितुमाह ।

**यस्त्वाऽऽत्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**
**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**
**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

[ शां. पा. १–यस्त्वात्म°. २–राशा १·२ ( उपरि ) ना १·२ परं प्राप्नोति– किंतु टीकायां ‘ वस्तु आप्नोति लभते ’ इति वर्तमानत्वात् । अत्र श्लोकपाठे श्लोकपाठेऽपि ‘ आप्नोति ’ इत्येव पाटः स्वीकृतः.

इह सर्वस्य कस्यचिज्जन्तोरप्राप्तं सुखं प्राप्तुमिच्छतस्तत्साधनभूते शब्दादौ विषये रतिः रागोऽभिलाषो जायते । ततः प्रयत्नविशेषेण तस्मिन्प्राप्ते सति तृप्तिः संपूर्णेच्छता, ततः संतोषोऽभिकाङ्क्षानिवृत्तिरित्यते रतितृप्तिसंतोषाः सदा संनिहिते निरुत्तरानन्दनिर्भरे स्वात्मन्येव प्रतिष्ठिताः । तस्य तद्व्यतिरिक्तप्रापणीयवस्त्वन्तरनिरपेक्षणीयस्याप्राप्तसार्थसाधनभूतं कार्यं करणीयं न विद्यते न संभवति । यतः सदा कृतकृत्यत्वात्तस्य नैव कश्चित्कृतेन प्रागकृतत्वादुपादेयतयेदानीं निवर्तितेनार्थः प्रयोजनम् । नाप्यकृतेन हेयत्वात्परिहृतेन कश्चिदर्थः प्रयोजनम् । अत एवास्यैवंविधस्य स्वात्मप्रतिष्ठितबुद्धेर्योगिनः सर्वभूतेषु

समस्तेषु स्थावरेषु जङ्गमेषु च सत्त्वेषु मध्ये न कश्चिदर्थव्यपाश्रयोऽर्थस्य प्राप्तस्य वस्तुनो व्यपाश्रय आलम्बनम् । इदमत्र तात्पर्यम् । प्राक्प्रतिपादितस्थितबुद्धित्वदशामधिरूढस्य योगिनः फललिप्सया ममैवेदमित्यवधारणतया कार्यं साध्यं वस्तु न किंचन विद्यते । सर्ववर्णाश्रमसाधारणं च शास्त्रचोदितं कार्यं तत्तन्नियतकरणीयं प्रतिपादितविज्ञाननिष्ठस्य विद्यत एव । यत एवं तस्मात्कारणान्मुमुक्षुः संबन्धं कार्यं कर्म शास्त्रविहितत्वादवश्या नुष्ठेयं युद्धादिव्यापारमसक्तः क्षणिकसुखलवसाधनभूतेषु विषयेष्वनिमग्नचित्तवृत्तिः सन्समाचर, सम्यग्यथाप्रतिपादितात्मतत्त्वप्रतिष्ठितबुद्धित्वे मनागप्यप्रमत्ततयाऽऽचरानुतिष्ठ। यस्मात्पुरुषो मुमुक्षुः संसारासक्तो मुक्तसङ्गः सन् शास्त्रनियन्त्रितं कर्माऽऽचरन् कुर्वन्परं प्रकृष्टमपवर्गलक्षणं वस्त्वाप्नोति लभते न तु कर्मणस्त्यागात्सिद्धिः कस्यचिदस्ति । सर्वकर्मत्यागानुपपत्तेः प्रागेव प्रतिपादितत्वात् । कस्यचिद्वा कर्मणस्त्यागे सर्वकर्मत्यागाभिमानग्रहात् । रागद्वेषादिदोषाविर्भावदुर्निवारत्वात् ॥

अत्रैवोदाहरणमाह ।

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

इह लोके जनकादयो राजर्षयः श्रुतिस्मृतीतिहासपुराणादिप्रसिद्धाः कर्मणैव स्ववर्णाश्रमनियतेन क्रियाविशेषेण प्रजापालनादिना संसिद्धिं निरुत्तरपुरुषार्थप्राप्तिलक्षणं फलमास्थिताः स्वीकृतवन्तः । तथा च मोक्षधर्मे,

एकस्मिन्नप्यधिष्ठाने संवादः श्रूयतामयम् ।
छत्रादिषु च मुक्तस्य मुक्तो यश्च त्रिदण्डकः ॥

इत्युपक्रान्ते सुलभाजनकसंवादे जनकवाक्यानि ।

सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥
मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महात्मभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥
ज्ञाननिष्ठां वदन्त्येते मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥

---

१ राना १·२ °ज्ञानं. २ राज्ञा १·२ संग°.

महायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥

तृतीया समुच्चयरूपेत्यर्थः । तथाऽन्यत्र,

आकिंचन्ये न मोक्षोऽस्ति कैंचन्ये नास्ति बन्धनम् ।
कैंचन्ये चेतरेणैव जन्तुर्ज्ञानेन मुच्यते ॥ इति ।

अथ तत्त्वविदोऽप्यन्यं कर्मापरित्यागहेतुमाह ।

[ २० तमश्लोकस्योत्तरार्धं टीकानुसारेणात्र ग्राह्यम् ]।

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

लोकशब्देन त्रिवर्गमात्रोपदेशविषयभूतो जनोऽत्र विवक्षितः । तस्य संग्रहः शास्त्रार्थानुष्ठातृलक्षणस्वपक्षस्वीकारः । तं वक्ष्यमाणहेतुनाऽवश्यकरणीयतया संपश्यन्सम्यग्बुध्यमानस्त्वं शिष्टानुगमान्कर्तुं शास्त्रविहितानि कर्माण्याचरितुमर्हसि । अतः श्रेष्ठः कुलविद्यावृत्तादिभिर्ज्यायान् जनो यद्यत्किंचित्कर्माऽऽचरत्यनुतिष्ठति तत्तदेव नान्यदितरो जनः स्वयं कार्याकार्यविवेकशून्यमतिर्लोकोऽनुतिष्ठति । यतः स श्रेष्ठो जनो यद्वस्तु प्रमाणं कुरुते स्वयमनुष्ठानादुपपन्नत्वेन व्यवस्थापयति तं लोकोऽनुवर्ततेऽनुसरति ॥

तस्मात्परमार्थज्ञानेनापि लोकसंग्रहार्थं शास्त्रचोदितं कर्म सर्वथाऽनुष्ठेयमित्यत्राऽऽत्मानमेवोदाहरणीकुर्वन्नाह ।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं प्रवर्तेऽथ च कर्मणि ॥ २२ ॥**

[ शां. पा. १–वर्त एव च. ]

हे पार्थ, मम स्वार्थसाधनतया कर्तव्यं कार्यं न किंचिदस्ति । यस्मात्त्रिषु लोकेषु समस्ते जगत्यनाप्तं पूर्वमनासादितमवाप्तव्यं स्वेच्छापूरणाय लब्धव्यं न किंचिदस्ति । अलब्धलाभो हि सर्वः कश्चित्स्वकार्यमारभते । मम तु यथाप्रतिपादिततत्त्वज्ञाननिष्ठाप्रतिष्ठितप्रज्ञस्य न किंचित्प्राप्यमस्ति । अतश्च तादृशोऽपि सन् लोकवत्कर्मणि शास्त्रविहिते प्रवर्ते, सततमुद्युक्तो भवामि । अनेन यस्त्वात्मरतिरेव स्यादित्युपक्रम्य, तस्मादसक्तः सततं कार्यं कर्म समाचरेति यत्प्रागुक्तं तदेकानुष्ठातृपुरुषविषयमेवेति निःसंशयतया प्रतिपादितवान् ॥

१ राना १·२–क्लेशेन. २ राशा १·२–°हरणं कु°.

अथ तत्त्वज्ञोऽपि सन्भगवाँल्लोकवत्कर्मणि प्रवर्तत इत्याह,

**यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

[ शां. पा. १-°नुवर्तन्ते म°. ]

यद्यहं वर्णाश्रमोचितानि कर्माण्यतन्द्रितोऽसंजातालस्य: कदाचिदपि न वर्तेय न तिष्ठेयम्, तत्सर्व एव मनुष्याः कर्मण्यधिकृता मानवाः प्रमाणभूतचरितस्य मम वर्त्म मार्गमाचारमनुवर्तेरन्ननुसरेयुः ॥

किंचात इत्याह ।

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

यद्यहं लोकवत् शास्त्रचोदितं कर्म नाऽऽचरेयम्, तदमी लोकाः समस्तानि भुवनानि संसारिपुरुषोचिततत्तत्स्वकर्मफलोपभोगाधिकरणभूतान्युत्सीदेयुः, उत्सादं विनाशं भजेयुः । कर्मनिबन्धना हि लोकानां स्थितिः । किंच तथाविधं कर्माकुर्वन् संकरस्य वर्णविभागमिश्रीभावस्य कर्ता प्रवर्तको भवेयम् । सर्वे हि पुरुषा मां शास्त्रीयं कर्माकुर्वाणमनुवर्तमानाः स्वं स्वं तत्तज्जातिविहितं कर्म यथेष्टमन्यजातिविहितत्वादिना विरोधेनाप्याचरन्तः संकीर्णवर्णतामाप्नुयुः। अतोऽहमेव वर्णसंकरदोषस्य कर्ता स्याम् । किंचात इमाः प्रजा एतान् कर्मभूमिजन्मनः शास्त्रचोदितकर्माधिकृतान्सर्वान्संसारिणः पुरुषानुपहन्याम्, उपघातेन विनाशेन योजयेयम् । एता हि प्रजा यथाविहितं कर्मानाचरन्त्यः स्वर्गादिप्राप्तेरपेता निसर्गतस्तज्ज्ञानशून्यत्वात् कैवल्यलक्षणादुत्तमात्पुरुषार्थाद् दूरबहिष्कृता नरकातिर्यग्भावप्राप्तिलक्षणं विनाशमाप्नुयुः ॥

तदित्थं परमेश्वरेच्छापरिकल्पितजगत्क्रीडानियमव्युत्थापकत्वं मयैवाऽऽचरितं भवेत् । अतः,

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**

यथा येन प्रकारेणाविद्वांसो यथोक्तात्मतत्त्वज्ञानशून्यत्वान्मुख्या(न्मुढा) विद्वत्तया रहिताः पुरुषाः कर्मणि क्षणिकसुखसाधनभूते ज्ञानादिक्रियात्मके व्यापारे सक्ता-

---

१ राशा १-°स्यः सन. २ राशा २-ना १·२ एताः.

स्तदेव परत्वेन मन्यमानास्तावन्मात्रपरिसमाप्तपुरुषार्थाः सन्तः कुर्वन्ति विहितानि कर्माण्याचरन्ति, तथैव तेन प्रकारेण सामान्यजनदुर्लक्ष(क्ष्य)स्वहृदयं संवेद्य तत्त्वज्ञाननिष्ठत्वात्तादृशाभियोगरूपेण विद्वान्परमार्थपण्डितः कुर्यात्कर्माण्याचरेत् । कीदृशः सन् । असक्तो निरुत्तरानन्दामृतास्वादसततपरितृप्तत्वाल्लोकवत् स्वर्गादिभोगविषयेण तत्तत्कर्मफलसङ्गेन रहितः । किमर्थमेवं कुर्यादिति हेतुगर्भविशेषणमाह । 'चिकीर्षुर्लोकसंग्रहम्' । लोकस्याबुद्धस्य जनस्य संग्रहं पूर्वोक्तं चिकीर्षुः संपिपादयिषुः । विदितवेद्येन हि विदुषा तत्त्वज्ञानोपदेशयोग्यताशून्यं लोकं नरकपातादिदुःखादुज्जिहीर्षता तथा कर्माऽऽचरणीयं यथा लोकस्तदनुवर्तमानः स्वकर्मानुष्ठानात्स्वर्गादेरपि फलान्न व्यपैति ॥

अयोग्यस्य तत्त्वज्ञानोपदेशो विनाशायैव पर्यवस्येदित्याह ।

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

विद्वान्प्रबुद्धो युक्तो यथोक्तात्मज्ञानसहितः सन्सम्यग्यथाशास्त्रजात्यादिनियतानि कर्माण्याचरन्ननुतिष्ठन् । अज्ञानां स्वभावत एव संप्रति परमेश्वरेच्छाननुगृहीतत्वादनाविर्भूतविवेकज्ञानानां, अत एव कर्मसु यज्ञादिसाधनभूतेषु भोगैश्वर्यप्रसक्तत्वादिना हेतुना सङ्गिनां तत्रैव सक्तानां बुद्धेः प्रज्ञाया भेदं तादृशात्सङ्गात्प्रच्यावनं नोत्पादयेत् । ते ह्यज्ञाः सन्तो यदि तत्त्वज्ञाने कर्मत्यागमार्गेण व्युत्पाद्यन्ते, तत्तेषामज्ञत्वादेव तत्त्वज्ञाने प्रतिष्ठामलभमानानां स्वर्गादिहेतोश्च कर्मसङ्गात्प्रच्युतेर्बुद्धिभेदं माप्ता सत्युभयभ्रंशायैव पर्यवस्येत् । अतस्तांस्तथाविधानज्ञान्सर्वाणि कर्माणि येषु हि गृहीताः सङ्गास्तानि जोषयेत्प्रीत्या सेवयेत्, स्वयं तदनुष्ठानप्रख्यापनेन ॥

इत्थं परमेश्वरेच्छानियमितजगद्व्यवस्थाव्युत्थानाविच्छेदाय स्वस्मिन्स्वस्मिन्कर्मणि लोकमबुद्धं प्रवर्तयितुं, प्रबुद्धस्यापि लोकवद्विहितानां कर्मणामवश्यमनुष्ठानमुपपादितम् । अतश्च प्रबुद्धाप्रबुद्धयोस्तुल्यमेव कर्तृत्वं, तुल्यान्येव च कर्माणि, असक्तत्वकृतस्तु फलभेद इति स्थिते तुल्ये कर्तृत्वे तुल्येषु च कर्मसु क्रियमाणेषु कथं फलभेद इत्यनवधारितप्रबुद्धाप्रबुद्धाविशेषस्यार्जुनस्य संशयमाशङ्कमानः संसारिणो योगिनश्च समानेऽपि व्यवहारे यथा फलभेदोपपत्तिस्तथा विभज्य विशेषं प्रतिपादयितुमाह ।

---

१ राशा १-°गर्भ. २ राना १·२-'अवश्यं' नास्ति.

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ।**
**अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥**

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणार्थे वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

[ शां. पा. १-सर्वशः. २-गुणेषु. ]

इह यत्किंचिच्छारीरं मानसं वाचिकं शास्त्रोक्तमशास्त्रोक्तं वा कर्म येन केनचित्कर्त्रा क्रियते, तत्र नासौ केवलः कारणं किं त्वधिष्ठानं तथा कर्तेत्यादि वक्ष्यमाणाः पञ्च पदार्थाः कारणम् । ते सर्व एव सत्त्वरजस्तमोलक्षणप्राकृतगुणमया एवेति वक्ष्यति । अतः प्रकृतेः संबन्धिभिर्गुणैः क्रियमाणानि सर्वाणि व्यवस्थितानि । कथं, भागशः । सात्त्विकमधिष्ठानादिकारणं सात्त्विकं कर्मारभते, रजोमयं राजसं, तमोमयं तामसमिति विभागेन । इत्थं कर्तुरपि मुक्तसङ्गोऽनहंवादीत्यादिना त्रैगुण्यस्य वक्ष्यमाणत्वाद्गुणानामेव कर्तृत्वे पर्यवस्थिते अहंकारेण शरीरादिष्वात्मप्रत्ययेन विमूढात्मा अप्रबुद्धस्वभावः संसारी अहमेव केवलः कर्तेत्यधिष्ठानादिकारणान्तरनिरपेक्षं कर्तृत्वं शरीरादिरूपे कृत्रिमे स्वात्मन्यारोपयति । स च गुणपरतन्त्रे तादृशात्मन्यहंकारमारोपयन् गुणेष्वेव सक्तः न कदाचित्संसारबन्धहेतुभ्यो विमुच्यते । गुणविभागस्य कर्मविभागस्य च तत्त्ववित्परमार्थवेदी योगी पुनर्गुणाः सत्त्वादयो गुणार्थे स्वप्रयोजने देहेन्द्रियविषयाध्यात्मके वर्तन्ते, तत्रैव तिष्ठन्ति, नाऽऽत्मनः सर्वदा स्वतन्त्रसुप्रसन्नसंविन्मात्रस्वभावस्य स्वोपरागमर्पयितुं प्रभवन्तीति सर्वदा सत्यात्मप्रविष्ठतया न गुणेषु न कर्मसु सज्जति । अहंकारममकारौ तेषु न करोतीत्यर्थः । अथ कीदृशो गुणानां विभागः, कीदृशश्च कर्मणां, किंचात्र तत्त्वमिति व्याख्यायते । इह परमेश्वरेणाचिन्त्यस्वेच्छाविलसितस्वभावात्मकसकलजगत्प्रपञ्चकारणत्वेनावभासितया पारमार्थिकात्मतत्त्वाख्यातिमात्रशरीरतया त एव भिन्नार्थविषयज्ञाननियमात्मकसत्त्वादिगुणमय्या प्रकृत्याख्ययाऽनाद्याविद्याप्रबन्धसंबद्धानामीश्वरेच्छयैवान्योन्यभेदेनावभासमानानां जीवानां गुणैरेवाऽऽरब्धतनुकरणभुवनभोगादिकलापत्वात्सर्वमेव गुणाधीनमिति प्रायेण गुणा एव तेषां कर्तार इत्ययं क्षेत्रज्ञविषयत्वेन गुणविभागः । तथाविधाश्च ते जीवा यानि कर्माण्यारभन्ते तेषु विषयसुखतृष्णा-

---

१ राशा १-°वसिते. २ राना-१.२ °तृप्ता°.

न्तरतया मज्जन्ति तद्बाधकभूतेष्वन्येष्वद्वेषेण पराभवन्तीत्येतावन्मात्रानियताचित्तवृत्तित्वाद्विमूढा भवन्तीति तद्विषयत्वेन सर्वकर्माणि रागद्वेषमोहात्मकत्वात्संसारबन्धकारणतया पर्यवस्यन्तीत्ययमेषां कर्मविभागः। सत्यात्मतत्त्वप्रतिष्ठितबुद्धीनां तु योगिनामन्यथा गुणानां कर्मणां च विभागः। तथा हि ते गुणाः सत्त्वादयो गुणानामेवार्थे प्रयोजने संसारविषयत्वेन जगत्प्रपञ्चविरचनारूपेण वर्तन्ते। नास्मद्विषयत्वेनैषां सर्वदानस्तमितसंवित्प्रकाशमात्रव्यतिरिक्तं किंचिद्रूपान्तरं भवतीति मन्वाना नित्यनिरतिशयनिजानन्दनवस्व(सु)धास्वादनैकानिरताः कथं तेषु रागादिविषमविषयरसमयेषु मज्जन्तीति योगिविषयत्वेन गुणा न गुणत्वेन स्फुरन्तीत्ययं योगिविषयो गुणविभागः। एवंविधाश्चैते यानि कर्माण्यारभन्ते तानि क्रियमाणान्येव यथोक्तज्ञानाग्निदग्धत्वान्न संसारकारणतामापादयितुमेषां प्रभवन्तीत्ययं योगिविषयः कर्मविभागः। तादृशो हि योगी गुणातीत उच्यते। यद्वक्ष्यति, न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति।

उदासीनवदासीनो गुणातीतः स उच्यते।

तत्त्वमप्येतयोर्गुणकर्मविभागयोरेतद्व्याख्यानेनैव व्याख्यातम्॥

इति प्रबुद्धाप्रबुद्धयोस्तुल्येषु कर्मसु क्रियमाणेषु मोक्षसंसा[1]रलक्षणबन्धलक्षणं फलभेदमुपपाद्येदानीं प्रबुद्धस्य यथाप्रतिपादितज्ञानकर्मसमुच्चयानुष्ठानपरिनिष्ठितबुद्धेर्लोकविषयमात्मविषयं च व्यवहारं नियमयितुमाह।

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत्॥ २९॥**

प्रकृतेरु[3]क्तलक्षणायाः संबन्धिभिर्गुणैः सत्त्वादिभिरनादिसंबन्धपरिचितत्वाद्वासनारूपतया शरीराद्यारम्भकतया च व्यतिरिक्तत्वेनावस्थितैः संमूढास्तादृशगुणमया एव शरीरादावात्मप्रत्ययलक्षणं संमोहमापन्नाः संसारिणो गुणमयेष्वेव कर्मसु स्वर्गिमर्त्यभावातिर्यक्त्वादिफलहेतुषु सज्जन्ते, विवेकजज्ञानाभावात्तान्येव परतत्त्वेन मन्यमानास्तेषु निमज्जन्ति। अतस्तानकृत्स्नविदो गुणपरिस्पन्दपरिमितीकृतज्ञानत्वात्सर्वहेयोपादेयरूपं ज्ञेयमजानाना अत एव मन्दानल्पधियः कृत्स्नवित्समस्तज्ञेयतत्त्ववेदी न विचालयेत्, यत्रैव गुणात्मके कर्मणि फले वा सक्तास्ततो न प्रच्यावयेत्। तेषां बुद्धिद्वै[4]धपरिहाराय सर्वं विहितं कर्मानुतिष्ठेदिति॥

---

१ राना १·२–आसाद°. २ राना १–(प० लि०) °सारप्रबन्ध°. ३ राना १·२–°तेर्गुणलक्ष°. ४ राना १·२–°द्वैत°.।

लोकसंग्रहापेक्षयाऽनुष्ठीयमानमपि कर्म योगिनो यथा कैवल्यायैव पर्यवस्यति, तथा तस्य प्रागुक्तमपि ज्ञाननिष्ठत्वेन कर्मानुष्ठानमर्जुनमुखेन निश्चिन्वन्नाह ।

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

सर्वाणि शास्त्रविहितानि कर्माण्यध्यात्मचेतसा यथाप्रतिपादिताध्यात्मस्वरूपात्मनिष्ठेन मनसा मयि परमकारणे परमगुरौ संन्यस्य सम्यक्समर्प्यैक एव परमेश्वरः प्रथमाध्याये[1] प्रतिपादितस्वरूपः सर्वप्राणिभिः क्रियमाणानां सर्वकर्मणां कर्ता, स्वेच्छामात्रेण स्वशक्तिविभवरूपाणां निर्माता, न तद्व्यतिरेकेण क्वचिदपि कर्तृत्वं पारमार्थिकमस्ति । गुणपरतन्त्रतया तु देहादौ तदभिमानो मायाविलसित एवेत्यनया भावनया संन्यासविधिं संपाद्य । अत एवाऽऽशंसनीयवस्तुविरहान्निराशीः आशीर्भ्यः प्रार्थनाभ्यो निष्क्रान्तोऽत एव सर्वभावेषु परिग्रहाभावान्निर्ममो ममेदमिति संसारिपुरुषोचितायाः प्रतिपत्तेर्निष्क्रान्तो भूत्वा, विगतज्वरः यथोक्तविज्ञानामृतावगाहनान्निवृत्तसंदेहादिसमस्तसंतापः सन्युध्यस्व, संसारात्मकमवसरोपनतमवश्यकार्यं स्वकर्मानुतिष्ठेत्येतावता ग्रन्थेन प्रायः परिसमाप्तोऽयं ज्ञानकर्मसमुच्चयानुष्ठानात्मक उपदेशसारो यतः प्रथमे तावत्प्रस्तावनाऽस्य प्रतिपादिता, द्वितीये विज्ञानस्वरूपं परिघटितम्, तृतीये तत्संस्कृतस्य कर्मणोऽवश्यानुष्ठेयता ॥

इति मन्यमानो भगवानस्य परमरहस्यभूतस्य स्वमतस्य प्रभावप्रतिपादनार्थं बोधाबोधयोः फलमाह,

**ये मे मतमिदं नित्यमनुवर्तन्ति[1] मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकिल्बिषैः[2] ॥ ३१ ॥**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विनष्टान्विद्ध्यचेतसः[3] ॥ ३२ ॥**

[ शां. पा. १–अनुतिष्ठन्ति. २–तेऽपि क°. ३–विद्धि नष्टानचेतसः. ]

इत्थं मयोपन्यस्तं मतं मदीयं सर्वशास्त्रसर्वस्वभूतमभिप्रायं नित्यं सर्वकालं ये मानवाः शास्त्राधिकृता मनुष्या अनुवर्तन्ति(न्ते), सम्यगवगम्यानुतिष्ठन्ति,

---

१ राशा १–' यज्ञदानतपःप्रभृतीनि ' इत्यधिकम् । २ राना १.–' प्रथममेव '–अयमपि का शलेखकेन अन्येन वा निःसार्य ' प्रथमाध्याये ' इत्येव पाठो लिखितः । प्रथमाध्याये गीताश्लोकेषु परमेश्वरस्वरूपप्रतिपादनं न दृश्यते । किंतु टीकाकृता स्वकीयोपोद्घाते तद्विषयस्य वर्णितत्वात् । ' प्रथमाध्याये ' इत्येव पाठोऽत्र टीकाकृतोऽभिप्रेत इति दृश्यते ।

ते सर्वकिल्विषैरविद्याप्रभवरागद्वेषादिक्लेशमूलैर्घोरसंसारदुःखदायिभिः कुकर्माचरणजनितैः किल्विषैः पापैर्मुच्यन्ते, न पुनर्बध्यन्ते । कीदृशाः सन्तः । श्रद्धावन्तो यथाप्रतिपादितमन्मतप्ररूढनिर्विकल्पप्रतिपत्तिजनितयथोक्तफलसंभावनात्मिकया श्रद्धया युक्ताः । अत एवैतन्मतविषयामसूयामतत्त्वज्ञजनोचितामकुर्वन्तः । ये पुनरेतदेवंविधं मन्मतमभ्यसूयन्तो मोहतिमिरतिरस्कृतसम्यग्ज्ञानत्वाद्दोषाधिरोपणादिना विगर्हन्तो नानुतिष्ठन्ति, नाऽऽचरन्ति, तान्सर्वेषु समस्तेषु हेयोपादेयनिश्चयविषयेषु ज्ञानेषु शास्त्ररूपेषु विमूढान् विपर्ययप्रत्ययाद्विशेषेण मूढान्विचित्तान्विनष्टान्विद्धि । भोगापवर्गलक्षणादुभयतोऽपि फलात्प्रच्युतान्सतो दुर्गतिप्राप्तिलक्षणं विनाशं प्राप्ताञ्जानीहि । यतस्तेषां चेतोऽन्तःकरणमसम्यग्दर्शित्वात्सदपि नास्त्येव ॥

इदानीमुक्तमेवार्थं सुदृढप्रतिपत्तये विनयोपकारायोक्तिभेदैर्नानारूपैः प्रतिपादयन्कर्मणां त्यागानुपपत्तिमेव द्रढयितुमाह ।

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

इह सर्वः कश्चिद्देहवाननादिप्रबन्धप्रवृत्तया प्रकृत्या संबद्धो यतः सर्वस्य शरीरेन्द्रियविषयादिकं सर्वमेव त्रिगुणम् । अतो ज्ञानवानप्याविर्भूतदेहदेहिविवेकप्रज्ञोऽपि पुरुषः स्वस्यास्तेन तेन प्रकारेण शरीराद्यारम्भकतया परिणतत्वादात्मीयत्वमापन्नायाः प्रकृतेरीश्वरेच्छया जगत्कारणभावेनोद्भाविताया गुणत्रयात्मिकाया अविद्यायाः सदृशमनुरूपं चेष्टते व्यवहरति । किमनेनोक्तं भवति । दृष्टतत्त्वोऽपि प्रकृत्याऽऽरब्धशरीरादित्वान्मनोवाक्कायैर्यत्किंचित्कर्माऽऽचरति तत्त्रिगुणमेवोपपद्यते। तथाविधं च यत्कर्म ज्ञानवताऽप्यशक्यपरिहारमिति प्रागपि प्रतिपादितम् । इत्थं सर्वभूतानि प्रकृतिं यान्ति, सर्वथा तामेवाऽऽश्रयन्ते। न तु तद्व्यतिरिक्तत्वेन श्वसितुं स्पन्दितुं वाऽप्युत्सहन्ते । ततो निग्रहो नेदं स्वजातिविहितं कर्माहं करिष्यामीति नियमः, किं करिष्यतीति प्राक्प्रतिपादितप्रकारेण सर्वकर्मप्रतिषेधस्याशक्यत्वादकिंचित्कर एव भविष्यति । यदि निग्रहोऽपि कर्मैवातश्च हानोपादाननिबन्धनत्वाद्रागद्वेषानुविद्धं सद्गुणात्मकत्वात्प्राकृतमेव संपद्यते, इत्येवमप्यकिंचित्करो निग्रहः ॥

---

१ राना १·२–प्रकृता°.

इत्थमपरिहार्ये कर्मणि ज्ञानवान्मुमुक्षुः किं कुर्यादित्याह ।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

यो यस्येन्द्रियस्यार्थो विषयः श्रोत्रादेः शब्दादिस्तत्र तत्रार्थे रागद्वेषौ व्यवस्थितौ । यदा शब्दादिविषयं सुखसाधनत्वेन श्रोत्रादिनेन्द्रियेण पुमानुपादत्ते तदा तस्य तस्मिन् रागो व्यवतिष्ठते । यदा तु दुःखकारणत्वेन तमेव विषयं हेयत्वेन प्रतिपद्यते, तदा तस्मिन्निन्द्रियेण परिह्रियमाणे द्वेषोऽस्य व्यवतिष्ठते । इति सर्वस्मिन्विषये यौ रागद्वेषौ व्यवस्थितौ, ज्ञानवान् आविर्भूतविवेकजज्ञानस्तयोर्वशं विधेयतामज्ञवन्न गच्छेत् । यतोऽस्य ज्ञानवतस्तौ रागद्वेषौ परिपन्थिनौ विरोधिनौ शत्रू । ततस्तावेव सर्वोद्योगेन परिहार्यौ, न तु विषयाः, न हि तयोरपि जितयोर्विषयपरिजयः कृतो भवति । तौ हि यथोक्तज्ञानासिना यावन्न क्षतविक्षतत्वमापादितौ तावत्परिवार्जितेऽपि विषयेऽन्तर्विजृम्भमाणौ पुरुषं वशीकर्तुं प्रभवत एव ॥

तदेवं गुणोपपत्तिवशात्सर्वस्मिन्कर्मणि प्रबुद्धस्याप्रबुद्धस्य वा सर्वस्य कस्यचिदशक्यप्रतिषेधे स्थितेऽस्य स्वकर्मानुष्ठानलक्षणो धर्मः प्रबुद्धेनाप्याचरणीय इत्याह ।

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥**

[ शां. पा. १–°धर्मो भयावहः. ]

यो यस्य वर्णाश्रमनैयत्येन शास्त्रविहितो धर्मः सदाचारः स्वत्वेन व्यवस्थितः स कुतश्चित्कारणान्मुख्येन कल्पेनानुष्ठीयमानत्वाद्विगुणोऽपि स्वैर्गुणैर्विरहितोऽपि सन् स्वनुष्ठितात्सुष्ठु संपूर्णसंविधानतयाऽनुष्ठितादाचरितात्परधर्माद् विजातीयसमाचारात् श्रेयान्प्रशस्यतरः । शास्त्रविहतातिक्रमविहितानुष्ठानजप्रत्यवायदोषस्याभावात् । यत एवं स्वधर्मेऽनुष्ठीयमाने पारलौकिकशुभफलप्राप्तिरतस्तस्मिन्स्वधर्मे हि सति निधनं मरणमपि स्यात् । तच्छ्रेयः प्रशस्यतरं तत्स्यात् । परसंबन्धिनो धर्मात्स्वनुष्ठितात्सतो य उदयो राज्यलाभस्तस्मादपि, तस्य लोकान्तरे विरुद्धफलहेतुत्वात् ॥

एवमात्मज्ञाननिष्ठतया शास्त्रचोदितस्वकर्मानुष्ठानमपवर्गलक्षणसिद्धिहेतुरिति

भगवत्प्रतिपादितसकलप्रकरणसिद्धान्तं श्रुत्वा प्रतिपादितस्वधर्मस्याऽऽत्मनः पारतन्त्र्यमेवंविधमनुपपन्नं मन्यमानः,

अर्जुन उवाच ।

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छमानोऽपि बलादाक्रम्यैव नियोजितः ॥ ३६ ॥**

[ शां. पा. १—अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः. ]

अथैवं भगवता प्रतिपादितलक्षणोऽयमात्मा केन स्वामिनेव भृत्यः प्रयुक्तः प्रेरितः सन्। कुकर्माकर्मरूपं पापं दुर्गतिफलं किल्बिषमनिच्छमानोऽनभिलषन्नपि बलादाक्रम्य हठादिष्टविषयप्रवृत्तिं निवार्य नियोजितो व्यापारित एव चरत्यनुतिष्ठति ॥

तत्रोत्तरम् ।

श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

येन प्रयुक्तोऽयमुक्तस्वरूपानाद्यविद्यादिक्लेशपाशपरवशः पुरुषः पापमाचरति, स एष कामः परिणामविरसक्षणिकसुखलवसाधनभूतविषयोन्मुखः संकल्पः। एष एव चेतनाचेतनरूपप्रतिपक्षप्रतिहन्यमानत्वात्क्रोधस्तदुपघातप्रवृत्तिहेतुर्द्वेषः संपद्यते। सोऽयमिच्छाद्वेषात्मको दोषो रजोगुणसमुद्भवो रजोगुणाद्विषयसुखाभिलाषात्मकरागद्वेषहेतोः प्रकृतिधर्मात्समुद्भवति । अत एव महाशन उत्तरोत्तरविवर्धमानगर्वत्वान्महदपर्यवसितमशनं विषयापहरणलक्षणो व्यवहारो यस्य स तथा। ततश्च सर्वस्य तस्य भोगस्य दुःखैकविपाकत्वान्महापाप्मा गुरुतरपातकमयो दुर्गतिहेतुत्वात् । तदेवंविधमिह संसारे वैरिणं दुरुत्तरदारुणदुःखदायित्वादाततायिनं विद्धि जानीहि ॥

तेन प्रयुक्तोऽयं पुरुषः पापमाचरति, तथा तस्य वैतत्येन स्वरूपं जिज्ञासुः

* अर्जुन उवाच ।

**भवत्येष कथं कृष्ण कथं चैव विवर्धते ।**
**किमात्मकः किमाचारस्तन्ममाऽऽचक्ष्व पृच्छतः ॥ ३८ ॥**

---

* ३७ तमश्लोकात्परं प्रश्नोत्तरात्मकमिदं श्लोकपञ्चकं (३८–४२) काश्मीरपाठे दृश्यते, शांकरादिपाठेषु नास्ति.

एष वैरित्वेन प्रतिपादितः कामाद्यात्मको दोषः कथं भवति, केन प्रकारेण स्थितिलक्षणसत्तामनुभवति। केन प्रकारेण विवर्धते, प्रसराति। कश्चाऽऽत्मा स्वरूपं, कश्चास्याऽऽचारः किमाचरतीति। तत्सर्वं मम संशयं पृच्छतो ब्रूहि।

अथ प्रश्नचतुष्टये क्रमेणोत्तरं

श्रीभगवानुवाच।

एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह।
सुखतन्त्र इवाऽऽसीनो मोहयन्पार्थ तिष्ठति ॥ ३९ ॥
कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः।
अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥
हर्षमस्य निवर्त्यैष शोकमस्य ददाति च।
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥

एष रजोगुणप्रभवः कामक्रोधरूपतया प्रसृतो दोषः शरीरिणामतिप्रत्यासन्नत्वेऽपि दुर्लक्षत्वात्परः सूक्ष्मः शत्रुः। स चाहंकार एव पर्यवस्यति। यत इन्द्रियाणि पराण्याहुरित्यादिना तस्यैव परमसूक्ष्मत्वं प्रतिपादयिष्यति। किमात्मक इति प्रश्ने किमात्मकत्वमेवास्याधुनैवाभिधत्ते। स चैवंविधः शत्रुः परिवारभूतैरिन्द्रियैः सहितः कामक्रोधादिनिशातशस्त्रप्रहारिभिस्तैरेवायं सर्वप्राणिनो विशसति। तस्य दुर्जयत्वप्रतिपादनार्थं सर्वशत्रुविलक्षणमवस्थानमाह। सर्वदुःखहेतुत्वे सति सुखतन्त्रे सुखात्मके वर्गे इवाऽऽसीन उपविष्टो मोहयंस्तिष्ठति, देहाद्यात्मप्रत्ययलक्षणं विपर्ययज्ञानमारोपयन् स्थितिमनुभवतीति। भवत्येष कथमित्यस्य प्रश्नोत्तरमेतद्व्याख्यातम्। अथ कथं विवर्धत इत्यस्य व्याख्यायते। कामक्रोधमयः कामक्रोधावुक्तरूपौ प्रकृतिर्यस्य स तथाविधः। स्तम्भस्य गर्वस्य तथा हर्षस्य विषादपरिणामस्य प्रमोदस्य समुद्भव उत्पत्तिस्थानम्। अत एव घोरो दारुण एव कामक्रोधस्तम्भहर्षादिदोषात्मना विवर्धते, उच्छ्रायं भजतीत्युक्तं भवति। अथ किमात्मक इत्यस्य प्रश्नोत्तरं व्याख्यायते। एष सर्वदेहिनां शत्रुरहंकारसंज्ञोऽभिमानात्माऽभिमानो जात्याद्यवच्छेदभाजिगुणमयत्वादनित्यादिदोषैकसमाश्रये शरीरादौ 'अहं ब्राह्मणोऽहं देवदत्तोऽहमभिजनवानहं वपुष्मानहं विदग्धोऽहमाढ्यः' इत्येवमाद्यनात्मप्रतिपत्तिनिबन्धनं मिथ्याज्ञानं, स आत्मा स्वभावो यस्य तादृशः। अत एव पापकर्मभिर्दुस्तरः। सम्यग्ज्ञानाभावाद्धेयोपादेयविवेकशून्यत्वे सति पापमघमयं घोरसंसारनिरयनिपातनिमित्तभूतं कर्म चेष्टितं येषां तादृशैरासुरं सर्गं

भजद्भिः पुरुषैर्दुरतिक्रमः । अथ किमाचार इत्यत्रोत्तरं व्याख्यायते । अस्य क्षेत्रज्ञस्यैषोऽहंकाराख्यः शत्रुर्हर्षं सत्यात्मसंविदुपलभ्यमानानन्दं निवर्त्यापसार्य शोकं शोचनं ददाति समर्पयति । अनेन शत्रुणा व्यामोहितः शरीराद्यात्मत्वेन प्रतिपन्नं व्याधिप्रियविप्रयोगाद्युपद्रवोपहन्यमानमनुशोचति, कष्टं विनष्टोऽस्मीति परिदेवते । अत एवास्यैष शत्रुर्भयमपि करोतीष्टविषयोपघातहेतुभ्यः संत्रासमुत्पादयति । किं कुर्वन्नेवमाचरति, प्रतिक्षणं मोहयन्, यथाप्रतिपादितविपर्ययलक्षणं वैचित्र्यमावहन् ॥

इत्यनेनाहंकाराख्येन शत्रुणेन्द्रियपरिवारेण सुखवद्व्यवस्थितेन कामक्रोधस्तम्भहर्षादिदोषात्मना विवर्धमानेन हर्षापहारादिकमाचरता प्रयुक्तः सन् क्षेत्रज्ञः पापमाचरतीत्यर्जुनप्रश्नं विनिर्णीय तस्यैवाहंकारस्य वितत्य स्वरूपं प्रतिपादयितुमाह ।

**स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनंजय ।**
**रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४२ ॥**

स एष यथाप्रतिपादितस्वरूपोऽहंकारः समस्तमर्त्यानामुपद्रवः, सर्वदोषविधानसंसारहेतुत्वात् । यतः कलुषो गुणत्रयात्मकत्वान्नित्यमलिनः, तत एव चानित्यत्वात् क्षुद्रो भङ्गुरः। तथा छिद्रप्रेक्षी बाधावकाशजागरूकः। शिष्टं स्पष्टार्थम्॥

तेनास्य क्षेत्रज्ञस्य किं कृतमित्याह ।

**धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनाऽऽवृतो गर्भस्तथा तेनायमावृतः ॥ ४३ ॥**

[ शां. पा. १—तेनेदमावृतम्. ]

एतेनाहंकारेणायं संसारिपुरुषाणामात्मा तथाऽऽवृतो निरुद्धशक्तित्वमापादितः। उपमानेनैतत्प्रकटयति । कथमावृतः । यथाऽऽर्द्रेन्धनत्वादिदोषजन्मना कलङ्केन धूमाख्येन वह्निरग्निराव्रियते, निरुद्धभास्वरत्वादिस्वशक्तिः संपाद्यते, तथैवायमात्मा मायाप्रभवेणानेनैवाहंकारात्मना दोषेण निरुद्धस्वस्वरूपप्रत्यवमर्शात्मकस्वशक्तिः क्रियते । तथा, यथाऽऽदर्शो दर्पणो रजोनिःश्वासादिसंबन्धजन्मना मलेनाऽऽव्रियते, निरुद्धयथावस्थितभावस्फुरणलक्षणस्वशक्तिः क्रियते । तथैवायमात्माऽनेनाऽऽव्रियते । निरुद्धजगत्पदार्थपरमार्थप्रथनसामर्थ्यः क्रियते । यथा गर्भो जननीकोष्ठवर्तिर्जीव उल्बेन गर्भशय्ययाऽऽव्रियते, निरुद्धसर्वेन्द्रियपरिस्पन्दनशक्तिः क्रियते । तथैवायमात्माऽनेन निरुद्धसर्वकर्तृत्वलक्षणस्वशक्तिः

क्रियते। इत्यनेनोपमानत्रयेणाहंकारस्याऽऽत्मानं प्रति स्वभावसर्वज्ञत्वसर्वकर्तृत्वलक्षणस्वधर्मत्रयनिरोधकत्वं प्रतिपादितम् ॥

यद्यपि सर्वशक्तिनिरोधकोऽयमात्मनोऽहंकाराख्यो दोषस्तथाऽपि ज्ञानस्य प्राधान्यविवक्षयेदमाह ।

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥**

एतेन यथाप्रतिपादितेन देहाद्यात्मप्रत्ययलक्षणेन शत्रुणा ज्ञानिनः स्वात्मसंवेदनमुख्यज्ञानवतश्चेतनस्य तादृशं मुख्यं ज्ञानमावृतं निरुद्धम् । यतः कामो बाह्यार्थनिबन्धनोऽभिलाषो रूपं यस्यात एवासौ दुःपूरः, न केनचिद्विषयेण प्राप्तेन सता पूरयितुं शक्यः । यतोऽस्याऽऽह्रियमाणा विषया रागं विवर्धयन्त इन्द्रियाणां चोत्तरोत्तरविशिष्टतरविषयरसज्ञतां पुष्णन्तस्तेभ्यो विरतिमापादयन्ति । अत एवानलो नास्यालंभावो विषयेभ्यो निवारणमस्तीति । एवंविधेनानेन स्वभावसंवेदनलक्षणं मुख्यं ज्ञानमावृतम्। तस्मिंश्चाऽऽवृते सर्वाः शक्तयोऽस्याऽऽवृता इति तात्पर्यम् ॥

अथ किमधिष्ठायायं ज्ञानमस्याऽऽवृणोतीत्याह ।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥**

अस्याहंकारस्य प्रतिपादितस्वरूपस्थितिविवृद्धिविचेष्टितलक्षणचतुष्टयस्येन्द्रियाणि, चक्षुरादिवागादीनि, तथा मनः, संकल्पात्मकं, बुद्धिरध्यवसायात्मिकाऽधिष्ठानम् । एतेषु हि कृतस्थितिरयं यथोक्तं ज्ञानमावृत्य देहिनं क्षेत्रज्ञं मोहयति, स्वरूपानभिज्ञत्वकिंचिज्ज्ञत्वकिंचित्कर्तृत्वकारिणा मोहेनाज्ञानेन युनक्ति ॥

यदयमेवंविधः शत्रुः कथं तिरस्कार्य इत्याह ।

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥**

[ शां. पा. १—प्रजहिह्येनं. ]

यत एवंविधोऽसौ ततोऽस्याधिष्ठानभूतानि मनोबुद्धिसहितानि बुद्धीन्द्रियकर्मेन्द्रियाणि सर्वाण्येव प्रथमं नियम्य यथोक्तसत्यात्मस्वरूपप्रतिष्ठात्मप्रत्ययतया रागद्वेषादिदोषोन्मेषनिषेधेन निगृह्य, एनं पाप्मानमज्ञानमयं महाकिल्बिषव-

पुषम् । अत एव ज्ञानस्य शास्त्रादिद्वारेण परमार्थबोधस्य, तथा विज्ञानस्य स्वात्मसाक्षात्कारलक्षणस्य विशिष्टज्ञानस्य नाशिनं तिरस्कारिणं, परमं वैरिणं, प्रजहीहि तिरस्कुरु ॥

एष च परमसूक्ष्मत्वात्परेणोद्योगेनाप्रमादादिना च पराजेयः शत्रुरित्यस्य तां सूक्ष्मतां प्रतिपादयितुमाह—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४७ ॥**

विषयाः शब्दादयस्तावदिन्द्रियद्वारेण सर्वस्य कस्यचिदुपलभ्यतामुपगच्छन्ति । अतस्तदपेक्षयेन्द्रियाणि पराणि, तेभ्यः सूक्ष्माण्याहुः, कथयन्ति तत्त्वविदः । न हीन्द्रियाणि शब्दादिवत्साक्षादुपलभ्यानि कस्यचित् । तेभ्यस्तथाविधेभ्यः सूक्ष्मेभ्य इन्द्रियेभ्यो मनस्तत्प्रवृत्तिनिवृत्ति[2]कारणं सूक्ष्मतरम् । यथेन्द्रियाणि कथंचिद्गम्यन्ते न तथाऽतिचञ्चलं मनः । तथाविधाच्च मनसो बुद्धिः परा सूक्ष्मतमेत्यर्थः । यथा हि मनः कथंचिद्गम्यते, न तथा निर्विकल्पकप्रत्यक्षक्षणवर्त्यध्यवसायात्मिका बुद्धिः । तस्याश्चैवंविधाया बुद्धेर्यः परतः परमसूक्ष्मत्वेन स्थितः, स पूर्वोक्तोऽहंकाराख्यः शत्रुः । यथा हि बुद्धिः कथंचिदभियुक्तैर्गम्यते तथाऽयमविद्याप्रथमाङ्कुरः केनचिदनुन्मिषितपरमेश्वरानुग्रहं प्रभवज्ज्ञानचक्षुषा लक्ष्यीकर्तुमपि शक्यते ॥ तस्मात्,

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥**

**॥ इति श्रीभगवद्गीतासूपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥**

एवं यथोक्तप्रकारेण बुद्धेः परमेनं शत्रुं बुद्ध्वा सुदुर्लक्ष्यत्वात्परमदुर्जयं[1] मत्वाऽत एवाऽऽत्मनैवाऽऽत्मानं संस्तभ्य धैर्यं लम्भयित्वा दुरासदं दुःखेनाऽऽसादयितुं परिभवितुं शक्यमेनं जहि घातय । कीदृशं, कामरूपम् । कामो विषयेष्वभिलाषो रूपं यस्य स तथाविधः । पूर्वं हि कामक्रोधाद्यात्मनाऽस्यावस्थितिरुक्ता । तेन यद्यप्ययं सुसूक्ष्मत्वाद्दुर्जयस्तथाऽप्यस्य पूर्वोक्तेन प्रकारेण कामात्मिकामवस्थितिं निघ्नंस्तद्विहनने समर्थो भविष्यस्येवेत्यर्थः ॥

एवं भगवता क्षत्रियोचितेनैव प्रकारेणार्जुनः प्रस्तुतोपदेशफलप्राप्तिप्रतिद्वंद्विनोऽ-

---

१ राशा १·२–°जय्यः. २ राना १·२–'निवृत्ति' नास्ति.

दुष्कारस्य निबर्हणे समुत्साहितः । त्वया हि महेन्द्रेणापि दुर्जया बहवः शत्रवः सहायानपेक्षेण बहुशो निपातिताः । तदेनमपि शत्रुमात्मैकसहायो निपातयितुमर्हसीत्योम् ।

विज्ञाततत्त्व उपनीयगुणप्रकर्षप्रख्यापनैकनिकषो निजकर्मयोगः ।
अस्मिन्नृणां प्रकटितः परमार्थसिद्धौ सोऽध्याय एष निवृतो विधिवत्तृतीयः॥

इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि गीताविवृतौ तृतीयोऽध्यायः ॥ ३ ॥

## ॥ अथ चतुर्थोऽध्यायः ॥

ॐ एवमस्य समस्ताध्यात्मशास्त्रसर्वस्वभूतार्थगर्भस्य प्रकरणस्य ज्ञानकर्मसमुच्चयलक्षणमभिधेयं परमात्मसमापत्तिलक्षणं प्रयोजनं च प्रतिपाद्येदानीं संबन्धविषयोः प्रतिपादनद्वारेणार्जुनस्याऽऽत्मनि पुरुषत्वमात्रप्रतिपत्तिव्यामोहनिवृत्तये परमकारणतामाविष्कुर्वन्

श्रीभगवानुवाच ।

एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परम्पराख्यातामिमं राजर्षयो विदुः ।
स कालेनैव महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः सनातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

[ शां. पा. १–इमं. २–°पराप्राप्तम्. ३–कालेनेह. ४ पुरातनः राशा १ कोशं विहायान्येषु कोशेषु ‘ पुरा° ’ इत्येव पाठः। टीकायां तु ‘ नित्यं ’ इति तस्य निर्वचनेन टीकाकृतोऽभिप्रेतः पाठः ‘ सनातनः ’ इति प्रतीयते । ]

एवमनेनैव प्रकारेण यथा तुभ्यं प्रोक्तो यो योगस्तथैव विवस्वते महायोगीश्वराय सवित्रे योगमेनमहं परमेश्वर एव कस्मिंश्चित्काले निजयोगैश्वर्यपरिकल्पितनिरतिशयप्रभावमयविग्रहः प्रोक्तवान्, उपदिष्टवान्। कीदृशं योगमव्ययम्। परमकारणवन्न कदाचिद्व्येति क्षीयते यः । स हि जगत्सर्गादिलक्षणं कर्मानुतिष्ठन्नपि परमेश्वरः प्राक्प्रतिपादिताद्वयचिन्मात्रस्वभावलक्षणैकविमर्शनिष्ठतया ज्ञानकर्मसमुच्चयानुष्ठानात्मकस्यास्य योगस्य प्रथमोऽनुष्ठातेति, तद्वद्योगस्यास्याव्यय-

१ राना १·२–°कारुण°. २ राशा १·२–मात्रैक°–°लक्षणविमर्शैकनिष्ठ°.

त्वमुक्तम् । अनेन परमकारणादेव प्रवृत्तेरस्य योगस्य प्राधान्येन संबन्धमुक्त्वा क्रमेणानुष्ठानसांप्रदायतया तमेव संबन्धं विवृणोति । विवस्वान्मनवे प्राहेति । स विवस्वान्पुत्राय मनुसंज्ञायाऽऽदिराजाय प्राह प्रोवाच । प्राहेति लिट् । छान्दस आहादेशः । सोऽपि मनुरिक्ष्वाकुसंज्ञाय पुत्रायैवाब्रवीत् । एवं परमेश्वरादेव प्रभृति परम्परया योग्यपुत्रादिशिष्यरूपप्रबन्धप्रवृत्त्याख्यातं लोके प्रथितं सन्तमन्ये जनकप्रभृतयो राजर्षयो राज्यलक्षणं कर्म कुर्वाणा अपि, यथोक्तज्ञाननिष्ठत्वादृषयो मुनयः, इमं यथोक्तं विदुः । विदांचक्रुरित्यस्मिन्नर्थे छान्दसः प्रयोगः । महता कालेन युगसहस्रादिसंख्येन लोकस्य क्रमापचीयमानप्रज्ञादिसर्वगुणत्वाद्योग्यप्रतिपत्त्यभावान्नष्टोऽन्तर्धानमागतः, परमकारण एव व्यवस्थित इत्यर्थः । स एवाभ्रष्टस्वरूपोऽद्यास्मिन्काले मया परमेश्वरेणैव जगदुपकाराय यादवकुलावतीर्णेन, ते तुभ्यं सनातनो नित्यो योगः प्रोक्तः । यतो मम भक्तोऽसि शुश्रूषुस्त्वं, तथा सखा सुहृत् । अतो भक्तिसौहार्दलक्षणमुख्यशिष्यगुणसंपन्नाय मया तुभ्यमुपदिष्टम् । हि यत उत्तमं सर्वरहस्यानां प्रकृष्टमेतद्रहस्यम् ॥

एवमनेनास्य शास्त्रस्य संबन्धविषयावपि प्रतिपादितौ । निरुत्तरविज्ञानमयदिव्यचक्षुर्दानेन पुरस्तात्प्रत्यक्षीकरिष्यमाणपारमार्थिकस्वरूपस्यार्जुनस्य स्वात्मनि यदुकुलोद्भूतमनुष्यमात्रप्रतिपत्तिनिराकरणद्वारेण भगवता पारमैश्वर्यमात्मनः कथयितुं प्रस्तुतम् । अत एव संजातसंशयः,

अर्जुन उवाच ।

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

[ शां. पा. १–एतद्वि°. ]

भवतस्तवास्मिन्कलिद्वापरसंधौ संभूतत्वादपरमप्रकृष्टं जन्मोत्पत्तिः । विवस्वत आसर्गाद्व्यवस्थितस्य परं प्रकृष्टमित्थं कथमेतद् बुध्येय, त्वमैदंयुगीनजन्मा सुचिरातीतकालजन्मनेऽप्यस्मै सूर्यायैनं योगं प्रोक्तवानिति ॥

अत्र, भगवानुत्तरमुवाच ।

श्रीभगवानुवाच ।

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

---

१ राशा १–°ष्ठानभ्रष्टसां°. २ राना १–( प० लि० ‘ आह ’ इत्येतावदेव ).

सत्यं मम तव चापरिसंख्येयानि जन्मानि तत्तच्छरीरपरिग्रहेण व्यतीतानि, अतिक्रान्तानि । तानि पुनस्तव चाऽऽत्मनश्च समस्तान्येवाहं वेद जानामि । त्वं तु मम नाऽऽत्मनस्तानि जानासि ॥

अतोऽहम्,

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

अजोऽव्ययात्मा नित्यत्वाज्जन्मविनाशरहितोऽपि, तथा सर्वभूतानां स्थावरजङ्गमानां सर्गस्थितिविनाशादिषु यथेष्टकर्तृत्वादीश्वरः प्रभुरपि सन् । स्वां प्रकृतिमात्मीयं परं स्वभावमद्वयचिन्मात्रलक्षणमधिष्ठाय तत्रैव स्थित्वा, तस्मात्स्वभावादप्रच्युतः स्वमायया स्वात्माधीनया मायया द्वैतावभासमात्रप्राणेन शक्तिविशेषेण हेतुभूतेन संभवामि, जन्मादिसत्तां परिगृह्णामि । अतो नित्यत्वादीश्वरत्वाच्च स्वेच्छापरिगृहीतत्वाच्चेत्स्वप्रादुर्भावांस्त्वादृशां च सर्वदेहिनां भूतान्भाविनो वर्तमानांश्च जन्मादिविकारान्सततमविप्लुतसर्वज्ञत्वशक्तिरहमेव जानामि ॥

इत्थं स्वजन्मपरिग्रहस्य प्रयोजनमाह ।

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मांशं सृजाम्यहम् ॥ ७ ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

[ शां. पा. १–तदात्मानं. ]

यदा यदा यत्र यत्र काले । धर्मस्य वर्णाश्रमनियमविभक्तस्य सदाचारस्य ग्लानिरुपक्षयो भवति । ततश्च तद्विपरीतस्याधर्मस्य वर्णादिव्यवस्थाव्युत्थानहेतोर्दुष्टाचारस्याभ्युत्थानमुद्भवो भवति । तदा तत्र तत्र[1] कालेऽहं परमकारणभूतस्याऽऽत्मनः कंचित्कंचिदंशं शक्ति[2]लेशं स्वेच्छापरिकल्पितजगत्क्रीडापरिरक्षणाय सृजाम्युत्पादयामि । अतो देवासुरसर्गविभेदेन स्वयमवभासिते जगति दैवसर्गभाजां शास्त्रोपदेशविषयभूतानां साधूनां सत्त्वगुणोत्कर्षनिर्मलप्रज्ञानां परित्राणाय सत्क्रियाविघातहेतुभ्यो विघ्नेभ्यो रक्षणाय । तथा दुष्कृतां शास्त्रीयनियमातिक्रमाज्जगत्स्थितिविप्लावकदुष्टकर्मणामसतां विनाशाय प्रध्वंसाय । अत एव

१ राना १·२–तदा तत्र काले. २ राना १·२–‘ शक्ति’–नास्ति.

धर्मस्य जातिदेशकालादिप्रविभक्तविशेषस्य सदाचारस्य संस्थापनाय सम्यक्प्ररोपणाय प्रतियुगं तेन तेनाऽऽकारेण समुद्भवाम्युत्पत्तिसत्तां दर्शयामि। न तु वस्तुतः। नाहं जन्मविनाशादिभावविकारकलङ्कस्पर्शमनुभवामि ॥

अत एव,

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

एवमुक्तेन प्रकारेण जन्म कर्म च यः प्रबुद्धो मे तत्त्वतः परमार्थतो जानाति । यत्र शरीरत्वेऽपि सति यथोक्तात्परतः स्वभावादप्रच्युतिः [1]। यत्र तत्तत्क्रियाफलासंस्पर्शश्च, अत एव दिव्यमलोकसामान्यम् । स तादृशो यथोक्तविज्ञाननिष्णातमतिर्देहं त्यक्त्वा देहेऽहंप्रतिपत्तिमुत्सृज्य जन्म नैति । नित्यस्वभावाभिव्यक्तेर्जन्मविनाशवत्त्वव्यामोहं जहाति । अतो मामेति, मत्स्वभावमापद्यते ॥

यत एतेन,

**वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

[ शां. पा. १–मामुपाश्रिताः. ]

यथोक्तज्ञानलक्षणेन निरतिशयशुद्धहेतुना व्रतविशेषेण पूताः पवित्राः सन्तो बहवो योगिनो मद्भावं मामिकां सत्तामागताः । मदभेदं प्राप्ता इत्यर्थः । यतो विज्ञानपरिशीलनाद्वीतरागभयक्रोधा रागो विषयेष्वभिलाषस्तथा तद्विघातहेतुभ्यो शक्यप्रतीकारेभ्यो भयं त्रासः, तथा शक्यप्रतीकारेषु क्रोध इत्येते संसारदुर्गदुरुच्छेदनिगडभूता दोषा वीता विगतास्त्रुटिता येषां ते । अत एव मन्मया मदेकस्वभावाः। मद्व्यपाश्रयाः। अहमेव व्यपाश्रयो निरपायत्वाद्विशिष्टोऽपाश्रयः स्थितिहेतुर्येषां ते तथाविधाः । ननु प्रबन्धतो भगवतैकमेव तत्त्वं यथाप्रतिपादितविशेषणविशिष्टं परमार्थसत्त्वेन प्रतिपादितं तदेव चेदानीमहंतया व्यपदिश्यते । तत्कथम् । केचिदेव मद्भावमागता इत्युच्यते ॥

इत्यर्जुनस्य सम्यगगृहीतपारमेश्वरक्रीडाविधेर्विकल्पमाशङ्क्याऽऽह ।

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

सत्यमेवाहं समस्तानामन्योन्यभिन्ननानाविधस्वरूपाणां फेनबुद्बुदकल्लोलक-

---

१ राशा १·२–' नाहं ' इत्यत्र ' अतोऽहं '.

लापानामुदधिरिवोदयास्तमयनिलय एक एव। तादृशेन च मया निजमायाशक्त्या तत्तन्नियतसामर्थ्यावच्छिन्नदेहादिप्रतिष्ठिताहंकारत्वेन नानारूपा ये क्षेत्रज्ञा अवभासितास्तेषु मध्ये यथा येन प्रकारेण यादृशेन संकल्पेन ये केचन मां प्रपद्यन्ते, मां प्रार्थयन्ते, तत्कालं मत्समापन्ना भवन्ति। तानहं तथैव तत्तत्संकल्पोचितफलदानरूपेण प्रकारेण भजामि, संश्रयामि। यतः सर्व एव मनुष्यास्तत्तदर्थक्रियासंपादनार्थितावसरे मम सर्वेभ्यः सर्वमनोरथफलप्रसाधनैकचिन्तामणेर्धर्मप्राप्तिहेतुं निर्विकल्पोत्साहलक्षणं पन्थानमनुवर्तन्तेऽनुकुर्वन्ति। यथाऽहं परेणोत्साहेनैक एव सर्वं करोमि जानामि च। तथा ते प्रतिनियतं कार्यं ज्ञेयं च कुर्वन्तो जानन्तश्च मत्समापत्तिं सवेदनशक्तिशून्यत्वादहं करोम्यहं जानामीति किंचित्कर्तरि किंचिज्ज्ञे च तादृशे स्वात्मनि कर्तृत्वादिकं मन्यन्ते। किमनेनोक्तं भवति। यथाऽर्कालोकेनानुगृहीतदृष्टयस्तिर्यञ्चो बालादयश्च तत्तदर्थक्रियानिष्ठा ते ते स्वं स्वं विषयं पश्यन्ति न च तत्रार्कालोकं कारणत्वेन मन्यन्ते। मूढत्वात्। यतस्तादृशेन व्यवहारेण व्युत्पन्नाः। तथैव सर्वक्षेत्रज्ञास्तत्तदर्थक्रियार्थिनो मयैव तत्क्षणप्रार्थितेन स्वप्रकाशानुगृहीतेन संविदो दृष्टप्रयोजनमदृष्टप्रयोजनं वा सर्वं कुर्वन्ति जानन्ति च। मायामोहितत्वादात्मानं तत्र कारणत्वेन मन्यन्ते, न च मां तत्र कारणत्वेन मन्यन्ते॥

अत एव किं वाञ्छन्तस्ते मम वर्त्मानुवर्तन्त इत्याह।

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा॥ १२॥**

दृष्टप्रयोजनेन कर्मणा तत्तदभिमतप्राप्तिलक्षणं सिद्धिं कर्मफलं प्रार्थयमानाः। तथाऽदृष्टप्रयोजनेन यज्ञादिना तत्तल्लोकान्तरभोग्यसुखप्राप्तिलक्षणफलाभिलाषिणः सन्तो देवता इन्द्रादिरूपा यजन्तो हविर्दानादिना पूजयन्तः। किमत्र तात्पर्यम्। आब्रह्मणः कीटपर्यन्तं यो यः कश्चिद्येन येनाभिसंधिना यद्यत्किंचन चिकीर्षति जिज्ञासते वा, तत्तत्फलसंपत्तेस्तत्तत्कालमवश्यभाविन्यः संचेत्यमाना मत्समापत्तिरेवैकं कारणम्। यस्मात्—अस्मिन्मानुषे लोके सर्वस्य प्रत्यक्षभूते कर्मजा तत्तत्संकल्पमूलव्यापारसमुत्था सिद्धिः फलप्राप्तिः क्षिप्रं तत्कालमेव मत्समापत्तिबलादेव संपद्यते। परमार्थतः कर्तुर्ज्ञातुर्वाऽन्यस्यासंभवात्॥

---

१ राशा २-( प० लि० ) 'धर्म-' इत्यत्र 'कर्म-'. २ राना १·२-°पत्तेस्तत्कालम्.

ननु त्वमेव चेदेकः कर्ता तत्क्षेत्रज्ञभावेन कृतैः कर्मभिस्त्वमेव तत्फलेन संबध्यसे । ततश्च क्षेत्रज्ञवत्सुखादिसंबन्धस्तवापि प्रसक्त इत्यर्जुनशङ्कां परिहर्तुकाम इत्याह ।

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

[ शां. पा. १–°विभागशः. ]

सत्यं गुणविभागेनायं सात्त्विकोऽयं राजसोऽयं तामस इत्येवंरूपेण सर्गभेदमूलेन तथा कर्मविभागेन । ब्राह्मणेनाध्येतव्यं यष्टव्यं दातव्यमित्येवमादिरूपेण, मया यथोक्तस्वरूपेणैकेन कर्त्रा चातुर्वर्ण्यं सृष्टम् । चत्वारो वर्णा ब्राह्मणादयो निर्मितास्तस्यैवंविधस्य चातुर्वर्ण्यस्य स्वगुणकर्मविभागसमुचितकर्मानुरूपतत्तत्फलभाजः कर्तारं निर्मातारमपि मामकर्तारं तद्वृत्तादृकर्मफलसंबन्धाभावात्कर्तृधर्मरहितं जानीहि । कुत इति हेतुगर्भं विशेषणमाह । कीदृशं सन्तमकर्तारं विद्ध्यव्ययं नित्यमेकस्मात्स्वरूपाद्यतोऽहं न व्येमि न व्यपगच्छामि । अद्वयचिन्मात्रस्वभावतामेव न जहाम्येवं चाव्ययं सन्तं मामकर्तारं विद्धि । क्षेत्रज्ञा हि मन्मायोद्भाविता नित्यदेहाद्यहंकारमयास्त्रिगुणाः संकल्पकारिणः सुखादिभिः फलैर्युज्यन्ते । न त्वहं गुणातीतस्वभावस्तैर्जातु युज्ये ॥

ततश्च,

**न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

[ शां. पा. १–न मे कर्मफले स्पृहा. ]

कर्माणि पुण्यापुण्यलक्षणाः क्रिया न मां लिम्पन्ति । सुखदुःखादिलक्षणस्वफलरूपेण कलङ्केन न मलिनयन्ति । यतो नित्यनिजानन्दतृप्तस्य मम कर्मणां फलेषु तत्तदुत्तरोत्तरप्रकृष्टस्वरूपेष्वपि न कामो नाभिलाषः । यथाप्रतिपादितस्वरूपैकमयत्वेन सर्वमिदमनुपश्यतः । यश्च यथोक्तेन ज्ञानामृतनिर्झरेण निर्धौतसकलविकल्पकलङ्कत्वान्निर्मलप्रज्ञो योगीत्येवं यथोक्तस्वरूपं मामभिजानाति, प्रतिपद्यते । स मद्वत्क्रियमाणैः कर्मभिर्न बध्यते । न रागादिक्लेशपाशनियन्त्रितः क्रियते ॥

१ राना १·२–मार्गं°. २ चतुर्ष्वपि राम. कोशेषु ‘ युज्यते ’ इति प्रमादतो लिखितमिति भाति. ३ राना १·२–‘ अभि– ’ नास्ति.

किंच,

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

एवं यथा प्रतिपाद्य ते कर्तृत्वेऽप्यकर्तृत्वपर्यवसायित्वात् । तत्त्वं ज्ञात्वाऽधिगम्य, पूर्वैरपि मन्वादिभिर्मुमुक्षुभिः कर्म शास्त्रचोदितं कृतमनुष्ठितम् । तस्मात्त्वमपि यथोक्तज्ञाननिष्ठत्वेन कर्मैव स्वजादिविहितं युद्धादिव्यापारमेवानुतिष्ठ । पूर्वैरतीतविप्रकृष्टकालजन्मभिस्तैस्तैः पूर्वतरमादितरमनुष्ठितम् ॥

किंतु,

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

किं कर्मानुष्ठेयं, किंचाकर्म परिहार्यमित्यत्र प्रविभागज्ञाने कवयोऽपि द्रष्टारोऽपि मुनयो मोहिताः । तेऽपि सम्यगेतयोर्न विभागं जानते । तस्मादकर्मपरिहारेण तदनुष्ठेयं कर्म तुभ्यं प्रकर्षेणेदानीं कथयिष्यामि । यद्विदित्वा संसारबन्धलक्षणादशुभादकल्याणान्मोक्ष्यसे मुक्तो भविष्यसि ॥

यतः,

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

सामान्येनानुष्ठेयतयोपदिष्टस्य कर्मणो बोद्धव्यं विशेषात्मकं वस्तु विद्यते । अकर्मणश्च कर्मपरिहारस्यापि बोद्धव्यं विद्यते । विकर्मणश्च विरुद्धस्यापि कर्मणस्तथैव बोद्धव्यं विद्यते । यतोऽस्य त्रिप्रकारत्वे व्यवस्थितस्य कर्मणो गहना दुरवधारतत्त्वा गतिर्व्याप्तिः ॥

सा च यथाऽवधार्यते तथा प्रतिपादयितुमाह ।

**कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स चोक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

[ शां. पा. १—पश्येत्. २—स युक्तः. ]

यथोक्तज्ञाननिष्ठतयाऽनुष्ठीयमाने शास्त्रचोदितस्वव्यापारे यस्तत्त्ववित् । अकर्म कर्माभावं संसारबन्धलक्षणकर्म कार्याकरणात्पुत्रेऽप्यपुत्रवत्पश्यति । तथाऽक-

---

१ राशा १—'किंच' इत्यत्र 'तस्मादनया बुद्ध्या पवित्रीकृतस्त्वमप्यवश्यकर्तव्यानि कर्माणि कुर्वित्याह'. २ राना १·२—किंच कर्म परि°.

र्मणि यथाविहितकर्मप्रतिषेधे पूर्वोक्तोपपत्त्या रागादिदोषानुषङ्गस्य दुरुच्छेदत्वाद्ब-न्धलक्षणकर्म कार्यकरणात्कर्मत्वं पश्यति, ज्ञानदृष्ट्या निश्चिनोति। मनुष्येषु मध्ये प्रशस्यया बुद्ध्या युक्तः स एव च संपूर्णपुरुषार्थसंपादकत्वात्कृत्स्नस्यावि-कलस्य कर्मणः कर्ताऽनुष्ठातोच्यते। भोगमात्रफलं हि कर्म कृत्स्नमविकलाङ्गमप्य-नुष्ठितमपवर्गलक्षणफलं प्रत्यहेतुत्वान्न कृत्स्नं भवति। अतस्तदनुष्ठाता न कृत्स्न-कर्मकृदित्यर्थः॥

एवमनेन श्लोकेन कर्मणश्चाकर्मणश्च यद्बोद्धव्यमस्ति तद्व्याख्यातम्। अथ कर्मैवाकर्म भवतीत्येतत्पूर्वमुक्तमपि दृढप्रतिपत्तये स्मारयन्विवृणोति।

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥ १९॥**

काम्यन्त इति कामाः कर्मफलत्वेन प्रार्थ्यमानास्ते ते भोगास्तेषु संकल्प इच्छा, तेन रहिताः। सर्वे समस्ता दृष्टानुश्राविकविषयनिष्ठाः समारम्भाः कर्मप्रवृत्तयो यस्य तम्। यथोदितयथोक्तात्मतत्त्वज्ञानरूपेणानलेन दग्धकर्माणम्। दग्धानि संसाराङ्कुरप्रसवसामर्थ्यहरणाद्भस्मीकृतानि कर्मलक्षणानि बीजानि येन तं तादृशं पण्डितं विद्वांसमाहुः परमार्थविदः। यतः सर्वात्मना कृतकृत्यत्वपर्यवसायिनी विद्वत्ता। सा च यथोक्तज्ञानवत एव संभवति। एवं कर्मण्येवाकर्म विद्वान्पश्यति, इति व्याख्यातम्॥

तदेव विशिनष्टि, यतः,

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥ २०॥**

स एवंविधो योगी परमानन्दमयपरमस्वभावसुव्यवस्थितबुद्धिर्नित्यतृप्तः सकल-बाह्यविषयरसपरिक्षीणाकाङ्क्षोऽत एव निराश्रयः, स्वरूपव्यतिरिक्ताद्बाह्यादालम्बना-न्निष्क्रान्तः। कर्मफलासङ्गं कर्मणां यज्ञदानतपःप्रभृतीनां फलं स्वर्गादिभोग-लक्षणमासङ्गमासक्तिं, तदेव प्रकृष्टं फलमिति तत्र लीनचित्तत्वं त्यक्त्वा सहजे कर्मण्यभिप्रवृत्तोऽनुष्ठाने व्यवसितोऽपि नैव किंचित्करोति। तथाविधस्य योगिनः सर्वस्य कर्मणो बन्धलक्षणस्वकार्यसंपादनासामर्थ्यात्॥

यथोक्तस्य योगिनः प्रशंसार्थमेवाऽऽह,

---

१ राना १·२—कार्यत्वं.

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥
यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥

प्रागेव व्याख्यातमेतत् । यद्यपि कर्माकर्मणोरेव बोद्धव्यं वस्तु व्याख्यातं, तथाऽपि विकर्मणोऽपि बोद्धव्यं[1] तद्व्याख्यानेनैव[2] व्याख्यातम् । यतः कर्मपरिहारस्य ज्ञानशून्यस्य सतो यत्र बन्धत्वमुक्तं तत्र वर्णाश्रमसमयविरुद्धस्य कर्मणो बन्धकत्वे का भ्रान्तिरिति तस्यापि सर्वात्मना परिहार्यत्वलक्षणं बोद्धव्यं वस्तु व्याख्यातमेव । इदानीं कर्म सर्वथा कर्तव्यमिति सामान्येन कर्ममात्रमनुष्ठेयत्वेनोपदिष्टम् ॥

प्राक्तस्य, 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इत्यनेन सूचितां यज्ञलक्षणविशिष्टरूपतां मोक्षैकफलत्वं च योगिस्वरूपप्रतिपादनद्वारेणैव प्रस्तावयन्नाह ।

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाऽऽरभतः कर्म समग्रं प्रविलीयते ॥२३॥

[ शां. पा. १–°याऽऽचरतः. ]

यथोक्तज्ञानेऽवस्थितचेतसः प्रतिलब्धप्रतिष्ठप्रज्ञस्यात एव निवृत्तविषयाद्यासङ्गस्य ततश्च मुक्तस्याऽऽत्मानात्मविवेकसमाधिसिद्धिलाभाद्देहाद्यात्मप्रत्ययरूपान्महतो बन्धनाद्विष्क्रान्तस्य सतो वक्ष्यमाणप्रभेदाय यज्ञाय यजनाय तदर्थं कर्म शास्त्रविहितां क्रियामारभमाणस्य कुर्वत एव । समग्रं कायिकवाचिकमानसिकभेदेन संग्रहात्त्रिप्रकारमवान्तरभेदेन त्वपरिसंख्येयम् । विलीयते विगलति । ब्रह्मप्राप्तिहेतुत्वाद्विनश्वरफलारम्भकत्वलक्षणं स्वरूपमस्य नश्यतीत्यर्थः ॥

कथं क्रियमाणमेव कर्म प्रविलीयत इति विवेकसमाधिसिद्धिनान्तरीयकां ब्रह्मैकसिद्धिं कर्मप्रविलयकारणभूतां प्रतिपादयितुमाह ।

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

---

१ राना १·२–'बोद्धव्यं' नास्ति. २ राशा १–'एव' नास्ति.

तेन गतसङ्गादिविशेषणविशिष्टेन योगिना ब्रह्मैव गन्तव्यमतः समग्रं तस्य कर्म प्रविलीयत इति संबन्धः । तदेतद्व्याख्यायते । तेन योगिना बृहत्त्वादि-धर्मयोगाद् ब्रह्मशब्दवाच्यपरमार्थतत्त्वमेव योग्यतावशान्निर्विकल्पतया [illegible]-मानं गन्तव्यं संप्रदानत्वेनोपस्थातव्यम् । न हि तथाविधस्य योगिनस्तत्तत्फलाभि-संधिना तत्तद्देवतान्तरं संप्रदानतया गन्तव्यत्वमर्हति । कीदृशेन तेन ब्रह्मैव गन्त-व्यम् । ब्रह्मकर्मसमाधिना समुन्मिषिते विज्ञानात्मके दिव्ये चक्षुषि यथोक्तब्रह्मा-भेदेन प्रथमानं कर्म, ब्रह्मकर्म । स एव समाधिर्निरुत्तरो योगो यस्य स तथा । तेन तादृशेन कीदृशं ब्रह्म गन्तव्यम् । ब्रह्मणा ब्रह्माभिन्नस्वरूपतया स्वात्मानं मन्यमानेन यजमानेन हुतं तर्पितम् । ब्रह्मरूपतया प्रतिपन्नेऽग्नौ जातवेदसि कीदृशं ब्रह्म ब्रह्मार्पणम् । ब्रह्मरूपतयैव प्रतीयमानमर्पणमाज्यपयःसोमादि-यागद्रव्योपकरणसाधनं हस्तादि यत्र तत्तादृशम् । तथा ब्रह्म हविः ब्रह्मत्वेनैव प्रतिपद्यमानं हविर्हूयमानमाज्यादि द्रव्यं यत्र तत्तथाविधम् । इदमनेन प्रतिपा-दितम् । यद्यद्वस्तु यथा यथा[1] प्रकाशते ततः प्रकाशमानत्वादेव प्रकाशात्माभि-न्नस्वरूपं परमात्मव्यतिरिक्तं परमार्थतः पदार्थजातं न किंचित्संभवति । इति तत्त्वविद्भिः स्वसंवेदनसंवेद्यत्वनिष्प्रकम्पोपपत्त्युपलब्धिप्रदर्शनक्रमेण व्यवस्था-पितोऽप्ययमात्मैश्वर्याद्वयमयो न यस्य कस्यचित्प्रतिपत्तिगोचरतामुपगच्छति । परमेश्वरेणैव विहितनियमत्वात् । तदयमैश्वरो नियमः । स्वेच्छावभासितान्योन्य-भिन्नस्वरूपेऽप्यपरिसंख्येयेषु प्रमातृषु कंचिदेव स्वेच्छावशादसावनुगृह्णाति । तस्य चानुगृहीतमात्रस्य तत्त्वावलोकव्यवधायकसंदेहमहागिरीन्द्रनिर्दलनदम्भोलिधारा भक्तिरुन्मिषति । तत्प्रभावाच्च यथोक्तं तत्त्वज्ञानं शास्त्रात्मकगुरूपदेशादि-नोपनमति । तस्मिंश्च विशुद्धशुद्धासिद्धसिन्धुनिर्धौतनिखिलविकल्पकलङ्क-या परमया प्रज्ञया निरन्तरमनुशील्यमाने देहिदेहविवेकज्ञानलक्षणमद्वैतपुरद्वारम-पावृतं भवति । तत्र लब्धप्रवेशोऽस्मिन्ब्रह्मार्पणविधानेऽधिकृतो योगी प्रकृत उक्तम्— "गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।

यज्ञायाऽऽरभतः कर्म समग्रं प्रविलीयते ॥"

तेन च ब्रह्मैव गन्तव्यमिति । यज्ञाख्यस्य कर्मणः प्राधान्याद्दृष्टादृष्टविष-यसकलक्रियोपलक्षणार्थत्वेन ग्रहणमिह वेदितव्यम् । यतः पश्यञ्शृण्वन्नित्यादिना सर्वासु क्रियास्वेतां ब्रह्माद्वैतभावनामभिधास्यत्येव ॥

---

[1] राना १·२–यथा ( एकवारमेव ).

इदानीं वर्णाश्रमविभक्ताधिकार्यवस्थादिविभेदाद्येषु यज्ञप्रभेदेष्वेषा भावना योगिना विधातव्याऽनुष्ठातृमुखेन(ण) तां प्रतिपादयंस्तेषां तावद्बाह्यान्तरसाधनप्राधान्येन प्रकारद्वयं तस्यैव ज्ञानयज्ञकारणभूतप्रकारद्वयसहितं श्लोकत्रयेणाऽऽह।

दैवमेवापरे यज्ञं योगिनः संमुपासते।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

[ शां. पा. १–पर्युपासते. ]

अपरे केचिद्योगिनः संप्रत्यनुत्पन्नयथोक्ततत्त्वज्ञानत्वात्क्रियामात्रसमाहिता दैवमेव यज्ञं समुपासते। देवानामग्नीषोमप्रजापतीन्द्रादित्यानां प्राधान्येनेज्यमानत्वाद्देवसंबन्धिनं यागमनुष्ठानेन भजन्ते नान्यम्। यत्र ऋत्विगाज्यपयःसोमादि चेतनाचेतनं बाह्यं द्रव्यमुपकरणम्। अपरे तेभ्योऽप्यन्ये तत्त्वविदस्तेनैव यज्ञेन तत्तदुपकरणभावावस्थितात्ममयेन यज्ञमात्मानमेवोपजुह्वति प्रीणन्ति। क, ब्रह्माग्नौ। ब्रह्म तत्त्वज्ञानं स एव परप्रकाशात्मकत्वात्सकलशुभाशुभकर्मफलदाहहेतुत्वाच्चाग्निस्तस्मिन्। एतदुक्तं भवति। ब्रह्मार्पणविधानविदो दैवमेव यज्ञं ज्ञानयज्ञत्वमापादयन्ति। अथान्ये केचन योगिनश्चित्तवृत्तिनिरोधलक्षणसमाधिनिष्ठा अबहिःसाधनसाध्यं यज्ञमनुतिष्ठन्तः श्रोत्रादीन्यक्षाणि तत्तद्ध्येयार्थसमाधिरूपेषु संयमेष्वेवाग्निषु जुह्वति। विषयेभ्यः प्रत्याहृत्य तेषु तेषु समाधिष्वालीनानीन्द्रियाणि कुर्वन्तो यज्ञसंपत्तिमभिमन्यन्त इत्यर्थः। अन्ये पुनर्योगिनः शब्दादीन्विषयान्परिहारेण श्रोत्रादिष्विन्द्रियेषु जुह्वति। निषिद्धबहिष्प्रसरास्विन्द्रियवृत्तिष्वेव लब्धसंयमे चेतसि शब्दादीनामग्रहणमेवेन्द्रियेष्वग्निकल्पेषु हवनं मन्यमानास्तथाविधं यज्ञमनुतिष्ठन्तीत्यर्थः। अपरे केचनैवंविधस्य योगयज्ञस्य ज्ञानयज्ञत्वसंपत्त्ये सर्वाण्यशेषाणि बाह्यानामाभ्यन्तराणां चेन्द्रियाणां कर्माणि प्राणस्य च सामान्यरूपस्यैकस्य प्राणापानसमानोदानव्यानाद्भिभेदप्रवृत्तानि समस्तानि कर्माण्यात्मसंयमयोगाग्नौ जुहृवत्यात्मनि प्रतिपादितलक्षणे परस्मिन्कारणे यः संयमः सम्यक्चित्तस्य निब-

---

१ राना १·२–' तत्त्व ' नास्ति.

न्धनं तदात्मको योगः समाधिः स एवाग्निस्तत्र तानि विलीनानि कुर्वते । कीदृशे ? ज्ञानदीपिते । आत्माद्वयलक्षणेन ज्ञानेन बोधेन दीपिते द्योतिते । किमुक्तं भवति । तेषु तेषु नानाविधेषु योगेषु मनःप्राणयोर्व्यापारान्हविर्वदात्मनिष्ठे समाध्यग्नौ निक्षिपन्तस्तादृशस्य योगयज्ञस्य ज्ञानयज्ञत्वमापादयन्तीत्यर्थः ॥

एवं यज्ञानां व्यापारभेदेन चतुर्विधत्वं प्रतिपाद्येदानीमाश्रमभेदप्रतिपादनद्वारेण यज्ञभेदान्प्रतिपादयितुं श्लोकद्वयं सार्धमाह ।

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।

द्रव्येण हविरादिना यज्ञाः पाकयज्ञादिर्यागविधिर्येषां ते द्रव्ययज्ञाः । तत्तद्देवतायजनप्रधानक्रतुक्रियानुष्ठायिनः, संभवन्तीति शेषः । ते च गार्हस्थ्याश्रमवर्तिनः प्राधान्येनात्राभिप्रेताः । यतो गृहस्थानामेव द्रव्यसाधने देवयज्ञे मुख्यतयाऽधिकारः । तत्र पाकयज्ञाः सर्ववर्णसाधारणाः, यतः शूद्रस्यापि ‘ पाकयज्ञैः स्वयं यजेतैको विहितोऽस्य नमस्कारो मन्त्रः ’ इत्यादिना तेष्वधिकारो विहितः। तथाऽन्ये तपोयज्ञास्तपसा तेन तेन वर्णविशेषविभक्तेन नियमेन यज्ञो यागविधिर्येषां ते प्राधान्येन वानप्रस्थाश्रमिणोऽत्र गृह्यन्ते, तेषामेव मुख्यतया तपोनिष्ठत्वात् । आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषमित्यादिना शूद्रस्याप्यत्राधिकारात्तपोयज्ञेष्वधिकारः । तथाऽन्ये योगयज्ञाः । योगेन यमनियमाद्यङ्गनिर्वर्त्येन सबीजनिर्बीजरूपेण चित्तवृत्तिनिरोधैकलक्षणेन समाधिना यज्ञो येषां ते योगयज्ञाः प्राधान्येन चतुर्थाश्रमिणः । तेषामेव प्राधान्येन योगपरत्वात् । अत्रापि शूद्रस्याधिकारो विहितः । यतो भगवता व्यासमुनिनैव चतुर्वर्णसाधारणान्धर्मान्निर्दिशता तन्मध्य आत्मज्ञानमुक्तम् । तथा च जनकपराशरसंवादे,

“ विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम ।
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ” ॥

इति प्रश्ने विशेषधर्मानुक्त्वा भगवान्पराशरः,

" आनृशंस्यमहिंसा चाप्रमादः संविभागता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥

अत्रैवान्यत्र, ' न चापि शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति ।
श्रुतिप्रवृत्तं न च धर्ममश्नुते न चास्य धर्मप्रतिषेधनं कृतम् ॥

अत्रैवान्यत्रापि,

सर्वे वर्णा धर्मकार्याणि सम्यक्कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वा धर्मं दारुणं जीवलोके यान्ति स्वर्गं नात्र कार्यो विचारः ॥ इति।

स्वाध्यायज्ञानयज्ञाश्चापरे । स्वाध्यायो वेदवेदाङ्गस्मृतीतिहासपुराणतर्कदण्डनीतिवार्तादेर्यथास्वं स्वस्य शास्त्रस्याध्ययनम् । तत्र प्राधान्येन ब्रह्मचर्याश्रमिणोऽधिकृताः । यतो मुख्यतया तेषां स्वाध्यायनिष्ठत्वं व्यवस्थितम् । तत्र च कस्मिंश्चिदंशे कथंचिच्छूद्रस्याप्यधिकारः, यतः ' स्वयं यजेतेति' पाकयज्ञेषु तस्याधिकाराभ्युपगमात्तदितिकर्तव्यताविज्ञानहेतोः कस्यचिच्छास्त्रावयवस्य केनाचित्प्रकारेणाध्ययनमवश्यमेव प्रसक्तम् । तथा ज्ञानयज्ञाः। ज्ञानेन प्रबन्धप्रतिपादितात्माद्वैतबोधात्मना यज्ञो यागविधिर्येषां, तत्र सर्ववर्णाः सर्वाश्रमिणो गृह्यन्ते । तत्र शूद्रस्याप्यधिकारः। तथा चोक्तमिहैव, परब्रह्मैव स्वरूपमात्मानं व्यपदिशता भगवता—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

न चातिशयोक्तिमात्रमेतत् । यतो मुनिनैवोक्तं मोक्षधर्मेषु, पिङ्गलासुलभाद्याः स्त्रियः, तुलाधराद्याश्च वैश्याः, धर्मव्याधादयः शूद्रा आविर्भूततत्त्वज्ञानास्तत्र तत्रोदाहृताः । तदनेन ज्ञानयज्ञेन पूर्वोक्ता यज्ञभेदा ज्ञानयज्ञतामाप्नुवन्तीत्युक्तं भवति । स्वाध्यायज्ञानयज्ञानां, यतयः संशितव्रता इति विशेषणम् । स्वाध्याययज्ञानामत्यन्तनियमपरत्वाज्ज्ञानयज्ञानां च परमार्थनिष्ठत्वान्मुख्ययतिलक्षणयोगाद्वेदितव्यम् । अथ प्राणायामयज्ञस्य साधारण्यात्पृथक्स्वरूपं प्रतिपादयन्नाह । अपरे केचिद्योगिनोऽपाने पूरकवृत्तौ व्यवस्थिते शारीरे मरुति प्राणं रेचकवृत्तिव्यवस्थितवायुं जुह्वति, प्राणाख्यं वायुं हविर्भावेन कल्पयित्वाऽपानं चाग्नित्वेन,

यागविधिमनुतिष्ठन्तीत्यर्थः । रेचितः प्राणो यदाऽपानवृत्त्याऽऽत्मना परावर्तमानः स्वरूपं जहाति तदापानेऽसौ हुतो भवतीति कृत्वाऽपाने जुह्वति प्राणमित्युक्तम् । अनेनैव क्रमेण प्राणेऽग्निभावेन कल्पितेऽपानं हविर्भूतमन्ये तु जुह्वति । इति रेचकवृत्तिपूर्वकत्वेन पूरकवृत्तिविश्रान्तिरूपं प्राणायामक्रमद्वयं प्रतिपाद्य कुम्भकवृत्तिरूपं क्रमं प्रतिपादयितुमाह। अपरेऽन्ये प्राणापानयोर्द्वयोरपि गती व्यापारौ रुद्ध्वा स्तम्भयित्वा यावच्छक्ति प्राणायामपरायणाः। तथाविधानां रुद्धानां प्राणानामायासश्चिरकालावस्थानाद्दीर्घीकरणं परायणं निष्ठा येषां ते तादृशाः प्राणायामपरायणाः । अनेन रेचकपूरकवृत्त्योरपि प्राणानामायाम एवोक्तो वेदितव्यः। ते चैवंविधा नियताहारा मात्राकालावच्छिन्नहितपवित्राशिनः सन्तः प्राणान्नानानाडीवाहिनो वायूनाज्यभूतान्मध्यमेषु प्राणेष्वग्निभूतेषु जुह्वति तत्र लीनान्कुर्वते, मध्यमप्राणवृत्त्यवलम्बिनस्तिष्ठन्ति । अयं प्राणयज्ञक्रमः प्रतिपादितः । एषोऽपि पूर्वोक्तज्ञाननिष्ठतयाऽनुष्ठीयमानो ज्ञानयज्ञत्वमापद्यते । यतः पूर्वयोर्द्वयोः प्रकारयोः प्राणोदयास्तमयसंधिसमाहितत्वेन परमात्मसमापत्तिहेतुतामापद्यमानयोर्विज्ञानयज्ञता जायते । तृतीयेऽपि क्रमे मध्यमप्राणपरिणतचित्ततयाऽसौ जायते । अस्य च प्राणायामक्रमस्य योगाङ्गत्वेन व्यवस्थितस्यापि पुनर्वचनं केवलस्यैव यज्ञविशेष प्रतिपादनार्थं वेदितव्यम् ॥

एवमनुष्ठातृभेदेन यज्ञभेदान्प्रतिपाद्य सर्वेषामपवर्गफलत्वं यथा भवति तथा प्रतिपादयितुमाह,

**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**
**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**

एते यथोक्तविविधयज्ञानुष्ठातारः सर्वेऽपि समस्ता एव निर्विशेषतया सनातनं नित्यमक्षयं ब्रह्म परमात्मतत्त्वं यान्ति गच्छन्ति । तदेव संपद्यन्त इत्यर्थः । कीदृशाः । यज्ञविदः सन्तः । यदि यथाप्रतिपादितब्रह्मार्पणविधानक्रमेण यज्ञं यथोक्तं नानारूपं यागं जानन्ति, निर्विकल्पतया प्रतिपद्यन्ते, ततस्तथा ज्ञातेन यज्ञविधिना क्षपितकल्मषा विनाशिताज्ञानलक्षणमुख्यमहापातकाः सन्तः। तथाऽनुष्ठिताद्यज्ञाच्छिष्टं तादृग्यागविधानानन्तरमाहरणीयं यत्तदेवामृतं ब्रह्मार्पणविधानदृष्ट्या ब्रह्ममयत्वादमृतमनुत्तरानन्दास्वादसुन्दरं सुधारसं भुञ्जते । परसंविन्मयस्वात्मपरिपोषाय चर्वयन्ति ये तथाविधाः सन्तो यथोक्तं ब्रह्मलक्षणं पदं प्राप्नु-

वन्तीत्यर्थः। ब्रह्मार्पणज्ञानव्यतिरेकेणैतान्यागविशेषाननुतिष्ठन्तस्तेभ्यस्ततो नानारूपं परिणतेभ्यस्तत्तन्नानारूपपरिमितं फलं प्राप्नुवन्तीत्यर्थात्प्रतिपादितं भवति ॥

यस्तु केवलेन क्रियामात्रेण ज्ञानक्रियासमुच्चयेन वा द्वयोरेकतमेनापि विधिना यज्ञेन किंचिदनुतिष्ठति तस्य,

**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥**

अयज्ञस्योभयरूपतयाऽपि यज्ञरहितस्यायमेव लोको दृष्ट एव नास्तिकत्वात्सर्वजनद्वेषस्य सतो नास्ति । यदुक्तम्,

सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
नास्तिकोऽपि ह्युद्विजते जनः किं पुनरास्तिकः ॥ इति ।

तस्यैवंविधस्य पापशीलस्य कुतोऽन्य एतस्माल्लोकात्परः स्वर्गापवर्गात्मकफलभोगास्पदमदृष्टसंज्ञो भवति ॥

अथैतेषां सर्वयज्ञानां कर्मजत्वप्रतिपादनेन ज्ञानयज्ञत्वापत्तिं प्रतिपादयितुमाह ।

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

एवं यथोक्तेन क्रमेण भूरिप्रकारा यज्ञा ब्रह्मणो वेदादेः शास्त्रस्य मुखे तद्द्वारेणेत्यर्थः । वितताः स्वर्गविशेषप्रतिपादनक्रमेण विस्तारिताः । तांश्च सर्वान्कर्मजान्वाङ्मनःकायव्यापारनिर्वर्त्यक्रियासमुद्भवान्विद्धि । नान्यथैषामात्मलाभोपपत्तिरिति निश्चिनु । येऽपि हि बुद्धिमात्रसाधना यज्ञास्तेषु तादृक्सूक्ष्मबुद्धिव्यापाराव्यभिचारः स्थित एव । ततः सहसृष्टत्वादशक्यपरिहाराणां कर्मात्मकानां यज्ञानां यथोक्तज्ञाननिष्ठतयाऽनुष्ठानमपवर्गसिद्धिहेतुरित्येवं ज्ञात्वा सम्यक्प्रतिपद्य विमोक्ष्यसे । स्वयमेव केवली भविष्यसि । न निमित्तान्तरमपेक्षिष्यस इति समुच्चयज्ञानस्य मोक्षं प्रति सौकर्यप्रतिपादनाय विमोक्ष्यस इति कर्मकर्तरि प्रयोगः ।

अथैतस्य ज्ञानस्य प्रशंसार्थमाह,

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

द्रव्यमयाद्यज्ञादिति यथोक्तप्रतिपादितप्रभेदयज्ञोपलक्षणार्थं वेदितव्यम् ।

तेन सर्वेभ्यो यज्ञेभ्यो ज्ञानयज्ञः श्रेयान्प्रशस्यतरः । ज्ञानमयो हि यज्ञः सर्वान्द्रव्ययज्ञादीन्मोक्षफलान्संपादयति । तेन ज्ञाने सति सर्वयज्ञा ज्ञानयज्ञा एव भवन्तीत्युक्तं भवति । सर्वयज्ञनिष्ठत्वेन हि ज्ञानस्य ज्ञानयज्ञत्वं मोक्षफलम् । ज्ञानं न तु पृथक् । यस्माद्यथोक्ते ज्ञाने द्रव्ययज्ञादिविभागेन सर्वं समस्तं कर्माखिलं स्वगतविशेषापेक्षया समग्रं, ज्ञाने परिसमाप्यते प्रविलयं गच्छति । कृतमपि दग्धबीजवत्स्वफलप्रसवसामर्थ्यं न भजते ॥

एवंविधं च,

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

तज्ज्ञानं तुभ्यं ज्ञानिनः परमात्मसमापत्तिलक्षणनिरुत्तरफलप्राप्त्युपायभूतबोधयुक्ता गुरव उपदेक्ष्यन्ति प्रतिपादयिष्यन्ति । किं शास्त्रमात्रज्ञानेनेत्याह— तत्त्वदर्शिनः । यथाप्रतिपादितस्य परमार्थस्य स्वसंवेदनेन द्रष्टारः । केन हेतुनोपदेक्ष्यन्ति । प्रणिपातेन, पादप्रणामपूर्वेण सर्वात्मना प्रह्वत्वेन । तथा परिप्रश्नेन, परितः समन्तात्सर्वसंशयच्छेदार्थं यः प्रश्नः पुनः पुनः प्रार्थनापूर्वमनुयोगस्तेन । तथा सेवयाऽऽसन्नस्वसमर्पणात् । सर्वत्र निर्विकल्पया शुश्रूषया निर्व्याजभक्तिश्रद्धाराधिता गुरव एवंविधं महोदयमर्थमुपदिशन्तीति विद्धि, निश्चयेन जानीहि ॥

कीदृशं तज्ज्ञानमित्याह,

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषाणि द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

[ शां. पा. १–अशेषेण. ]

यज्ज्ञात्वा सम्यक्प्रतिपद्य पुनस्तत्प्रतिपत्तेरुत्तरकालमेवमवश्यानुष्ठेये वैरिवधलक्षणे स्वधर्म एवाधर्मप्रतिपत्तिरूपेण प्रकारेण मोहविपर्ययलक्षणमज्ञानं न प्राप्स्यसि । येन च ज्ञानेन कारणभूतेन सर्वभूतानि चराचरप्राणभृतो मयि परमकारणे तथाऽऽत्मनि स्थितानि द्रक्ष्यसि ज्ञास्यसि । किमुक्तं भवति । परमकारणाभिन्नात्स्वात्मनः सर्वभूतानां वास्तवमभेदमनेन ज्ञानेन साक्षात्करिष्यसि । अत्र स्वयं ज्ञानमुपदिशन्नपि ज्ञानिनस्ते ज्ञानमुपदेक्ष्यन्तीति भगवान्यदाह तन्न साक्षा-

---

१ राना १·२–‘च’ नास्ति. २ राशा १–द्रष्टासि (?)

तत्त्वानुभवलक्षणे विशेषज्ञानेऽर्जुनस्याभिकाङ्क्षोत्पादनं प्रयोजनम् । यतः क्रमेणोत्पन्नविशेषज्ञानजिज्ञासातिशयं भगवांस्तत्त्वमनुभावयिष्यत्येव ॥

युद्धलक्षणे स्वधर्मेऽनुष्ठीयमाने कुत एव ते पापसंबन्धः । यतोऽस्य ज्ञानस्यायं प्रभावः ।

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

अपि चेदसि । यद्यपि त्वं सर्वेभ्यः पापेभ्यः समस्तेभ्यः पातकेभ्यो ज्ञातिगुर्वादिवधादिदुष्कृतकारित्वात्पापकृत्तमः । तदपेक्षयाऽतिशयेन दुष्टकर्मकारी । तथाऽप्यस्य ज्ञात्यादिवधलक्षणस्य कर्मणः स्वधर्मत्वे सति वृजिनं तज्जं पापं समस्तं सागरमिव दुर्लङ्घ्यं यथोक्तज्ञानलक्षणेन प्लवेन यानपात्रेण लङ्घयिष्यसि ॥

यतः,

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

यथा काष्ठानि दीप्ततरोऽनलो भूतिमात्रशेषाणि करोति, तथा तेनैव प्रकारेण सर्वाणि निःशेषाणि कर्माणि पुनः फलदानसामर्थ्यक्षपणाज्ज्ञानं निर्दहति । अनेन स्वधर्मत्वेनावस्थितानां परमघोराणामपि सर्वेषां कर्मणां नैष्फल्यापादनसमर्थं ज्ञानमेतदित्युक्तम् । न तु शास्त्राविहितानां, यथोक्तं प्राक् ' श्रेयान्स्वधर्मो विगुणः ' इत्यादिना ॥

किंच, अघोरस्यापि कर्मणो मोक्षलक्षणोत्तमफलप्राप्तिफलपर्यवसायेनानेन,

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति ॥ ३८ ॥**

यस्माज्ज्ञानेन तुल्यं पावनमन्यद्वस्तु जगति न संभवति । तच्चास्य पावनत्वं योगसंसिद्धो ज्ञानसंस्कृतेन यथोक्तेन कर्मसमाधिना सम्यक्सिद्धः प्राप्तपरात्मसमापत्तिलक्षणप्रकृष्टफलः सन्योगी कालेनाभ्यासतीव्रत्वानुसारिणा शीघ्रेणाचिरेण वा स्वयमेवाऽऽत्मनैव लभते स्वी कुरुते ॥

तस्य चैवंप्रभावस्य ज्ञानस्य लाभक्रममाह,

**श्रद्धावाल्ँलभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

---

१ राशा २ ना १·२–°यिष्यतीव. २ राना १·२–°र्दह्यति.

श्रद्धाऽऽप्तोपदिष्टेऽर्थे निर्विकल्पफलसंभावना, यद्वशात्प्राप्तफलस्यैव चेतसः संप्रसाद उत्पद्यते । सा च परमेश्वरप्रसादसुरपादपमञ्जर्या भक्त्या सहैवोत्पद्यते । तद्वांस्तया युक्तः संशयात्मकघोरविघ्नविनाशात्तत्परो नान्यचेतास्तथा संयतेन्द्रियः, प्राक्प्रतिपादितेन क्रमेण वशीकृतसकलाक्षवर्गः, परमं पावनं ज्ञानमभियुक्तः कुतश्चित्परमेश्वरेच्छाप्रेरितात्साक्षात्कृतपरमार्थादवाप्नोति । तच्च प्राप्य नित्याभ्यासपरिशीलनात्सुदृढप्रतिपत्त्या स्वीकृत्याचिरेणाल्पीयसैव कालेन परां निरुत्तरां शान्तिं सकलविप्लवविनाशनिश्चलं शमं स्वात्मोपलब्धिजनितां निर्वृतिमधिगच्छति प्राप्नोति ॥

एतद्गुणविहीनस्तु,

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

अज्ञो ज्ञानरहितो नश्यति, परापरफलप्राप्त्यभावात्संसार एव निमज्जति । कीदृशः स विनश्यति । अश्रद्दधानो यः परमेश्वरानुग्रहादिना न किंचिच्छ्रद्दधाति संभावयति । यतः श्रद्धाविरहात्संशयात्मा सर्वत्र निश्चयप्रतिपत्त्यभावात्संदेहमयबुद्धिः । अतश्च तथाविधस्य सर्वत्र संदिग्धबुद्धेर्नायं दृष्ट एव लोकोऽस्ति, न च परः स्वर्गापवर्गलक्षणोऽदृष्टः । ततश्च सुखमपि तस्य नास्ति । संशयितस्य हि वैद्यादिनाऽऽप्तेनोक्तं व्याध्यादिप्रतीकारं हेतौ भेषजादौ संदिह्यमानमतेर्व्याध्यादिनाशाभावादयमेव लोको नास्ति कुतः परः । सुखं वा लोकद्वयोपभोग्यमिष्टफलं भविष्यति ॥

यतः पुनरेतद्व्यतिरिक्तलक्षणस्तत्र,

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

योगेन यथोक्तेन कर्मसमाधिना संन्यस्तानि, अनित्यसुखात्मकफलाभिसंधिविरहात्त्यक्तानि क्रियमाणान्येव तिरस्कृतानि कर्माणि येन, तादृशं तथा ज्ञानेन सदसत्पदार्थनिश्चयप्रतिपत्तिरूपेण यथोक्तेन बोधेन संछिन्नो निकृत्तमूलः संशयः संदेहो येन तं तादृशम् । अत एव सत्यात्मप्रतिपत्तिवशादात्मवन्तं न कर्माणि शुभाशुभानि निबध्नन्ति सुखदुःखफलदानेन स्वतन्त्री कुर्वन्ति ।

यत एवम् ,

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।**
**छित्त्वैवं[2] संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

**॥ इति श्रीभगवद्गीतासूपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥**

[ १-( राना १·२ आत्मना. ) शां. पा. २-छित्त्वैनं. ]

तस्मात्प्रबन्धप्रतिपादितात्कारणाद्योगं शास्त्रविहितेषु कर्मसु यथोक्तज्ञानसंस्कृतेषु समाधिं यथोक्तमातिष्ठ समाचर । अत्रोत्तिष्ठ प्रोद्युक्तो भव । किं कृत्वा, एवं सर्वदोषैकहेतुं संशयं यथोक्तेन ज्ञानखड्गेन च्छित्त्वा मूलादेव निपात्य । कीदृशं संशयं, हृत्स्थं हृदयगतमज्ञानसंभूतं मोहप्रभवमनेन हृदयगतेन मोहप्रभवत्वेन चादूरवर्तित्वमसारमूलत्वं च सुच्छेदत्वप्रतिपादनार्थमेतदुक्तमित्योम् ।

कल्याणैकनिकेतनस्य जगतां घोराघविध्वंसिनो
धर्मस्यास्य सुरापगाम्भस इव ब्रह्मात्मकस्योद्भवम् ।
आख्यायाऽऽत्मन एव यत्र भगवान्पार्थाय मायातिगं
स्वं माहात्म्यमसूचयत्स विवृतोऽध्यायश्चतुर्थः क्रमात् ॥

श्रीमद्राजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि
भगवद्गीताविवरणे चतुर्थोऽध्यायः ॥ ४ ॥

## ॥ पञ्चमोऽध्यायः ॥

अथ द्वितीयाध्यायपरिसमाप्तौ बुद्धिप्रशंसावाक्यानि प्राक्च कर्मयोगवचनानि श्रुत्वा तेषां च परस्परविरुद्धत्वं मन्यमानेनार्जुनेन ' ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ' इत्यादिना प्रश्नो यः कृतोऽभूत्, स भगवता यद्यपि निर्णीत एव तृतीये, तथाऽपि चतुर्थाध्यायपरिसमाप्तौ ' योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ' इत्यत्र योगसंन्यासशब्दौ श्रुत्वा संन्यासं त्यागं मन्यमानः पुनरुत्पन्नसंशयः

**अर्जुन उवाच ।**

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यः श्रेयानेतयोरेकस्तन्मे ब्रूहि विनिश्चितम् ॥ १ ॥**

[ शां. पा. १-यच्छ्रेय एतयोरेकं तन्मे. २-सुनि°. ]

---

१ राशा २. ना १-सर्वातिगं. २ राना २-' च ' नास्ति.

हे कृष्ण कर्मणां त्यागं प्रशंससि स्तौषि । पुनश्च तेषामेव योगमनुष्ठानेन स्वीकारं स्तौषि । तदेतयोर्विरुद्धयोः कर्मत्यागस्वीकारयोः संन्यासयोगशब्देनोक्तयोर्यौगपद्येनानुष्ठानं तावन्न संभवति । अतो द्वयोर्मध्यादेकं, संन्यासो वा योगो वा य एव श्रेयान्प्रशस्यतरस्तन्मे निःसंदेहतया ब्रूहि ॥

अथ शब्दविशेषमात्रजनितं संशयमर्जुनस्य परिहर्तुं

श्रीभगवानुवाच ।

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

सत्यं द्वावप्येतौ कर्मणां संन्यासयोगौ त्यागस्वीकारौ भिन्नानुष्ठातृपुरुषानुष्ठीयमानापवर्गलक्षणाभ्युदयसंपादकौ भवतः । यतः केवलज्ञानवादिनः सर्वात्मना कर्मणां त्यागेनापवर्गमिच्छन्ति । समुच्चयवादिनः कर्मणामत्यागेनानुष्ठानेन । द्वयोरपि फलश्रुतिरस्ति । किंतु तयोः संन्यासयोगयोर्मध्यात्संन्यासात्त्यागात्, तमपेक्ष्य कर्मयोगो विहितकर्माचरणं विशिष्यते, उक्तवक्ष्यमाणहेतुपर्यालोचनया प्रकृष्यते ॥

यथा विशिष्यते तथाऽऽह ।

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वंद्वो हि महाबाहो सुखं बन्धाद्विमुच्यते ॥ ३ ॥**

समुच्चयानुष्ठाता कुर्वन्नपि कर्माणि नित्यं संन्यासी सदा त्यक्तकर्मा बोद्धव्यः । कोऽसौ यो न किंचिद्द्वेष्टि, न किंचित्काङ्क्षति । कस्मात्स नित्यसंन्यासीत्याह । यस्मान्निर्द्वंद्वो द्वेषाकाङ्क्षाशब्दप्रतिपादिताद् द्वेषरागलक्षणाद् द्वंद्वान्निष्क्रान्तः कर्माण्यपि कुर्वन् सुखमक्लेशं बन्धात्संसारलक्षणाद् दुर्गान्मुच्यते, स्वयमेव मोक्षमाप्नोति । तदिदमत्र तात्पर्यम् । संसारकाराकुहरस्थानां रागद्वेषावेव दुरवच्छेदौ बन्धनपाशौ । तावेव यथोक्तात्मज्ञानासिना येन छिन्नौ तस्य क्रियमाणान्यपि कर्माण्यकृतकल्पानीत्यसौ नित्यसंन्यासीत्युक्तः । यस्तु परिहरन्नपि कर्माणि रागद्वेषौ छेत्तुं न प्रभवति, स संन्यस्तकर्माऽपि कर्मकृदेव । तत्कृतस्य तत्फलस्य बन्धस्याविरामात् । यथा च सर्वकर्मणां परित्यागाननुपपत्तिः, केषांचन वा त्यागे बन्धकारणभूतरागद्वेषानुपरमस्तथा प्रागेव भूयो भूयः प्रतिपादितं प्रतिपादयिष्यते च ॥

इत्थं च समुचिते ज्ञानकर्मणी प्राक्सांख्ययोगशब्दाभ्यां ये प्रतिपादिते ते एव संन्यासयोगशब्दाभ्यामुक्ते । ततः किं ते संशयकारणमित्याह ।

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

सांख्यं यथाप्रतिपादितात्मतत्त्वज्ञानम् । योगस्तदविरहविधानविहितबन्धसामर्थ्यानां विहितानां कर्मणामनुष्ठानम् । तौ नित्यमन्योन्यावियोगप्रतिलभ्यसंपूर्णस्वरूपत्वादभिन्नौ । बालास्तत्त्वज्ञानव्यवहारव्युत्पत्तिरहितत्वाद्बालिशाः पृथग् भिन्नपुरुषानुष्ठेयतया विविक्तावस्थानौ प्रवदन्ति व्याचक्षते । न तु पण्डिताः परमार्थविदः । यत एकमपि सांख्यं योगं वा सम्यग्यथाप्रतिपादितेन रूपेणाऽऽस्थितः समाश्रितः पुमान् उभयोर्द्वयोरपि सांख्ययोगयोः फलं कैवल्यलक्षणं विन्दति लभते । किमुक्तं भवति । यथोक्तसंख्यापरसंज्ञविज्ञानसमाश्रयणं प्रबन्धप्रतिपादितोपपत्त्या यथाविहितकर्मानुष्ठानरूपं योगमन्तरेण यथोक्तफलपर्यवसायि न भवत्येव । योगोऽपि सांख्यरहितस्तथैवेति ॥

तदेव द्रढयितुमाह,

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

[ शां. पा. १—गैरपि ग°. ]

सांख्येन ज्ञानेन संबद्धाः पुरुषा लक्षणया सांख्या इत्युक्ताः । तद्वद्योगसंबन्धाद्योगः । तैरेवंविधैः सांख्यैर्यथोक्तज्ञानवद्भिर्यत्स्थानं विश्रान्तिपदं प्राप्यते, निरुत्तरोपेयतया समाश्रीयते, तदेव योगैरनुगम्यते पश्चात्कालतया स्वी क्रियते । ज्ञानपूर्वत्वादनुष्ठानस्य यत्सांख्यैः प्राप्यते तद्योगैरनुगम्यत इत्युक्तम् । न पुनः कैवल्यलक्षणैकफलसंपादने तुल्यहेतुत्वात्तयोर्भेदोऽस्ति । ततः सांख्यं योगं चैकमेव यः पश्यति जानाति स एव पश्यति ॥

तस्यैव सज्ज्ञानात्मिका दर्शनशक्तिः, न तु यो ज्ञानेन केवलेनैव मोक्षः, कर्मयोगेण सर्वेणापि बन्ध इति पश्यति । तदाह,

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥**

अयोगतोऽयोगाद्यथोक्तनीत्या कर्मानुष्ठानसमाधानादिना संन्यासः पुनर्बन्धदुः-

बन्धाभावफलः कर्मत्यागः प्राप्तुमासादयितुं दुःखं कृच्छ्रं नाप्यत इत्यर्थः । यस्माद्योगयुक्तो योगे[1] कर्मसमाधौ युक्तो यथोक्तज्ञानैकतानतया नित्यसंबन्धः सन्मुनिर्भूत्वा शीघ्रमेव ब्रह्म परमात्मलक्षणं परं तत्त्वमधिगच्छति, आत्मतया समासादयति । किमुक्तं भवति । ज्ञाननिष्ठत्वेन स्वकर्मानुष्ठानं मुनित्वकारणम् । ब्रह्मप्राप्तिलक्षणस्य फलस्य छलाविसंवाद्युपायभूतत्वात् । न तु केवलं ज्ञानमात्रं सर्वात्मना कर्मत्यागानुपपत्तेः, तस्यानुपायत्वात् ॥

कस्माद्योगयुक्तस्यैव ब्रह्म सुप्रापमित्याह ।

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

यतो योगयुक्तः कुर्वन्नपि कर्माणि न लिप्यते ततो न चिरेण ब्रह्माधिगच्छतीति संबन्धः । तदेतद्व्याख्यायते । योगे ज्ञानकर्मसमुच्चयानुष्ठानसमाधौ युक्तस्तत्परतया नित्यसमाहितो योगी संसारिपुरुषाविशेषेण समाचरन्नपि स्वकर्म बन्धहेतुना तत्फलेन सुखाद्यात्मना न लिप्यते, न मलिनात्मतां नीयते । यतोऽसौ विशुद्धात्मा । अहंप्रत्ययैकलक्षणोऽयं निसर्गनिर्मलचिन्मात्रस्वरूप आत्मा । तस्यैतावत्यशुद्धिर्यदनाद्यविद्यावशाद्वेद्यैकस्वरूपे जात्यादिविविधावच्छेदभाजि नियते देहमात्रे स्वात्मप्रतिपत्तिः । तदभावमात्रमेवास्य विशुद्धिः । इत्थं विशुद्ध आत्मा यस्य स तथाविधः सत्यस्वभावप्रतिष्ठिताहंभावतया प्राप्तस्वाभाविकप्रसाद इत्यर्थः । ततश्च विजितात्मा जितेन्द्रियश्च । अत्राऽऽत्मेन्द्रियशब्दाभ्यां ज्ञानक्रियाप्रपञ्चो विवक्षितः। स उभयात्माऽपि विजितः स्वशक्तित्वेन स्वेच्छाविधेयप्रवृत्तिनिवृत्तित्वाद्वशीकृतो येन स पदद्वयेन तथोक्तः । एवं हि योगयुक्तः कर्मयोगी शुद्धात्मा सत्क्रियासु प्रवर्तमानोऽपि मन्यते । येयमकृत्रिमप्रकाशात्मकस्वभावपरामर्शैकरूपा ममाव्यतिरिक्ता शक्तिः, सा एव स्वेच्छानिर्मितज्ञेयकार्यस्वभावीविषयप्रकाशनाय प्रसरन्ती ज्ञानक्रियाभेदेन द्विप्रकारतयाऽवभासते । तस्याश्च ज्ञानरूपो यो भेदः सोऽन्तःकरणवर्गः, यः क्रियारूप स बहिष्करणवर्ग इति । सूर्यस्य यथा प्रभारूपा शक्तिः किरणचक्रात्मनाऽवभासते तथैवेयं मम शक्तिरेवान्तःकरणबाहिष्करणभावेन विजृम्भते । न च प्रकाशमानत्वेन संबद्धैराभ्यन्तरबाह्यरूपैर्विषयैरेषा कलुषीकर्तुं पार्यते । न हि दिनकरकिरणाः प्रकाश्यैर्नीलपीतादिभिर्भावभेदैः स्वभासेनोपरञ्जयितुं शक्यन्ते, स्वतन्त्रा एव तान्प्रकाशयन्ति । तथैवैतेऽन्तःकरणबहिष्करणरूपाः शक्ति-

---

१ राना २–योगी. २ राना १·२–'कर्म' नास्ति. ३ राना १–स्वाभासेन. ४ राना १·२–तथैव ते.

भेदा मम इत्येवं विजितात्मा जितेन्द्रियश्च । न त्वेवमपि विशुद्धात्मतादिव्याख्यातविशेषणविशिष्टत्वं नोपपद्यते । कर्मयोगिणो यतो विषये प्रवृत्तिस्तेभ्यश्च निवृत्तिरुपादेयत्वं हेयत्वं च विना न संभवति । तत्संभवे च रागद्वेषकलङ्को दुर्निवारः । तस्मिन्सति कुतो विशुद्धात्मत्वादन्यत्र परिहारार्थं हेतुगर्भं विशेषणमाह, सर्वभूतात्मभूतात्मेति । सर्वाणि भूतान्यशेषाणि स्थावरजङ्गमा विषयभावमापन्नाः पदार्थास्तेषामात्मभूतः स्वरूपत्वं प्राप्त आत्मा स्वभावो यस्य स तथाविधः । किमत्र तात्पर्यम् । कर्मयोगी किल येषु विषयेष्वन्तर्बाहिष्करणवृत्तिद्वारेण प्रवृत्तिनिवृत्ती भजते, तेषु तस्य यथोक्तज्ञाननिष्णातप्रज्ञत्वादेवंविधासु स्थिरा प्रतिपत्तिः । यथा य इमे चेतनाचेतनरूपाः पदार्था विषयभावमापन्नास्ते संवेद्यमानताव्यतिरेकेण न तत्तत्स्वरूपं प्रतिलभन्ते[2] । ततः स्वसंविदेव तेन तेन रूपेणावभासते । तत्त्वतो नैतद्वस्त्वन्तरं किंचिदिति, परमेश्वरप्रसादापनीतमायातिमिरत्वादेकस्मिन्परमार्थसत्यात्मतत्त्वे निर्वृते, निवृत्तद्वित्वावभासाविभ्रमया सम्यग्दृशा सर्वमन्तःकरणबहिष्करणविषयात्मकं पदार्थजातं परमात्मस्वरूपादत्यन्तमभिन्नतया विभावयन्योगयुक्तः सहजासु शास्त्रविहितासु क्रियासु प्रवर्तमानो न शुद्धात्मत्वादिविशेषणव्यभिचारं भजते ॥

तमेतं कर्मयोगिनः समाधिमासन्नप्राणजयप्रत्याहाराद्यभ्यासपरिकर्मनिरपेक्षं यथोपस्थितविषयसंस्पर्शेऽप्यविलुप्तपरवैराग्यं सर्वदा सर्वथा सर्वस्य सुलभपरमात्मप्रतिष्ठालाभलक्षणनिरतिशयरूपं[3] फलं वितत्य प्रतिपादयितुमाह ।

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

अतोऽसौ युक्तो व्याख्यातस्वरूपः कर्मयोगसमाहितः कुर्वन्नपि न लिप्यते । यतो नैव किंचित्करोमीति मन्यते । सर्वासु क्रियासु लोकवद्वर्तमानोऽपि नैष्कर्म्यफलमेव प्रतिपद्यत इति संबन्धः । किं कुर्वन्नेवं मन्यते । पश्यन्नित्यादिना सर्वेन्द्रियवृत्तीः प्राणवृत्तीश्च प्रवर्तयन्नपि, इति धारयन्नेवंविधामस्य कर्मयोगस्य यथोक्तफलप्राप्त्युपायभूतां धारणामुद्वहन् । कथं धारयन् । दर्शनादिक्रियासु

---

१ राशा १·२–अशेषा. २ राशा १–°लम्बन्ते; शा २ °लभन्ते. ३ राना १·२–'रूपं' नास्ति.

प्रवृत्तान्यपीन्द्रियाणि प्राणाश्चेन्द्रियार्थेषु स्वेषु स्वेषु विषयेषु वर्तन्ते, संबन्धमात्रं तैरनुभवन्ति । न तु तेषु स्वविषयसंबद्धेषु नित्यनिरतिशयचित्प्रकाशभावस्य मम लोकवद्रागादिकलङ्कस्पर्शोऽन्तः संभवतीति । पश्यन्नित्यादिना निमिषन्नित्यन्तेन ग्रन्थेन सर्वेन्द्रियप्राणवृत्तयः संगृहीताः। तथा च बुद्धीन्द्रियवृत्तयः श्रवणस्पर्शनदर्शनरसनघ्राणरूपाः क्रममनपेक्ष्य पश्यन्नित्यादिनाऽश्नन्नित्यन्तेन पदपञ्चकेन प्रतिपादिताः । एवमेव वचनग्रहणगमनविसर्गप्रजननरूपाः कर्मेन्द्रियवृत्तयः प्रलपन्गृह्णन्[1]गच्छन्विसृजन्नित्यादिपदचतुष्टयेन प्रतिपादिताः । यतो विसृजन्निति पदेन विसर्गप्रजननरूपे द्वे वृत्ती प्रतिपादिते[2] । स्वपन्नित्यनेन मनोवृत्तिः प्रतिपादिता । स्वापावस्थायां हि मन एव वृत्तिमनुभवति नेन्द्रियाणि । उन्मिषन्निमिषन्निति पदद्वयेन बुद्धिवृत्तिः प्रतिपादिता । निश्चयात्मिका हि बुद्धिर्वृत्तिरिति । सा स्[3]वभावविषयत्वेन भवन्त्युन्मेषशब्देनोक्ता, अभावविषयत्वेन भवन्ती निमेषशब्देन। भावाभावौ हि बुद्धिवृत्तिरेव निश्चिनुते । अहंकाररूपा तु वृत्तिः पश्यञ्शृण्वन्निति कर्मतया व्यपदिष्टे पुरुष एव वर्तते । इत्येता अन्तर्बहिष्करणवृत्तयः । श्वसन्नित्यनेन प्राणवृत्तिः प्रतिपादिता । प्राणधारणमेव हि श्वसनमिति । तदिदमस्य वाक्यस्य तात्पर्यम् । यस्मिन्सर्वमिति व्याख्यातस्वरूपस्य परस्य तत्त्वस्याऽऽत्मन एव परमेश्वरस्य तादृक्स्वभावपराम[4]र्शमात्रात्मिका या शक्तिरव्यतिरिक्ता । सैव तदिच्छावभासितज्ञेयकार्यात्मकजगत्क्रीडनकविषयत्वेन प्रसरन्ती तन्मायाजनितविपर्ययदर्शनानां सांसारिकपुरुषाणां संग्रहेण ज्ञानक्रियारूपा अप्यन्तर्बहिष्करणप्रवृ[5]त्तिभेदेन चतुर्दशमार्गप्रसृतत्वेनावभासमाना संसारबन्धहेतुत्वेन पर्यवस्यति । परमेश्वरानुग्रहादेव तून्मिषितपरिमृष्टद्वैतकलङ्कनिर्मलनिजज्ञानचक्षुषां सर्वव्यवहारव्यापृतानामपि यथोक्तस्वभावमात्रपरामर्शैकरूपतया यथोक्तकर्मयोगिनामवभासमाना परमात्मसमापत्तिलक्षणा मोक्षफलप्राप्त्यर्थमेव कल्पत इत्यतो युक्तं नैव किंचित्करोमीति मन्यत इत्याद्युक्तम् ॥

इदानीमेतदेव प्रकटयितुमाह ।

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्माणि परमात्मनि सर्वाणि क्रियमाणानि कर्माण्याधाय तच्छक्तित्वेन विनि-

---

१ राना १·२–'गृह्णन्' नास्ति. २ राशा १ ना १·२–°पाद्यते (!)–३ राना १·२–स्वभाव° (!). ४ राशा २–°मर्ष°. ५ राशा १–°प्राणवृत्ति°.

वेश्यात एव सङ्गस्वरूपव्यतिरिक्तत्वेनावभासमानेषु विषयेषु मग्नचित्तत्वं लौकिकं त्यक्त्वा यथोक्तया ज्ञानदृशा परमेश्वरभावानुप्रविष्टो यः करोति, सर्वाः क्रियाः समाचरति, स लौकिकवत्पापेन कर्मफलरूपेण सुखाद्यात्मना न लिप्यते न कलुषी क्रियते । कथम् ? अम्भसा सलिलेन निर्व्यवधानतया सुसंश्लिष्टमपि कमलदलमिव ॥

यत एवमतः,

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मसिद्धये ॥ ११ ॥**

[ शां. पा. १–°शुद्धये. ]

कायग्रहणेन कर्मेन्द्रियाणि, मनोबुद्धिग्रहणेनान्तःकरणम् । इन्द्रियग्रहणेन बुद्धीन्द्रियाण्यत्र गृह्यन्ते । एतैः केवलैस्तद्विषयादहंकाराद्यपरिग्रहाद्विशुद्धैः पृथग्भूतैर्वा कर्म यथास्वं व्यापारं चोदनया[1] शरीराद्यव्यभिचारितया च दुस्त्यजं योगिनः कर्मयोगसमाहिताः कुर्वन्त्यनुतिष्ठन्त्येव । किंतु यथोक्तस्य सत्यस्याऽऽत्मनः सिद्धयेऽहंप्रतीतिनिष्पत्तये[2] सङ्गं त्यक्त्वा कुर्वन्ति । किमुक्तं भवति । सङ्गत्याग एव संन्यासः, न कर्मत्यागः ॥

स च सङ्गत्यागः कर्मफलत्यागात्प्रबन्धप्रतिपादिताद्भवतीत्याह ।

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

ज्ञाननिष्ठतया कर्मणि युक्तः सन्ननभिसंधानेन कर्मफलं त्यक्त्वा, नैष्ठिकीं, निष्ठायां परस्यां काष्ठायां स्थितां शान्तिं द्वैतप्रत्ययलक्षणक्षोभरहितसत्यात्मस्वरूपविश्रामात्मकं प्रशमं, आप्नोति समधिगच्छति । यस्तु निसर्गदुस्त्यजे कर्मणि सर्वदा प्रवृत्तः सन्युक्तो न भवति, यथोक्तेन क्रमेण समाहितो न भवति, सोऽवश्यमेव फलसाङ्गित्वाद्बध्यते संसारे नियम्यते ॥

अथैवंविधयोः कर्मसंन्यासयोरध्यायेऽस्मिन्प्रबन्धप्रतिपादितयोरुपसंहारावसरे स्वरूपानुवादपूर्वं तदनुष्ठातुर्नैष्ठिकीं फलसिद्धिं स्फुटीकर्तुमाह ।

**सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

---

१ राशा २–शास्त्रचोद°. २ राशा १·२–अहंतया.

इह मनःशब्देन बुद्धिरेव विवक्षिता। तच्च द्विविधं मनो लौकिकं योगिसंबन्धि च। तत्राचिन्त्येश्वरमायाशक्तिवशादुद्भूतद्वैतप्रत्ययतिमिरमयं लौकिकम्। येन लोक एकमेव परमार्थं सत्तत्त्वं नानात्वेन मन्यते। योगिसंबन्धि तु येन भगवदनुग्रहाविर्भावितविद्याशक्तिविमलीकृतेन योगिनः सर्वभावान्यथोक्तपरमात्मैकरूपतया मन्यन्ते। तदेवंविधमुभयात्मकत्वं मनसो मुनिनैवानुगीतासु भगवद्वचसैवार्जुनबोधायैवेति वृत्तिविरचनक्रमेण प्रदर्शितम्। यदाह,

"उभे वाङ्मनसी गत्वा भूत्वाऽऽत्मानमपृच्छताम्।
आवयोः श्रेष्ठमाचक्ष्व च्छिन्धि नौ संशयं विभो।
मन इत्येव भगवांस्तदा प्राह सरस्वतीम्।
अहं कामदुघा तुभ्यमिति तं प्राह वागथ"॥

स तामाह, "स्थावरं जङ्गमं चैव विद्ध्येते मनसी मम।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव"॥

इत्येवंविधेन सुस्थिरपरमात्मस्वरूपैकनिष्ठत्वात्। स्थिरतया स्थावरशब्दोक्तेन परमेश्वराभ्यासवर्तिना मनसाऽन्तःकरणेन सर्वकर्माणि, चित्तवाक्कायनिर्वर्त्याः सर्वाः क्रियाः शास्त्रचोदिताः शरीराव्यभिचारिणीश्च संन्यस्य बन्धहेतुना फलाभिसंधित्यागाद् ब्रह्मण्येव निक्षिप्य तेनैव क्रमेण वशी जितात्मा स्वीकृतस्वभावः सत्कर्मयोगी सुखमास्ते जोषमवतिष्ठते। निसर्गनिवृत्तानिखिलक्लेशसंपर्कनिरुत्तरानन्दमये स्वात्मनि विश्राम्यतीत्यर्थः। कीदृशः सन्नास्ते। अस्मिन्नेव पुरे। देह एवाधिष्ठानसामान्याद् गृहत्वेन निरूप्यते। अत एव कीदृशे? नवद्वारे चक्षुःश्रोत्रघ्राणच्छिद्राणि षड् द्वाराणि दर्शनश्रवणघ्राणक्रियाप्रवृत्तिवर्त्मानि, तथा मुखपायूपस्थानि त्रीणि रसनविसर्गक्रियाप्रवृत्तिवर्त्मानि, इति नवद्वाराणि, यस्मिन् तत्राद्वयचिन्मात्रपरमात्मस्वभावविश्रान्तत्वात्सर्वाः क्रियाः सर्वाणि स्वरूपमात्रत्वेन प्रतिपद्यमानो न कुर्वन् इतरशरीरिवत्कर्माभिमानमननुभवन्। केचित्किल प्रतिशरीरं भिन्नाञ् शरीरिणः स्वाभाविकेन प्रतिनियतेन कर्तृत्वेन युक्तान्मन्यन्ते। तथा न कारयन्नान्यान्प्रयोजयन्। अपरे हि केचन संनिधिमात्रेण जडायाः प्रकृतेः क्रियाप्रवृत्तौ प्रयोजकमात्मानं मन्यन्ते। अस्य तूभयथाऽपि कर्तृत्वं प्रतिषिध्यते। अयं हि परमात्मसमापन्नत्वान्न करोति न कारयति॥

अत एव परमात्मस्वरूपं स्मारयन्नाह।

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

यस्मादद्वयचिन्मात्रैकस्वभावप्रतिष्ठत्वात्प्रभुरीश्वरः परमात्मा वास्तवेन रूपेण लोकस्य तन्मायामहिमोद्भावितपरस्परभेदस्य जीववर्गस्य न कर्तृत्वं, तासु तासु क्रियासु प्रतिनियतासु प्रतिनियतफलास्वनुष्ठातृत्वं सृजति । नापि पुण्यपापलक्षणानि कर्माण्यसौ कस्यचित्सृजति । न च सुखाद्यात्मकैस्तत्फलैः संबन्धम् । अतस्तत्स्वरूपसमापन्नः कर्मयोगी तादृश एव भवतीति पूर्वश्लोकेन संगतिः । ननु यद्येवं यथोक्तस्वरूपमात्रनिष्ठत्वादीश्वरो न करोति न कारयति तत्कुतोऽयं जगद्व्यवहार इत्यत आह 'स्वभावस्तु प्रवर्तते' इति । स्वभावशब्देन प्रकृत्यपरपर्याया मायाशक्तिरेवाचिन्त्यस्वरूपोच्यते । सा प्रवर्तते, अनन्तभावभेदोद्भूतविचित्रजगद्गन्धर्वनगरावभासनाय प्रसरति । सा हि वास्तवसर्वभावाभेदाख्यातिमात्रजीविता प्राक्प्रतिपादितया नित्यया सर्वमिदमाभासयति । एवमवभासमानमप्येतत्तत्त्वज्ञानदृशा परामृश्यमानं यथोक्तपरमात्मस्वरूपान्न व्यतिरिच्यते । ततः परमेश्वरस्य प्रतिनियतकार्यकर्तृत्वादिर्न वास्तवो धर्मः ॥

तस्मान्मायाकृत एव बन्धमोक्षविभ्रमोऽयमिति प्रतिपादयितुमाह ।

**नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

विभुर्यथाप्रतिपादितस्वरूप ईश्वरो न कस्यचिज्जन्तोः परमार्थतः पापं बन्धकारणभूतं कल्मषमादत्तेऽपहरति येनासौ जन्तुस्तदपहरणादपवर्गलक्षणं श्रेयः प्राप्नोति । न च मोक्षकारणं सुकृतं कस्यचिदादत्ते येनासौ तदादानात्संसारबन्धलक्षणमश्रेयः प्राप्नोति । कस्तर्हि बन्धहेतुर्जन्तूनां मोक्षहेतुर्वेत्याह । अज्ञानेन पारमार्थिकपरमात्माभेदाप्रथनमात्रस्वरूपेण ज्ञानाभावेन मिथ्याज्ञानेन संतमसेनेव पदार्थस्वरूपं ज्ञानं यथाप्रतिपादिततत्त्वप्रधानात्मको बोध आवृतं संप्रति तिरस्कृतम् । तेन हेतुना सर्वप्राणिनो मुह्यन्ति, शरीरादावात्मप्रतिपत्तिग्रहणलक्षणविपर्ययज्ञानदृष्टयो बन्धमनुभवन्ति । येषां पुनस्तद्यथाप्रतिपादितमज्ञानं यथोक्तेनाऽऽत्मनो ज्ञेयस्य तत्त्वस्य ज्ञानेन नाशितं ध्वंसितं तेषां परमेश्वरानुग्रहाद्य-

थोक्तकर्मयोगसंन्यासानुष्ठानाधिकृतानां योगिनां तज्ज्ञानं परं प्रकृष्टमुपेयं परमात्मस्वरूपलक्षणं वस्तु प्रकाशयति प्रथयति । कथमादित्यवत् । यथाऽऽदित्यो भगवान्समयाभ्युदितः सन्दुर्निवारमपि सान्द्रमन्धकारं प्रभामात्रेण पर्यस्यन् दृश्यं वस्तु सर्वं निःसंशयतया प्रकटी करोति, तथैव ज्ञानमेतदीश्वरानुग्रहेच्छावसरोन्मिषितं सत्स्वरूपतिरोधानकारणमज्ञानं तिरस्करोतीत्युपमानार्थः ॥

तदेवंविधं यत्परवस्तुप्रकाशकमज्ञानप्रध्वंसकं च ज्ञानं तदभ्यासफलप्रतिपादनायाऽऽह ।

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धौतकल्मषाः ॥ १७ ॥**

[ शां. पा. १–°निर्धूत°.–इतः परं ' आडर ' पाठे, ' अभि. '–( मुद्रित ) पाठे च अधिकः श्लोकः–स्मरन्तोऽपि मुहुस्त्वेतन्स्पृशन्तोऽपि स्वकर्मणि । सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ॥ ]

बुद्धिर्नानाबोध्यवस्तुसाधनभूतं कारणं, प्राधान्यात्तया समस्तैः करणवर्ग उपलक्षितो बोद्धव्यः । आत्मशब्देन च[2] बोद्धा पुरुष उच्यते । इति तत्र यथोक्ते ज्ञान एव पर्यवसिता बुद्धिर्येषां ते । तदात्मानो यथोक्तज्ञाननिष्ठाहंप्रतीतय इति सकललोकव्यवहारनिबन्धनं बुद्ध्यात्मलक्षणं द्वयमद्वैतज्ञानमयं येषां ते तथाविधाः । तथा निष्ठाशब्देन [3]परमोपेयवस्तुसीमाऽत्रोच्यते । [4]तत्परो यत इति तज्ज्ञानं यथोक्तं निष्ठा येषां ते तन्निष्ठाः । परायणशब्देन च तत्प्राप्त्युपायो विवक्षितो येन तदेव परायणं येषां ते तत्परायणा इत्युपेयोपायलक्षणद्वयं योगिव्यवहारविषयं यथोक्तज्ञानात्मकमेवैषां त [5]एवंविधास्तत्त्वज्ञाननिबन्धनसकलसंसारापवर्गविषयपदार्थसार्थाः । अत एवैवंविधेन ज्ञानेन निर्धौतं निःशेषेण प्रक्षालितमज्ञानरूपं कल्मषं पापं येषां ते तथाविधा योगिनोऽपुनरावृत्तिं गच्छन्ति, अभूयःसंभवं मोक्षमाप्नुवन्तीत्यर्थः ॥

अथेदृशानां योगिनां सकललोकविलक्षणानां चित्तवृत्तिं प्रतिपादयितुमाह ।

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

[ शां. पा. १–इत उत्तरं शां. पाठे विद्यमानः ' इहैव तैर्जितः ' इत्यादि १९ तमः श्लोकः काश्मीरपाठे षष्ठाध्याये ९ श्लोकानन्तरं दृश्यते । ]

---

१ राशा १–नानाभूत°. २ राना १–' च ' नास्ति. ३ राना २–परमे परमो°. ४ राना १-२–तत्परमगम्यते यत इति (?). ५ राना १–तथाविधाः.

विद्या शास्त्रं, विनयस्तदर्थानुष्ठाने विनयो नियमविशेषस्ताभ्यां संपन्नः संबद्धो यो ब्राह्मणस्तस्मिंस्तथा गवादिषु तिर्यक्षु भयाहारमैथुनमात्रपर्यवसितसर्ववृत्तिषु, तथा श्वपाके मनुष्यभावेऽपि तिर्यक्प्राये, पण्डिता यथोक्ततत्त्वज्ञानप्रबुद्धाः समदर्शिनः। समं सामान्यमेकशेषविशेषणासंस्पृष्टस्वभावं चिन्मात्रं द्रष्टुं प्रतिपत्तुं शीलं येषां ते तथाविधाः। किमनेनोक्तं भवति। ये समुज्जृम्भितदिव्यज्ञानचक्षुषस्ते मायोपहतदृष्टिभिर्नानात्वेन परिदृश्यमानं समस्तं भावजातं ब्रह्मैकरूपतया नित्यमालोकयन्ति। न चैवं मन्तव्यं यथा ते ब्राह्मणादौ विहितं समाचारं श्वपचादिषु प्रयुञ्जते, श्वपचादिषु विहितं ब्राह्मणादिष्विति विकर्मणि स्थिताः सन्तः पारमेश्वरीं जगद्व्यवस्थां व्युत्थापयन्ति। ते हि यथास्थितमेव जगद्भावविस्तारं ब्रह्मात्मकं पश्यन्ति। न तु व्युत्थानमाचरन्तीति॥

तामेव समदर्शितां विवृणोति।

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः॥ १९॥**

यो ब्रह्मविदागमतो यथोक्तब्रह्मतत्त्ववेदी स्थिरबुद्धिः प्रबलैरपि विकल्पैरप्रकम्प्यमतिरत एवासंमूढो हेयोपादेयवस्तुनोऽसंदिग्धबुद्धिः संस्तस्मिन् शास्त्राधिगते ब्रह्मणि परमात्मनि स्थितः सततपरिशीलनाद्विश्रान्तः स प्रियाप्रियप्राप्त्या प्रहर्षोद्वेगौ विषमदर्शित्वपिशुनौ संसारिपुरुषोचितौ न भजते। ततो ब्राह्मणगवादिषु पण्डिताः समदर्शिन इत्युक्तम्॥

ईदृशे च ब्रह्मणि स्थितिः सर्वथा बाह्यविषयपरिहारेणैव भवतीति केवलज्ञानवादिनां पक्षः। स पूर्वोक्तोपपत्त्या न संभवति। कथंचिद्वा संभवन्नपि सच्छल इति शास्त्रविहितविषयनिष्ठतैव ब्रह्मणि स्थितिर्निर्विप्लवेति समुच्चयपक्षमेव निर्वाहयितुमाह।

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते॥ २०॥**

[ शां. पा. १-अक्षय( व्य )म्. ]

आत्मनि परस्मिंस्तत्त्वे स्वभावसिद्धं यत्सुखं नित्यानन्दलक्षणो धर्मस्तद्बाह्यस्प-

---

१ राना २-( प० लि० ) समूढो. २ राशा १-तत्त्वबुद्धिः.

र्शेष्विदंतावधार्येषु शब्दादिष्वविरुद्धेष्वसक्तात्मा सम्यग्ज्ञानवशादात्मैकनिष्ठत्वे सत्यनियमान्तःकरणो योगी विन्दत्युपलभते । स योगयुक्तात्मा योगे कर्मसमाधौ युक्तात्मा ज्ञाननिष्ठतया नित्यावहितान्तःकरणो योगी सुखमक्लेशेनाव्ययमविच्छिन्नं कृत्वा ब्रह्म परमकारणमश्नुते स्वात्मतया व्याप्नोति ॥

कथं बाह्यस्पर्शेष्वात्मवर्ति सुखं योगी विन्दतीति प्रतिपादयितुमाह ।

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २१ ॥**

हिशब्दो हेतौ । यस्माद्ये संस्पर्शजाः शब्दादिविषयसंपर्कजन्मानो भोगाः कामारते जन्मविनाशयुक्तत्वादनित्याः सन्तः प्राप्तेषु सत्सु वियोगजस्य दुःखस्याव्यभिचारादप्राप्तेषु च प्रार्थनात्मकदुःखस्याव्यभिचाराद् दुःखयोनय एव दुःखमेव ते जनयन्ति । ततस्तेषु भोगेषु बुधो ज्ञानवान्न रमते न प्रीतिमनुभवति । किमनेनोक्तं भवति । कर्मयोगी सत्यं संसारिपुरुषवदिन्द्रियैर्विषयान्भजते । न तु तज्जनितेन सुखेनासौ सुखितो भवति । स हि स्वाभाविकात्मवर्तिसुखमनुभवतीति ॥

बुधस्यैवंविधस्यैव योगित्वं च सुखित्वं च प्रतिपादयितुमाह ।

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स योगी स सुखी मतः ॥ २२ ॥**

[ शां. पा. १–स युक्तः स सुखी नरः. ]

य इहैवास्मिन् शरीरे तिष्ठंस्तदव्यभिचारविषयसंबन्धवशाद्रागद्वेषादिजं संदर्भमात्मैकनिष्ठतया सोढुमवधीरयितुं देहत्यागादर्वागेव शक्नोति प्रभवति । स योगी समाहितः, स च सुखी निरुत्तरानन्दलक्षणसमाधिफलवान् । यतस्तत्त्वविदोऽन्ये हि केवलज्ञानवादिनो विषयेभ्यः पलायमाना योगमभ्यस्यन्ति । तेषामन्तरप्रेप्सुषु तेष्वाततायिषु सत्स्विहैव देहे दुर्लभो योगस्तत्फलं चेति । यदि परं ते देहत्यागे तदवाप्स्यन्ति । यस्तु कर्मयोगी सत्स्वेव विषयेष्वविलुप्तात्मस्थितिः स जीवन्नेव मुक्त इति, स एव योगी च सुखीत्युक्तम् ॥

---

१ राशा १–°हितनिमग्नान्तः°. २ राशा १·२–‘ योगी ’ नास्ति.

अत एव तत्स्वरूपमाह ।

अन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।
स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २३ ॥

[ शां पा. १–योऽन्तः°. २–स योगी ब्रह्मनिर्वाणं. ]

सुखं तत्तत्क्रियाफलभूता निर्वृतिः । आरभ्यतेऽस्मिन्नित्यारामः सुखानुभवाधिकरणम् । ज्योतिस्तदुभयव्यक्तिहेतुः प्रकाशः । तत्त्रितयमप्यन्तरात्मन्येव यस्य स तादृशः सर्वत्र संवेद्यमाने वस्तुनि विगलितानात्मप्रत्ययोऽत एव ब्रह्मभूतो ब्रह्म परमात्मस्वरूपं प्राप्तः, परमं योगं निरुत्तरं समाधिमधिगच्छति प्राप्नोति ॥

यस्मात्,

लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २४ ॥

ये महात्मानश्छिन्नद्वैधास्त्रुटितद्वैतप्रत्ययात्मकसंसारबन्धशृङ्खला यतः क्षीणकल्मषा विनष्टाखिलाज्ञानमयमहापातका ऋषयः सम्यग्दर्शिनः, अत एव स्वरूपव्यतिरिक्तं वस्तुजातमपश्यन्तः सर्वभूतानामात्मन इव हितेऽनुकूले वस्तुनि रता अभिनिविष्टास्ते निर्वाणं तापत्रयेणासंस्पृष्टं प्रशान्तं ब्रह्म परं तत्त्वं लभन्ते प्राप्नुवन्ति । न तु ये व्यतिरिक्तत्वेन विषयान्मन्यमानास्तेभ्यः पलायन्ते । ते हि द्वैतबन्धादनिर्मुक्ता एव ॥

एतदेव विशिनष्टि,

कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥ २५ ॥

[ शां. पा. १–°वियुक्ता° ]

ये रागद्वेषादिदोषविरहितत्वेन यतचेतसो निगृहीतान्तःकरणाः । न तु विषयविमुक्तत्वेन तेषां विदितात्मनां विज्ञातपरमकारणस्वरूपाणां मुख्यलक्षणयुक्तानां यतीनां परमयोगिनां यथोक्तं निर्वाणं ब्रह्माभितः सांमुख्येन वर्तते ॥

ततो नैष्कर्म्ययोगिनः सकाशात्कर्मयोगिनो विशेषं प्रतिपादयितुमाह ।

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २६ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २७ ॥

य एवंविधो मुनिर्यतिर्मोक्षपरायणः, मोक्षं परमिति तत्प्राप्तिकामो न तु मुक्तः । हेयोपादेयवस्त्वालम्बनाचित्ततया रागद्वेषादिदोषावियोगात्[1] । यस्य त्विच्छाभयक्रोधाः पूर्वव्याख्याता दुर्वाराश्चित्तदोषाः सदा नित्यमेव निसर्गनिर्दोषस्वात्ममात्रप्रतिष्ठत्वाद्विशेषेण पुनरावृत्तिलक्षणेन गताः प्रध्वस्ताः स तादृशः कर्मयोगी मुक्त एव । यतोऽस्याऽऽत्मनः सामान्यसंविल्लक्षणस्वभावशुद्धा शक्तिर्यदा च[2] मायावशात्स्वरूपाविमर्शिनी सती नानादेहाद्यहंप्रत्ययनिरुद्धा हेयोपादेयवस्त्वनुसारिणी विषयित्वमनुभवति[3], तदा रागादिदोषोपरक्तं चित्तमिति सैवोच्यते । यदा तु तैर्दोषैर्विद्यावशाद्वियुज्यते तदा नित्यानन्तनिरुपमनैर्मल्यैकलक्षणं स्वरूपं प्रतिपद्यमाना संविन्मात्ररूपैवाऽवशिष्यते । यदुक्तम् ।

"चित्तमेव हि संसारो[4] रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त[5] इति कथ्यते ॥"

तदेवं सत्स्वेव विषयेषु रागादिदोषोन्मेषशून्यत्वात्परमात्मसमापन्नः कर्मयोगी जीवन्नेव मुक्तः । यस्त्वेतद्व्यतिरिक्तलक्षण एवंविधो योगी परं मोक्षप्रवण एव न तु मुक्तः । कीदृशः । यतेन्द्रियमनोबुद्धिः, यतानि गृहीतानीन्द्रियाणि करणानि, मनश्चित्तं संकल्पात्मकं, बुद्धिरध्यवसायात्मिका, येन स तादृशः । किं कृत्वैवंविधः । बाह्यान्[6] ग्राह्यत्वेन व्यतिरिक्तान् शब्दादीन् स्पर्शानिन्द्रियैः स्पृश्यमानत्वात्स्पर्शशब्दवाच्यान्विषयान्बहिः कृत्वेन्द्रियैरग्रहणेन चेतसो व्यतिरिच्येत्यनेन विशेषणेनेन्द्रियाणां विषयेभ्यः प्रत्याहारलक्षणं योगाङ्गं प्रतिपादितम् । तेन च पूर्वभावीन्यासनप्राणजयादीन्यङ्गान्याक्षिप्तानि । अन्यत्किं कृत्वा, भ्रुवोरन्तरे भ्रूमध्ये चक्षुर्दर्शनशक्तिं कृत्वेत्यनेनापि धारणालक्षणं योगाङ्गमुक्तम् । भ्रूमध्यलक्षणे देशे तेजोमात्रालम्बनतया चित्तस्य बन्धो ह्यनेनोक्तः । किंच, नासाभ्यन्तरचारिणौ, नासायाः सव्यापसव्यनाडीद्वयात्मकस्य मुखावयवस्याभ्यन्तरे चरितुं शीलं ययोस्तौ तथाविधौ प्राणापानसंज्ञौ शारीरौ मारुतौ समौ यौगपद्येन तुल्यरूपतया वहनात्समानौ संपाद्येत्यनेनैकाग्रबुद्धिसंपाद्यं ध्यानलक्षणयोगाङ्गमुक्तम् । एकवस्त्वालम्बनं ह्यन्तःकरणे ध्यानसंपत्तिस्तद्बलाद्वि-

१ राशा १–°दोषाविर्भावावि°; राशा २–°दोषाभिवि°. २ राशा १·२–'च' नास्ति. ३ राशा १–विषयत्वम्. ४ राना १·२–संसारे. ५ राशा २–भावान्त. ६ राना १·२–बाह्य°.

धुवद्वर्तिं प्राणापानौ समाश्रयत इति त्रिविधेन कर्मणा यतेन्द्रियमनोबुद्धिर्योगी प्रत्याहारधारणाध्यानपर्यन्तं योगाङ्गं कर्मप्राप्तो भवति। ननु बुद्धेरत्यन्तविरोधाभावात्समाधिमसावधिरूढः, स ह्यस्य देहविमुक्तिं विना सिध्यत्यादेहस्थितेर्बुद्धिवृत्तिसंस्कारशेषस्य सत्त्वाभ्युपगमात् ॥

एवं चित्तवृत्तिनिरोधलक्षणयोगाभ्यासनिष्ठस्य योगिनः सकाशात्सदा स्वरूपप्रतिष्ठसंवित्कर्मयोगी विशिष्टः प्रतिपादितः। स हि,

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २८ ॥**
**इति श्रीभगवद्गीतासूपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥**

मां निर्वाणं ब्रह्मशब्देनोक्तमनुत्तरमुपेयं परमात्मानं ज्ञात्वाऽऽत्मत्वेन प्रतिपद्य शान्तिं निःशेषविकल्पक्षोभविरतिलक्षणां निर्वृतिमृच्छति गच्छति। मत्स्वरूपज्ञानादेव मुच्यत इत्यर्थः। कीदृशं मां ज्ञात्वा। यज्ञतपसां भोक्तारमिह नानायज्ञतपःप्रभृतयः क्रियाः शास्त्रेणानुष्ठेयतया चोदितास्तासामज्ञानमोहिता अनुष्ठातारः परस्परभिन्नमात्मानं तत्तत्फलभोक्तारं मन्यन्ते। परमार्थविदस्तु कर्तृभेदाभावात्सर्वक्रियाफलानामहमेवैकः कर्ता भोक्ता चेति यज्ञतपसां भोक्तारं तथा सर्वलोकमहेश्वरं तासु तासु क्रियास्वेकविनियोक्तृत्वात्परमं प्रभुं सर्वस्य कस्यचिज्जन्तुजातस्य क्रीडामात्रप्रयोजनतया स्वेच्छामात्रेणैव नानात्वेन भासितस्य महेश्वरं तासु तासु क्रियास्वेकविनियोक्तृत्वात्परमं प्रभुम्, तथा परमार्थतो भेदाभावात्सर्वेषां भूतानां सुहृदं सर्वदा निसर्गनिर्दोषस्वात्ममात्रप्रतिष्ठितत्वान्न कस्यचिद् द्विष्टं नाप्यनुरक्तम्। एवंविधं मां ज्ञात्वा मद्वदेव कर्मसु प्रवर्तमानः कर्मयोगी शान्तिं मुक्तिमाप्नोतीति पूर्वस्माद्योगिनो विशिष्टत्वमेवास्य प्रतिपादितमित्योम् ॥

यत्रैकतां यमुनया गगनापगेव
संन्यासधीरुपगता सह योगबुद्ध्या ।
अध्यायमेनमभिगच्छत सर्वतीर्थ-
सारं प्रयागमिह पञ्चममात्मसिद्ध्यै ।

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे पञ्चमोऽध्यायः ॥ ५ ॥

---

१ राशा १–आशु.

## ॥ अथ षष्ठोऽध्यायः ॥

ॐ आत्मज्ञानविहितकर्मसमुच्चयानुष्ठानरूपस्य सकलप्रकरणसिद्धान्तस्य प्रथमेनाध्यायेन प्रस्तावनामात्रमुपक्रान्तम् । द्वितीयेन ज्ञानकर्मणोः स्वरूपमुपदर्शितम् । तृतीयेन तयोरेव ज्ञानकर्मणोर्भिन्नानुष्ठातृविषयत्वभ्रान्तिरपाकृता । चतुर्थेनैवंविधसमुच्चयानुष्ठानरूपस्य योगस्य परस्मात्कारणात्प्रवृत्तिरुपदर्शिता । कर्मणश्च नानारूपत्वं पञ्चमेन । ते एव ज्ञानकर्मणी संन्यासयोगाविति प्रदर्शितम् । इदानीं तयोर्ज्ञानकर्मणोः समुच्चयेनानुष्ठातव्यतयोपदिष्टयोः किं सर्ववर्णाः सर्वाश्रमाश्चाधिक्रियन्त उत नियताः केचनेति संशयनिरासार्थं सर्वसाधारण्यमस्य प्रतिपादयितुमध्यायान्तरेणाऽऽह ।

श्रीभगवानुवाच ।

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

कर्मफलं तस्य तस्य यज्ञादेः क्रियमाणस्य फलं स्वर्गादिभोगात्मकमनाश्रितोऽनभिसंधानादनालम्बितः सन्, यः पुमान्कार्यं शास्त्रेण कर्तव्यमिति वर्णाश्रमनियमेन चोदितं कर्म[1], करोत्यनुतिष्ठति, स संन्यासी त्यागवान् , योगी च समाहित उच्यते । तेन सर्ववर्णाः सर्वाश्रमिणश्चात्र मोक्षफलसमुच्चयानुष्ठानेऽधिकृता इत्युक्तम् । कर्मफलानभिसंधानमात्रं च संन्यासलक्षणम् । तद्वच्च विहितकर्मानुष्ठानं च योग इति संग्रहेण सकलप्रतिपाद्योऽर्थः सिद्धान्तीकृतः । ततश्च यथाप्रतिपादितात्मज्ञानैकता । नान्तःकरणतया व्यतिरिक्तसुखात्मकं फलनिरभिकाङ्क्षः सन् रागादिदोषनिर्मुक्तस्वभावत्वादधिकारकालात्प्रभृति प्रस्तुतं कर्म योऽनुतिष्ठति स ब्राह्मणोऽस्तु क्षत्रियो वैश्यः शूद्रो वा, ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा, सर्व एव संन्यासी योगी च भवति। न पुनर्निरग्निरेवाक्रिय एव वा। निरग्न्याक्रियशब्दाभ्यां ब्रह्मचारी यतिश्च लक्ष्यते। यतः केचिदनयोरेवाऽऽश्रमयोरपर्यालोचितपरमार्थत्वान्नैष्कर्म्याभिमानिनो मोक्षहेतुत्वं मन्यमाना ब्रह्मचारियत्योरेव संन्यासितां योगितां च प्रतिजानते । यो हि ब्रह्मचर्यादेव परिव्राजकधर्ममाश्रितः सदाचारपरिग्रहाभावादनाहिताग्निः सन्मूलादेव परित्यक्तयज्ञादिक्रियो ब्रह्मचार्येकः संन्यासी च योगी च तेषां मतः । यो वाऽऽश्रमत्रयानुष्ठिताः स्वाध्याययागदानाध्यापनयाजनप्रति-

---

१ राना १·२–‘ कर्म ’ नास्ति.

ग्रहादिकाः सकलाः क्रियाः परित्यज्य निराशिषमाश्रममाश्रितः स यतिर्द्वितीयः। संन्यासी योगी च तेषां च मतः। द्वयोरप्यनयोरेव बन्धहेतूनां क्रियाणां त्यागे सति मोक्षफलभोगित्वात् ॥

तदेतत्केवलज्ञानवादिमतमनुपपन्नमेवेति प्रतिपादयितुमाह ।

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

एते ज्ञानमात्रवादिनः संन्याससंज्ञया नैष्कर्म्यरूपं यमर्थं कथयन्ति तं योगं कर्मानुष्ठानमेव त्वं जानीहि। यस्मात्संन्यासं विना योगस्तेषु नास्ति। किंतु स संन्यासः संकल्पस्य फलाभिलाषस्यैवोपपद्यते, न तु कर्मणः। सर्ववर्णेषु सर्वाश्रमेषु च कर्माविरहात्। यौ किल यतिब्रह्मचारिणौ परिव्राजकौ कर्मत्यागित्वेनाभिमतौ, तौ गृहस्थवानप्रस्थोचितं कर्म त्यजतः। स्वं तु यतित्वादिसिद्धिकारणं कंचित्कर्मविशेषमनुतिष्ठत एव। यथेष्टाचरणे हि तयोर्विकर्मस्थतैव पर्यवस्यति। तस्मात्संकल्पमात्रसंन्यासित्वात्संन्यासित्वं सिध्यतीति ॥

यः सर्वदा सर्वथा स्वानन्दामृतनित्यतृप्तपरमात्मलक्षणे ब्रह्मणि प्ररूढाहंप्रत्ययतया संन्यस्तकर्मफलसंकल्पः स योगी कार्ये कर्मणि समाधिमान्भवति नान्य इति यथोक्तयोः संन्यासयोगयोरेकपुरुषानुष्ठातृनिष्ठयोः सर्वे वर्णाः सर्वाश्रमिणश्चाधिकृता अनेन श्लोकेन प्रतिपादिताः। किंत्वनुष्ठातुर्यथोक्तयोगविषयारुरुक्षावस्था च संभवतीति च तत्कृतं तस्य भेदं प्रतिपादयितुमाह।

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

मुनेर्झगिति प्राप्तमात्रज्ञानत्वान्मनननिष्ठत्वादनुष्ठातुर्यथोक्तं योगमारुरुक्षोरारोढुकामस्य तत्र निर्विप्लवां निष्ठां लिप्समानस्य कर्म वर्णाश्रमक्रमागता सा सा क्रिया कारणं योगारोहहेतुः। तस्यैव तथाविधस्यैव कारणभूतं कर्माजहत एव पश्यञ् शृण्वन् स्पृशञ्जिघ्रन्नित्यादिना पूर्वोपदिष्टनिर्व्यवधाननित्याभ्यासवशाद् योगारूढस्य योगे लब्धप्रतिष्ठितचित्तत्वे सति परमात्मसमापन्नस्य शमः संकल्पविकल्पक्षोभक्षयः कारणं प्रयोजकं निमित्तम्। किमुक्तं भवति। आगममात्रेण प्राप्तोपदेशस्य प्रथमकल्पिकस्य योगिनो योगप्रतिष्ठालाभोत्सुकस्यापि तत्प्रापिका-

---

१ राना १.२-प्राथम°.

रणं कर्मैवोपायतया वर्तते । तस्मिंश्च श्रद्धादराभ्यां सम्यगनुष्ठिते ज्ञाने च प्रसादकाष्ठां प्राप्ते तत्कर्मात्यजत एव शमपरमोपेयत्वात्कारणं संपद्यते ॥

अत एव प्रशान्तस्य योगारूढस्य लक्षणमाह ।

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

यदा हि यस्यामेवावस्थायामिन्द्रियार्थेष्वविरुद्धेषु विषयोष्विन्द्रियैः स्पृश्यमानेष्वपि कर्मसु वा तत्प्राप्तिहेतुषु यज्ञतपःप्रभृतिषु क्रियमाणेष्वपि नानुषज्जते । सहजानन्दतृप्तित्वान्नाऽऽसक्तिं भजते । केवलं पदार्थजातं पवन इव स्पृशन्नपि स्वभावव्योमप्रतिष्ठ एव भवति । तदा सर्वेषां संकल्पानां फलाभिसंधीनां संन्यासित्वात्त्यागित्वाद्योगारूढो योगी कर्मसमाधावारूढो लब्धप्रतिष्ठ उच्यते । तदेवंविधस्य परमप्रशान्तब्रह्मसमापत्तिकारणस्य योगारूढत्वस्य नाऽऽत्मव्यतिरेकेण बाह्यं किंचित्कारणं भवितुमर्हति ॥ अतः,

**उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

**बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ।**
**अजितात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ॥ ६ ॥**

**जितात्मनः प्रशान्तस्य परात्मसु समा मतिः ।**
**शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥**

[ शां. पा. १–अनात्मनस्तु. २ परमात्मा समाहितः. ३ मानाप°. ]

दुर्वारद्वैतप्रत्ययपवनपरिक्षोभितभीषणविकल्पकल्लोलसहस्रसंकुलापारगम्भीरभवसागरनिमग्नमात्मानं स्वभावमात्मनैव यथोक्तज्ञानोपदेशप्रत्युदितोत्साहेनोद्धरेत्, यथोक्तयोगलक्षणं तीरदेशमारोपयेत् । न त्वेवं विस्मृतस्वबलतयोपेक्ष्य तत्रैवावसादयेन्मज्जयेत् । यतोऽस्योद्धरणावसादहेतुतयोपकारी प्रतिकूलश्चाऽऽत्मैव, नान्यः । कथमित्याह । तस्य पुरुषस्य संबन्धिन आत्मनः आत्मैव स्वभाव एव बन्धुः सर्वापत्प्रतीकारकृत्स्वजनः । यदुक्तम्,

---

१ राशा १·२–' पवन इव ' नास्ति. २ राशा १·२–'चित्साधनं. ३ राशा १·२–उपेक्षितं. ४ राना १·२ ' आत्मनः ' नास्ति.

आत्मैव यदि नाऽऽत्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हिततरस्तस्माद्य एनं वारायिष्यति ॥ इति ।

कस्याऽऽत्मैव बन्धुः । येन पुरुषेण स आत्मा स्वस्वभाव आत्मनैव ज्ञानामृताभ्यवहाराभ्यासलब्धबलेन जितः प्रत्यवमर्शगोचरापादनाद्वशीकृतः । येन त्वसावात्मा प्रसादपरेण सतोपेक्षितः सन्न जितो न वशीकृतस्तस्य तथाविधस्यायं शत्रुत्वे सर्वेच्छाव्याघातकारित्वे वर्तते । तथा चोक्तम्—

न तत्कुर्यादसिस्तीक्ष्णः सर्पो वाऽथ विषोल्बणः ।
अरिर्वा नित्यसंक्रुद्धो यदात्मा दुरधिष्ठितः ॥ इति ।

यथोक्तस्याऽऽत्मजयस्य फलमाह । जितो यथोक्तेन प्रकारेण वशीकृत आत्मा येन तस्य जितात्मनः । अत एव प्रशान्तस्य स्वस्वभावनिर्दोषपरमात्मसमापत्तिवशान्निवृत्तविकल्पविप्लवस्य परेषु व्यतिरिक्तत्वेन प्रतिपन्नेषु सर्वदेहिषु तथाऽऽत्मन्यहंतया प्रतीयमाने तुल्या सामान्यसंविदेकस्वरूपग्राहिणी मतिर्भवति । तथा शीतोष्णसुखदुःखादिषु बाह्याभ्यन्तरनिमित्तजेषु द्वंद्वोपप्लवेषु तथा परेण प्रयुज्यमाने माने पूजायां तथाऽवमाने पराभवे समाना मतिर्भवति । न तस्य सर्वगतादेकस्मात्स्वभावान्निर्विकारात्परमात्मनोऽहंप्रतीतिर्व्यतिरिच्यते । नानाविधेषु विकारकारणेषूपस्थितेष्वपि तस्य सत्ये स्वात्मन्यनुसंधानं लोकवन्न विच्छिद्यत इत्यर्थः ॥

स चैवंविधो योगारूढ उच्यत इत्याह—

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

ज्ञानं शास्त्रतः स्वरूपावगममात्रं, विज्ञानं शास्त्रावगतस्य तत्त्वस्य साक्षात्कारः । ताभ्यां तृप्तो निराकाङ्क्ष आत्मा स्वभावो यस्य स तथाऽत एव कूटस्थः प्राप्तपरमार्थनित्यात्मप्रत्ययत्वात् । कूटस्थः शैलादिवन्निष्प्रकम्पः, यतो विजितेन्द्रियो वशीकृतबाह्यान्तःकरणो न तु तद्वशः । एवं लोभादिदोषरहितत्वात् समौ लोष्टाश्मानौ मृत्पिण्डपाषाणौ काञ्चनं च हेम यस्य स तथाविधो युक्तो योगारूढ उच्यते ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

---

१ राशा १—आत्मज्ञानस्य.

यस्य सुहृदरिप्रभृतिषु प्रीतिद्वेषहेतुषु नानाविधेष्वन्योन्यभिन्नरूपेषु जन्तुषु समा ब्रह्मलक्षणनिर्विशेषैकतत्त्वदर्शितत्त्वादेकरूपा बुद्धिः स विशिष्यते, नैष्कर्म्ययोगिनः सकाशात्प्रकर्षं लभते । स हि यद्वस्तु समाधिप्रतिपक्षत्वात्परिहरति, यच्च तदानुगुण्यात्स्वी कुरुते, ताभ्यां तस्य द्वेष्यप्रियाभ्यां रागद्वेषौ प्रकाश्येते । यस्तु सर्वसाम्यं प्राप्तः स क्रियासु वर्तमानोऽपि समबुद्धित्वाद् ब्रह्मभूत एवेति विशिष्यत इत्युक्तम् । सुहृदादीनां भेदो व्याख्यायते । सुहृद्यः स्वभावतः शोभनहृदयः। मित्रं मैत्रीकरणनिर्वृत्तसौहृदं, अरिः शत्रुः कारणवशाद् द्वेष्टा द्वेष्यश्च । द्वेष्यस्तु विनाऽपि कारणमप्रियः । उदासीनो न मित्रं शत्रुः मध्यस्थो यः केनापि प्रकारेण मित्रत्वममित्रत्वं चाऽऽश्रयितुमर्हति । बन्धवो ज्ञातयः, साधवः शास्त्रोचितसदाचारनिरताः । पापास्तद्विपरीता दुष्टाचारसंकल्पाः । तेषु सर्वेषु समबुद्धित्वमस्य कर्मयोगिन एव बोद्धव्यम् । यच्छत्रुभावं प्रतिपन्नेषु शास्त्रचोदितत्वान्न्याय्यवधादिकर्मप्रवृत्तावपि निर्विकारैकात्मनिष्ठत्वम । न तु शत्रौ शास्त्राविहितत्वादन्याय्या मित्रप्रतिपत्तिः । यद्येवमभविष्यत्तत्राऽऽत्मज्ञानमर्जुनस्योपदिश्य तस्माद्युध्यस्वेत्युपसंहारेणाभ्यधास्यत । तस्मात्कर्मयोगिनस्तत्तद्वर्णाश्रमक्रमागतां तां तां शास्त्रचोदितां क्रियामनतिक्रमत एव सर्वसाम्यभावनाऽत्र विवक्षिता ॥

अत एवाऽऽह ।

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १० ॥**

[ शां. पा. १–अयं श्लोकः शां. पाठे ५ अध्याये १८ श्लोकानन्तरं दृश्यते. ]

इहैवास्मिन्नेव विविधक्रियाकारिणि शरीरे वर्तमानैस्तैः सर्गः पुनर्भवो जितोऽधःकृतः। येषां यथाप्रतिपादिते साम्ये सर्वभावाभेदे मनश्चित्तं स्थितं लब्धप्रतिष्ठम् । ब्रह्मैकं हि वैषम्यकारणभूतरागादिरहितत्वान्निर्दोषमतस्तदेव समं सर्वदा सर्वथा सर्वत्र विशुद्धसंविन्मात्रैकस्वरूपं, तस्माद्ये साम्ये स्थितास्ते ब्रह्मण्येव स्थिता इत्युक्तम् ॥

अथ यथोक्तसाम्यानतिक्रमसमाहितस्य चित्तवृत्तिनिरोधलक्षणमपि योगमितरक्रियावदहोरात्रमध्ये व्यवस्थितैताभ्यासकालं विशिष्टेतिकर्तव्यतान्वितमपि कर्म योगिनः श्लोकषट्केनाभ्यनुजानन्नाह ।

---

१ राना १·२–°नियताः. २ राना १·२–°गर्हित°. ३ राशा १–व्यवस्थापिता°.

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ११ ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १२ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥ १३ ॥
समं कायशिरोग्रीवं धारयन्नचलः स्थितः।
संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १५ ॥
युञ्जन्नेवं सदाऽऽत्मानं मद्भक्तोऽनन्यमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १६ ॥

[ शां. पा. १-अचलं स्थिरः. २-संप्रेक्ष्य ना°. ३-योगी नियतमानसः.]

क्रमेणैतद्व्याख्यायते । योगी प्रबन्धप्रतिपादितप्रतिपादयिष्यमाणस्वरूपेण प्रस्तुतव्याख्यानयोगान्तरविलक्षणपरिकर्मणा सर्वकालदेशाविरोधिना समाधिविशेषनिरपेक्षेण समस्तान्तर्बहिष्करणप्राणवृत्तिष्वप्यनिरुद्धप्रसरेण कर्मयोगेण योगवान्, शास्त्रविहितत्वात् । आत्मानमन्तःकरणं जीवात्मानं वा सततं प्रत्यहं व्यवस्थापितनियतकालानतिक्रमेण रहस्येकाग्रबाधकरहिते देशे स्थितो यत एकाकी केवलस्तथा यतचित्तात्मा, यतं निगृहीतं चित्तं मनो येन तादृश आत्मा क्षेत्रज्ञो यस्य स तथाविधः सन्परमात्मनि समादधीत, चित्तवृत्तिनिरोधलक्षणमपि योगमनुतिष्ठेदित्यर्थः । किंतु निराशीः, आशिषः फलाशंसातो निष्क्रान्तो मोक्षलक्षणेऽपि फले प्रार्थनादैन्यरहितः । तथाऽपरिग्रहः सर्वत्र ममत्वाभिमानरहितः । तथा मच्चित्तत्वादिवक्ष्यमाणधर्मयुक्तो युञ्जीतेत्यनेन कर्मयोगसमाधावप्रमत्तेनायं योगोऽभ्यसनीय इत्युक्तम् । अस्येदानीं परिकर्माभिधीयते । किं कृत्वा युञ्ज्यात्। आत्मनः शुचौ देशे यत्याद्यपेक्षया पुण्यसरित्परिसरगिरिगुहादौ, गृहस्थापेक्षया सूपलिप्तविविक्तसदनादौ विशुद्धे स्थान

---

१ राना २-पुस्तकं इतस्त्रुटितम्—पृष्ठस्यान्ते ‘ चित्तवृत्तिनिरोधि ’ इति लिखित्वा तत्र ‘ वृत्तिनिरोधि ’ इति उत्कीलितम्.

आसनं समाधिविष्टरं प्रतिष्ठाप्य स्थितिं प्रापय्य। कीदृशं स्थिरं निश्चलं, तथा सुखित्वार्थमुच्छ्रायनिम्नत्वातिशयरहितं, तथा चेलं वस्त्रं, अजिनं मृगादिचर्म। कुशा दर्भास्तदुत्तरं तत्प्रधानम्। तेन गृहस्थस्य चेलाजिनोत्तरम्, यत्यादेः कुशोत्तरम्। एवं तत्र स्थिरसुख आसन उपविश्यैकाग्रं ध्येयत्वेन परिगृहीतैक-वस्तुनिष्ठं मनश्चित्तं कृत्वाऽत एव यतचित्तेन्द्रियक्रियो, यता निषिद्धबहि-ष्प्रसराश्चित्तेन्द्रियाणां मनसोऽक्षाणां च क्रियाः संकल्पविकल्पशब्दा-दिग्रहणरूपाणि कर्माणि येन तथाविधः सन् योगं चित्तवृत्तिनिरो-धात्मकं युञ्ज्यात्समादधीत। किमर्थमात्मविशुद्धये, आत्मनोऽन्तःकरणस्य बाह्योपरागलक्षणमलक्षालनाय, क्षेत्रज्ञस्य वा देहाद्यहंप्रत्ययरूपकलङ्कपरिमार्ज-नाय। एवं चित्तसमाधानमभिधाय तत्साधनभूतं कायसंस्थापनमाह। कायः कण्ठादधःशरीरं, शिरो मूर्धा, ग्रीवा कंधरा कायशिरोग्रीवम्। तत्समवक्रमृजु धारयन्बिभ्रत्। तथारूपोऽप्यचलो निष्प्रकम्पोऽपगमेऽजयत्वादिचित्तविक्षेपकार-णरहितः स्थितः। तथा स्वं नासिकाग्रं घ्राणप्रान्तं संपश्यन्। अत एव च दिशः काष्ठा अनवलोकयन् अप्रेक्षमाणः। दिक्षु दृग्विक्षेपपरिहारार्थं नासि-काग्रसंदर्शनमुक्तं, न तु तल्लक्षीकर्तव्यमित्यभिप्रायः। इत्थं विहितसमस्तसमा-धिपरिकरस्य परमात्मसमापत्तिलक्षणमोक्षप्राप्तिहेतुं विशेषणं प्रतिपादयितुमाह, प्रशान्तात्मा। प्रशान्तः संदेहादिविकल्पक्षोभरहित आत्माऽन्तःकरणं यस्य स तथा। सर्वमात्मत्वेनावगम्य सर्वतश्चराचराद्भूतजाताद्विगतभीर्निवृत्तसाध्वसः, ब्रह्मचा-रिव्रतेस्थितः। ब्रह्मचारिणः कामसंकल्पवर्जनं व्रतम्, तस्मिन्स्थित इति। सर्वार्थवि-षयप्रार्थनारहितत्वमनेन विशेषणेनोक्तम्। इत्थं मनः संयम्य सर्वतश्चित्तं निगृह्य मय्येव परमात्मन्येकस्मिंस्तत्त्वे चित्तं संवेदनं यस्य स तथाविधो युक्तः समाहितः संस्तत्परस्तथाविधाद्योगादनन्याविषयमना आसीत तिष्ठेत्। एवमेतद्विशेषणविशिष्टः सदा प्रत्यहमात्मानमन्तःकरणं युञ्जन्समादधानः सन्मद्भक्तो मामेवाऽऽत्मत्वेन समाश्रितोऽत एवानन्यमानसोऽन्यस्मिन्विषयान्तरे नियम्य मानसं मामेव भक्तो मत्समापत्तिमेव च समाधिफलत्वेन प्रतिपन्नः सन्मत्संस्थां मयि वर्तमानां शान्तिं स्वाभाविकसर्वविकाररहितत्वलक्षणं प्रशममधिगच्छति स्वी कुरुते। कीदृशीं शान्तिम्। निर्वाणपरमां, निर्वाणं शरीरादावनात्मन्यात्मप्रत्ययाद्क्षिाभविरतिरूपा निर्वृतिः, परमं प्रकृष्टफलतया स्थितं यस्यां सा तथोक्ता, ताम्॥

इत्थमस्य योगस्य कर्मसमाधिलक्षणमहायोगान्तर्वर्तिनो यथोक्ताद्वैतात्मज्ञाननिष्ठतयाऽनुष्ठेयतयाऽभ्यनुज्ञातस्यान्यदपि परिकर्म प्रतिपादयितुमाह ।

**योगोऽस्ति नैवात्यश्नतो न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन ॥ १७ ॥**
**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १८ ॥**

[ शां पा. १–नात्यश्नतस्तु योगोऽस्ति. २–जाग्रतो नैव चार्जुन. ]

एष यथोक्तो योग एवंविधस्यानुष्ठातुर्नैवास्ति, नैव संभवति । कीदृशस्य । अत्यर्थमश्नतः सौहित्यपर्यन्तं भुञ्जानस्य तथैकान्तं सर्वथाऽनश्नतोऽपि नास्ति । तथाऽतिस्वप्नशीलस्य नित्यं निद्रारतस्य, तथा सदैवातिजागरत उन्निद्रस्यापि नास्ति । अत्यशनाद्धि कायगौरवशूलाभिष्यन्दादयो दोषाश्चित्तमकर्मण्यं संपादयन्ति । अत्यन्तानशनाच्च धातुक्षयादयः शक्तिहानिमावहन्ति । अतिस्वप्नादालस्यादय उद्योगभङ्गम् । अत्यन्तनिद्रापहारादजीर्णादयो दौर्मनस्यादिकमापादयन्ति । अतो युक्ताहारविहारस्य युक्तो हितमात्रात्कालावच्छिन्नत्वादुपपन्न आहारो भोजनं विहारश्चंक्रमणादिर्यस्य तादृशस्य । तथा कर्मसु दृष्टादृष्टविषयेषु व्यापारेषु युक्तचित्तशरीरानवसादित्वपर्यवसायिनी चेष्टा मनःकायव्यापारो यस्य तस्य तादृशस्य । तथा युक्तौ यथाकालभावित्वान्न्याय्यौ स्वप्नबोधौ निद्राजागरौ यस्य तस्य तादृशस्य योगिन एष योगो दुःखहा भवति, अभ्यस्यमानः क्लेशं हन्ति, सुखेन संपद्यत इत्यर्थः । विकरणानियमोऽत्र छान्दसः, संस्कृतंमन्यास्तु पाठान्तराणि योजयन्ति ॥

एवमाहारविहारनियममुक्त्वा सिद्धिलक्षणं योगस्याऽऽह ।

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १९ ॥**

यदाऽस्य योगिनः समाध्यभ्यासकाष्ठां प्राप्तस्य चित्तं विनियतं निगृहीतं सत्संप्रज्ञातसमाधिभूमिका वितर्कविचारानन्दास्मितानुगता अतिक्रान्तं सत्स्थूलसूक्ष्मेषु ध्येयेषु लब्धसंयमत्वात्तानि त्यक्त्वैकस्मिन्ध्येय आत्मन्येव स्वभाव एवावतिष्ठते, अवस्थितिप्रतिष्ठां संयमं लभते, तदा तस्यां दशायामात्मैकाराम-त्वात्सर्वेभ्यो व्यतिरिक्तेभ्यो भोगेभ्यः स्पृहारहितो निरभिकाङ्क्षः सन्नसौ युक्तः संपन्ननिर्बीजसमाधिरित्युच्यते ॥

तस्याऽऽत्मध्याननिष्ठस्य योगिचित्तस्यैव योगशब्दवाच्यस्योपमानमाह ।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि[1] ॥ २० ॥

[ शां. पा. १–आत्मनः. ]

आत्मनि निरुत्तरे ध्येये योगं समाधिं युञ्जानस्य योगिनः सर्वतः प्रत्याहृतत्वाद्यतं निगृहीतं चित्तं येन तादृशस्य सा उपमा तदुपमानं तत्त्वज्ञैः स्मृतम् । यथा दीपः प्रद्योतको निवृत्तवातदेशे स्थितः सन्नेङ्गते न प्रकम्पते तथैवाऽऽत्मालम्बने समाधौ स्थितं योगिचित्तं न प्रकम्पत इत्युपमेयवाक्यमध्याहार्यम् ॥

अनेन दीपोपमानेन प्रत्यासन्नप्रबलविपक्षत्वाद्यत्नसंरक्षणीयत्वं योगिचित्तस्य प्रतिपादितम् । अथास्य परस्य योगस्य लक्षणमाह ।

यत्रोपरमते चित्तं निरुद्धं योगसेवनात्[1] ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥२१॥
सुखमात्यन्तिकं यत्[2] बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति[3] तत्त्वतः ॥ २२ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥२३॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२४॥

[ शां. पा. १–°सेवया. २–यत्तत्. ३–चलति. ]

तं योगसंज्ञितं समाध्याख्यमर्थं विद्याज्जानीयात् । कं ? तं, यत्र यस्मिन्निरुद्धं निवृत्तबहिष्प्रचारतया नियमितं निश्चितं योगसेवनाद्योगस्य समाधेः प्राप्यस्यान्यस्य सेवनादाश्रयणादुपलब्धपरमोऽपि[1] यत्नात्तत्रैव विश्रान्तं सद्योगान्तरविषयं प्रयत्नमुत्सृजति, तस्यैव योगस्य निरुत्तरत्वात् । अत एव तस्यामवस्थायां योगी यत्राऽऽत्मनैवाऽऽत्मानं पश्यन्, स्वसंवेदनेन स्वरूपमनुभवन्नात्मनि स्वभाव एवाधिकरणभूते तुष्यति परां प्रीतिं प्रतिपद्यते तं योगं विद्यादिति संबन्धः । तदानीं हि निवृत्तसकलबाह्योपरागचित्तमात्मसमापन्नं सच्छुद्धसंवेदनलक्षणतद्धर्म-

---

१ राशा २–ना१·२–उपमान°. २ राशा १–°परमोपेयत्वात्.

त्वेनावतिष्ठते । तथा यत्राऽऽत्यन्तिकमनन्तं निरुपमस्वरूपानुभवचमत्कारमयं सुखं सहज आनन्दोऽभिव्यज्यते । कीदृशं सुखमतीन्द्रियं श्रोत्रादीनि बाह्यानीन्द्रियाण्यतीतमतिक्रान्तम्, अत एव बुद्धिग्राह्यं, बुद्ध्या तात्कालिकया बोधलक्षणयाऽऽत्मनः स्वशक्तिग्राह्यं संवेद्यम्, अयं योगी वेत्ति जानाति तं योगं विद्यात् । तथा यत्र स्थितो यस्मिंल्लब्धविश्रान्तिरयं योगी तत्त्वतः परमात्मरूपात् परमार्थान्न च्यवते न वियुज्यते । तथाऽयं योगमासाद्य ततोऽधिकं तस्मादुत्कृष्टमपरमन्यं लाभमिष्टप्राप्तिं योगी न मन्यते, न बुध्यते । अत एव प्रागुक्तं—यत्र स्थितस्तत्त्वतो न च्यवत इति । अत एव यस्मिन्स्थितः संरूढो निवृत्तेतरव्यापृतिः सन् योगी गुरुणाऽपि प्रबलेनापि केनचिन्मानसेन शारीरेण वा दुःखेन न विचाल्यते, न ततो व्युत्थाप्यते । तं योगसंज्ञितमर्थं विद्यात् । कीदृशं दुःखसंयोगवियोगं? दुःखं विषयेष्विन्द्रियप्रवृत्तिजनितो राजसः क्लेशः। तेन संयोगः संसारिदशायां संबन्धः । तस्माद्वियोगो विरहस्तं हेयवस्तुप्रार्थनाजन्मना दुःखेन संबन्धाभाव एव वियोग इत्यर्थः । स एवंलक्षणो योगः परः समाधिर्निरुत्तरानन्दलाभलक्षणमहाफलहेतुर्निश्चयेन निःसंदेहत्वेनानिर्विण्णचेतसाऽनुद्विग्नमनसा योक्तव्यः समाधातव्यः । अलब्धभूमिकस्य हि योगिनः प्रथमं संदेह आरुरुक्षतश्चाभ्यासदशायां क्लेशः संभाव्यत इति निश्चयेनानिर्विण्णचेतसा स योक्तव्य इत्युक्तम् ॥

एवं बाह्यविषयपरिहारक्रमेण चित्तवृत्तिनिरोधलक्षणां समाधिसिद्धिमभिधाय पुनरपि प्रकृतकर्मयोगक्रममेव समाश्रयंस्तत्सिद्धिं प्रदर्शयितुमाह ।

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २५ ॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२६॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २७ ॥
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८ ॥
युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २९ ॥

[ शां पा. १–निश्चलति ( कुत्रचित् ). २–विगतकल्मषः. ३–°संस्पर्शम्. ४–°न्तं सुखमश्नुते. ]

क्रमेणैतद्व्याख्यायते । शनैः शनैरुत्तरोत्तरविशेषारोहणक्रमेण, न तु सहसैवोपरमेत् । बाह्येषु विषयेष्वासङ्गात्तथा देहादावात्माभिमानान्निवर्तेत । केन साधनेन ? बुद्ध्या सम्यग्ज्ञानेन । कीदृश्या ? धृतिगृहीतया, धृतिः परमात्मन्यहंकारावष्टम्भलक्षणं धैर्यं, तया गृहीता स्वीकृता या बुद्धिस्तया तादृश्या । सात्त्विकी हि धृतिर्या बुद्धिं धारयति । साऽत्र योगे साधनत्वमर्हति । तस्या धृतेर्लक्षणं वक्ष्यति ।

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ।

पूर्वं किं कृत्वोपरमेत् । मनसैव परेण मोक्षविषयेणैव चेतसा प्राक्स्थावरसंज्ञयोक्तेन संकल्पप्रभवान् विषयग्रहणव्यग्रजङ्गममनःसमुत्थान् सर्वान् दृष्टानुश्राविकभेदेन समस्तांस्तथा प्रत्येकमशेषानविद्यमानसंस्कारमात्रान् कामान्भोगांस्त्यक्त्वा परिहृत्य, तथा तेनैव मनसा न तु विषयविषयेणेन्द्रियग्रामं करणवर्गं समन्ततः सर्वेभ्यो विहितेभ्योऽपि शब्दादिभ्यो विनियम्य रागादिदोषपरिहारात्मना विशेषेण । निगृह्येत्यनेन [1]प्रस्तुतसमुच्चयानुष्ठानसाध्यकर्मयोगविषयं कर्मत्यागस्येन्द्रियनियमस्य च पूर्वोक्तक्रममेव स्मारयति । एवमनेन क्रमेणाऽऽत्मसंस्थं मुख्य आत्मनि ब्रह्मपरनाम्नि सम्यक्स्थितं लब्धविश्रान्ति मनोऽन्तःकरणं कृत्वा संपाद्य तद्व्यतिरिक्तं वस्त्वन्तरं न किंचिद्ध्यायेत्तदानीं हि सर्वं ब्रह्मरूपतयैव प्रकाशते । एवंविधेनाभ्यासक्रमेण यतो यतो यस्माद्यस्मात्कुतश्चिद्बन्धनभूतादाभ्यन्तराद्बाह्याच्च मनश्चेतो निश्चरति निर्गच्छति, तस्मात्तस्मान्नियम्य प्रतिषिध्याऽऽत्मनि परमकारण एव वशं नयेत्तत्रैव निबध्नीयात् । यतः स्वभावत एतच्चञ्चलं चपलं, तथा प्रार्थितेऽपि विषये न चिरमवतिष्ठत इत्यस्थिरम् । यस्मात्तस्मिन्नात्मवशं नीते सत्येनं योगिनं प्रशान्तमनसं विषयसुखौन्मुख्यक्षोभविरतिनिर्वृतचेतसं सन्तं स्वयमेवोत्तमं नित्यनिरवद्यस्वभावत्वादुत्कृष्टं सुखं सहज आनन्द उपैत्युपगच्छति । कीदृशं योगिनं? शान्तरजसं शान्तं विलीनं रजो विषयप्रवृत्तिहेतुर्गुणो यस्यात एव ब्रह्मभूतम्, परमात्मसमापन्नं यस्मादकल्मषमविद्यमानाज्ञानलक्षणाकिल्बिषकलङ्कम् । एवमनेन यथोक्तेन क्रमेण [2]प्रबन्धप्रतिपादितेन नियतमानसः प्रयतान्तःकरणो योगी सर्वदा सर्वास्ववस्थासु पश्यञ्शृण्व-

---

१ राना १–' प्रस्तुत ' नास्ति. २ राशा १–' प्रबन्ध ' इत्यत्र ' पूर्वमेव '.

मित्यादिना प्रतिपादिता स्वात्मानं युञ्जन्समादधानः सुखेनाऽऽसनप्राणायामप्रत्याहारध्यानधारणादिक्लेशाभावादनायासेन ब्रह्मणा परमात्मना संयोगमभेदमत्यन्तं नित्यमेवाधिगच्छति प्राप्नोति ॥

इत्थं हि निरुत्तरसमाधेः कर्मयोगिनो लोकोत्तरं व्यवहारं प्रतिपादयितुमाह ।

**सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।**
**पश्यते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ३० ॥**
**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३१ ॥**
**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३२ ॥**
**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३३ ॥**

[ शां. पा. १-ईक्षते. ]

यथोक्तेऽस्मिन्कर्मयोगे युक्तः समाहितः सर्वत्र सर्वदा सर्वथाऽवहितचित्तो योग्यात्मानमद्वयचिन्मात्रैकलक्षणतयोक्तस्वरूपं सर्वभूतेषु परस्पराभिन्नत्वेनावस्थितेषु चराचरेषु प्राणिषु स्थितं पश्यतो यदात्मनः सामान्यैचिन्मात्रं रूपमेकं तदात्मकान्येव भूतानि प्रेक्षत इत्यर्थः । तैथोक्तस्वरूपे स्वात्मानि सर्वभूतानि विगलितान्यन्योन्यभेदानि पश्यतीत्यात्मनः सर्वभूतानां चाभेददर्शनं प्रतिपादितमेवाभेददर्शनप्रतिपादनपरमेतद्यथा चैतत्संभवति तथा प्रतिपादितमेव प्राक् । तथाऽपि स्मृत्यर्थं पुनरुच्यते । आत्मा नामायं सुखदुःखग्राह्यग्राहकमूढत्वशून्यत्वादिसकलविकल्पविरहविशुद्धसंवित्मकाशैकलक्षणस्तस्य संवेदितृत्वं नामाव्यभिचारी गुणः। तेन यद्यत्संवेत्ति तत्तत्संवेद्यमानमेव तेन तेन रूपेणाऽऽत्मानं लभते । संवेद्यमानता च निर्विकल्पावस्थापूर्विका भवति । तेन यद्यत्किंचिद्यदा यदा यत्र यत्र येन येन प्रमात्रा संवेद्यते, तत्तदद्वयानन्दानन्तचिन्मात्रस्वरूपमित्यात्मनः संवेदितुर्वेद्यानां च सर्वभूतानां नास्ति वास्तवः कश्चिद्भेदः। केवलमचिन्त्यपरमेश्वरमायोद्भावितो वेद्यवेदकविकल्पः सर्वमिदमन्योन्यं विभिन्नतयाऽवभासते । स च परमेश्वरप्रसादादुन्मिषितया विद्याख्यया दिव्यया दृशा तत्त्वविद्भिस्तादृशो

---

१ रामा १-°न्यमात्रचि°. २ राशा १·२ ( प० लि० )-यथोक्त°.

विभाव्यमानो विगलिततदाभिन्नसेतुसागरसलिलवत्सर्वमिदमात्मतयैक्येनावभासते । ज्ञानकर्मसमुच्चयानुष्ठानात्मनि चास्मिन्महायोगे प्रत्युदितविद्याशक्तिरेवाधिकृत इति कर्मयोगी सर्वत्र स्थावरे जङ्गमे च भूतग्रामे समदर्शनोऽद्वैतात्मकतत्त्वैकदर्शीत्युक्तः । यश्चाऽऽत्मा सोऽहमेवेत्यभेदं भगवान्प्रतिपादयितुमाह । यो योगी सर्वत्र भावजाते मां यथोक्तात्मतत्त्वैकरूपमुक्तयोपपत्त्या पश्यति, मयि च सर्वं तथैव पश्यति, तस्य तत्त्वदर्शिनोऽहं न प्रणश्यामि नादृश्यो भवामि । सोऽपि मे स्वरूपभूतत्वान्न प्रणश्यति, नादृश्यत्वमापद्यत इति कर्मसिद्धस्य योगिनः स्वात्मनश्चाभेदप्रतिपादनपरमेतद्भगवद्वचनम् । किंच, यो योगी सर्वत्र सर्वस्मिन्देहप्रभृति सुखं दुःखं वाऽन्यं वा कंचित्प्राणिधर्ममुक्तयोपपत्त्या संवेद्यमानस्य संविदात्मकत्वापत्तिरूपतया समं संविन्मात्रैकस्वभावं पश्यति बुध्यते । कथम् ? आत्मौपम्येनात्मानमुपमानीकृत्य स्वानुभववदित्यर्थः । स सर्वथा सर्वेण केनचिल्लोकसाधारणेन प्रकारेण वर्तमानोऽपि मयि वर्तते, मदभिन्नोऽहमेवासावित्यर्थः । स एवंविधो योगी सर्वास्ववस्थास्वविलुप्तनिरुत्तरसमाधिफलास्वादो दुर्वारविघ्नवृन्दानुबन्धदुःसादयोगाङ्गानुष्ठाननिष्ठोपलभ्यसमाधिफलपूर्वोक्तयोग्यपेक्षया परमो निरुत्तरातिशययुक्त ईश्वरवत्सर्वसाम्यदशाधिरूढत्वाज्जीवन्मुक्त इत्यर्थः ॥

अथ संप्रत्यननुभूतत्वादस्य सर्वसाम्यप्रतिपत्तिफलस्य समाधेरसंभाव्यतां मन्यमानोऽर्जुन आह ।

अर्जुन उवाच ।

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं पराम् ॥ ३४ ॥**
**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३५ ॥**

[ शां पा. १–स्थिराम्. ]

हे कृष्ण, योऽयं समनन्तरं कर्मयोगलक्षणोऽन्ययोगविलक्षणो योगस्त्वया प्रोक्तः, एतस्य परां स्थितिं प्रकृष्टां प्रतिष्ठां न पश्यामि, न तर्कयामि । चञ्चलत्वादनवस्थितत्वात् । यस्मात्तत्साधनं मनश्चञ्चलं प्रकृतिचपलमतः प्रमाथि

---

१ राशा १–°तयैवैक्येन.

प्रमथनशीलं, यतः कृच्छ्रलब्धामपि भूमिकामुन्मार्गप्रवणत्वादाशु विनाशयति। न च तद्व्यावर्तयितुं शक्यं, यतो बलवत्। अस्य विषयान्प्रत्यभिधावतः, शैलेन्द्रशिखरविशीर्यमाणसलिलौघवत्। दुर्धरं बलं यतो जन्मसहस्राभ्यस्तेषु विषयरसेषु दृढासक्तेषु दृढासक्तत्वाद् दृढम्। तस्यैवंविधस्य मनसो निग्रहमुत्पथात्प्रतिषेधं सुतरां दुष्करं दुःसाध्यं संभावयामि। कस्येव वायोरिव। यथा वायुः स्वाच्छन्द्येन दिक्षु प्रसरन्निग्रहीतुमशक्य एवमेतन्मनः॥

अथैतदभ्युपगमपूर्वमुत्तरं भगवानाह।

**श्रीभगवानुवाच।**

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ ३६॥**

नास्त्यत्र संशय इदं चलं स्वभावचपलं मनो दुःखेन निग्रहीतुं शक्यते। किं त्वभ्यासेन वैराग्येण चोपायद्वयेन गृह्यते, नियम्यते। अभ्यासश्चात्र कर्मयोगे पश्यञ्शृण्वन्नित्यादिप्रागुक्तक्रमेण सर्वेन्द्रियवृत्तिषु विहितविषयौन्मुख्येन प्रवर्तमानासु सर्वप्राणवृत्तिषु च शरीराव्यभिचारित्वात्तथैव प्रवर्तमानास्वप्युपदेशानुसारिणा क्रमेण यथोक्ते स्वात्मनि निवेशनात्मकस्थितिलाभविषयो यत्नः। वैराग्यं चानिषिद्धविषयस्पर्शानुभूयमाने सुखे सहजानन्दनिरुपमास्वादाविस्मरणादनासङ्गः। ताभ्यामेवंविधाभ्यां कर्मयोगादिकृतपुरुषैकगोचराभ्यामभ्यासवैराग्याभ्यामेतत्सुचञ्चलमपि चित्तं नियन्तुं शक्यमेव॥

अत एव,

**असंयतात्मना योगो दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥ ३७॥**

यतो व्याख्याताभ्यासवैराग्यलक्षणसाधनाभावादसंयतात्मनाऽनियतान्तःकरणेन पुरुषेणैष योगो दुष्प्रापो दुर्लभः। वश्यात्मना विधेयान्तःकरणेन पुनः पुरुषेण यतता नित्यमुत्साहतया प्रयत्नं कुर्वतोपायतो यथोक्तज्ञानलक्षणादुपायात्स्वीकर्तुं शक्य एव॥

अथोपायस्य ज्ञानरूपस्य श्रुतिमात्रावगतत्वादभ्यासवैराग्ययोश्चान्यतदुःसाध्यत्वादात्मनश्च संसारिधर्मानुपरमाद्योगस्य दुरवापत्वं मन्यमानः श्रद्धामात्रस्यैककारणस्य योगं प्रत्युपायत्वं स्यान्न वेति संशयानः,

---

१ राशा १-यथैतद्.

अर्जुन उवाच ।

अयतः श्रद्धयोपेतो योगाच्चलितमानसः ।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ ३८ ॥
अनेकचित्तोऽविश्रान्तो मोहस्यैव वशं गतः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३९ ॥

[ शां. पा. १–अयतिः. २–' लिप्समानः ' इत्यादि ' वशं गतः ' इत्यन्तं विद्यमानं पङ्क्तिद्वयं शां. पाठे नास्ति. ]

आप्तोपदिष्टादुपायान्निःसंशयतया फलस्य संभावना श्रद्धेति किलोक्ता । तयोपेतः श्रद्धावान् । अत एव सतां सत्पुरुषाणामुत्तमफलार्थिनां पुंसां पन्थानं प्रेप्सुरपि यदि योगादुक्तलक्षणात्समाधेश्चलितमानसो विच्युतचित्तवृत्तिः । अत एवायतो यत्नशून्यस्ततश्च ब्रह्मणः परस्योपेयस्य तत्त्वस्य पथि प्राप्त्युपायरूपे मार्गे प्रमूढः प्रकर्षेण मूढः सम्यग्ज्ञानरहितः, अतश्चोपायानिश्चयादनेकचित्तः । विकल्पाकुलत्वात्प्रतिक्षणं चञ्चलत्वाद्बहुविधमनोवृत्तिः, अत एवाविश्रान्तो न क्वचिल्लब्धस्थितिः । यतो मोहस्यैवाज्ञानस्य वशं गतो विधेयतां प्राप्तः स्यात् । तदेतया दोषसामग्र्या योगसंसिद्धिं समाधिलाभमप्राप्तः सन् कां गतिं गच्छति । तस्यैवंविधस्य श्रद्धामात्रैकालम्बनस्य परिशिष्टोपायरहितस्य देहादूर्ध्वं कीदृशे योन्यन्तरे गमनमित्यर्थः ॥ तदेव पृच्छति ।

कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्र इव नश्यति ।
अप्रतिष्ठो महाबाहो विनाशं वाऽधिगच्छति ॥ ४० ॥
एतं[3] मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ४१ ॥

[ शां. पा. १–°विभ्रष्टश्छिन्नाभ्रमिव. २–विमूढो ब्रह्मणः पथि. ३–एतन्मे. ]

कच्चिदित्यभीष्टप्रश्ने । अपि नामैवं श्रद्दधानः पुरुषः स्वर्गापवर्गलक्षणस्य गतिद्वयस्यापि भ्रंशादभावादेकतरगतिं[1] प्रत्याशासंभवे छिन्नाभ्रमिव, पवनविशीर्णो जलदो यथा विनश्यति तद्वत् पुनः संधानमापद्यत उत गतिद्वयोपायनिश्चयाभावादप्रतिष्ठो निरवलम्बनः सन्नात्यान्तिकमेव विनाशं प्राप्नोति, अपुनरुत्थानायैव संसारश्वभ्रे पततीत्येतमेवंविधं संदेहं मम विनाशयितुमर्हसि । यतस्त्वत्तः सर्वसंसारिगतिवेदिनः सर्वज्ञादन्योऽस्य[2] यथोक्तस्य संशयस्य परिहर्ता

१ राना १–' गति ' नास्ति. २ राशा १–' अस्य ' नास्ति.

न संभाव्यते। यत उक्तं भगवता, 'बहूनि मे व्यतीतानि' इत्यत्र श्लोके सर्वजन्तूनां नानागतिवेदित्वम् ॥

अथैवंविधसंशयच्छेदाय,

श्रीभगवानुवाच।

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।**
**न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति ॥ ४२ ॥**

तस्यैवंविधस्य भोगापवर्गलक्षणासिद्धिबीजभूतश्रद्धागुणसंस्कृतचित्तस्य पुंसः क्वचिदपि विषये विनाशः सर्वदुर्गतिहेतुज्ञानभ्रंशलक्षणस्तिरोभावो न विद्यते। क्व न विद्यते? इहामुत्र वा। इहेति दृष्टानुश्राविकभोगाधिकरणे संसार इत्यर्थः। अमुत्रेत्येतस्मादन्यत्र स्वात्मप्रतिष्ठाहेतावपवर्ग इत्यर्थः। यतः कल्याणवान् कुशलाभिनिवेशी न कश्चिद् दुर्गतिमज्ञानदूषितत्वाद् दुष्टां योनिं प्राप्नोति। श्रद्धावतश्च कल्याणकारित्वमवश्यमेव स्थितम्। श्रद्धा हि नाम परमेश्वरप्रसादकल्पद्रुमस्य बीजकणिका, तं भोगापवर्गलक्षणफलसंपत्तिसमृद्धमकृत्वा न निवर्तते, केवलं मृदुमध्यादिमात्रत्वादितारतम्यात्कालविशेषापेक्षिणी स्वकार्यं निवर्तयति ॥

यत एवमतः,

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४३ ॥**
**अथवा योगिनामेव जायते श्रीमतां कुले।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४४ ॥**
**तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्।**
**ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन ॥ ४५ ॥**
**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन्।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४६ ॥**
**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४७ ॥**

[शां. पा. १-कुले भवति धीमताम्. २-°देहिकम्. ३-यतते च ततो भूयः. ४-सः]

योगभ्रष्टो यथोक्तज्ञाननिष्ठतया शास्त्रविहितस्वकर्मानुष्ठानलक्षणात्समाधेर्भ्रष्टः, परमेश्वरसमापत्तिलक्षणं फलमप्राप्यैव विच्युतः सन्। श्रद्धाबीजे सत्यपीश्वरेच्छा-

वशादेव संप्रति तीव्रसंवेगाभावाद्यत्नादिसहकारिसामग्रीवैकल्याद्धि कालान्तरपेक्षिफलः सत्पुण्यकृतां प्रकृष्टयज्ञदानतपःप्रभृतिशुभकर्मकारिणां संबन्धिनो लोकांस्तत्कर्मोचितभोगादिकरणभूतानि भुवनानि प्राप्याऽऽसाद्य, तत्र च तत्कर्मानुरूपाः शाश्वतीः समाः सहस्रसंख्यानि वर्षाण्युषित्वा निवासमनुभूय ततस्तादृशकर्मफलोपभोगान्ते कर्मभूमावस्यां शुचीनां श्रीमतां शुद्धाभिजनकर्मणां लक्ष्मीवतां कुलेऽन्वयेऽभिजायते जन्म लभते। येन भोगाभिवाञ्छालेशकलुषाचित्तत्वादसम्यगनुष्ठितात्कर्मयोगाद्भ्रंशः प्राप्तस्तस्यैषा गतिर्निर्दिष्टा। यस्य त्वपवर्गप्रवणत्वेऽपि सति कुताश्चित्प्रतिबन्धात्कर्मयोगः सम्यङ्न निवृत्तः स इमां गतिमाप्नोतीति पक्षान्तरोपन्यासेनाऽऽह। अथवा योगभ्रष्टो योगिनां यथोक्तकर्मसमाधिनिष्ठानामत एव धीमतां प्रकृष्टज्ञानयुक्तत्वात्प्रशस्यबुद्धिमतां कुलेऽन्वयेऽभिजायते समुत्पद्यते। ईदृशमेतदेवंविधानां योगिनां कुले जन्म दुर्लभतरम्। कर्मयोगभ्रष्टमन्तरेण न केनचित्प्राप्तुं शक्यम्। तस्मिंश्च जन्मनि तं बुद्धिसंयोगं तादृशं बुद्ध्या ज्ञानसंस्कृतया धिया संबन्धं लभते। कम्? तं पौर्वदैहिकम्। पूर्वस्मिन्देहे भवम्। यत्र ज्ञानक्रियासमुच्चयानुष्ठानरूपो योगस्तेनाऽऽश्रितः सन्न निर्वाहितः। तत्र किल तथाविधयोगसमाश्रयणहेतुभूतज्ञानसंस्थितया बुद्ध्या संबन्धोऽस्याभूदेव। स च परमेश्वरानुग्रहं विना न भवति। स च परमेश्वरानुग्रहो नादत्तफलो विरमति। अतः कुतश्चिद्विघ्नलेशात्कंचित्कालं विलम्ब्य पुनरभिव्यज्यत एव। ततस्तद्बुद्धियोगमाहात्म्याद्भूयः पुनरपि प्रयत्नमारभते। संसिद्धिनिमित्तं योगफलावाप्त्यर्थं प्रयत्नविशेषमेतत्। यस्मात्तेनैव पूर्वजन्मसंबद्धेन मन्देनाप्यभ्यासेन योगविषयेण संस्कारात्मनाऽवस्थितेनावशोऽप्यनिच्छन्नपि ह्रियतं आत्मसात्क्रियते। कस्मात्तेनाभ्यासयोगेन ह्रियत इत्याह। यस्मात्कर्मसमाधिलक्षणस्य योगस्य जिज्ञासुरपि स्वरूपं ज्ञातुकामो हि शब्दब्रह्म शास्त्रात्मकं तत्त्वमतिवर्ततेऽतिक्रामति। निश्चयाभावाद्योगविषया प्रवृत्तिरेव न संभवति। संशयितस्य च शास्त्रमुपकारकम्। अतो योगजिज्ञासुः शब्दब्रह्मातिवर्तत इत्युक्तम्। स पुनर्योगी प्रयत्नादुद्योगाद्यतमानो योगमवतिष्ठंस्तदनुष्ठानसंस्कारवशाच्च संशुद्धकिल्बिषः प्रक्षालिताज्ञानमयकलङ्को बहुभिर्जन्मभिः परां काष्ठामाधिरूढे तादृशे ज्ञाने ततोऽनन्तरं संसिद्धः सम्यक्प्राप्तप्रापणीयः परां गतिं परमात्मसमापत्तिलक्षणां प्रकृष्टां भूमिं प्राप्नोति। यतः परं गम्यान्तरं न विद्यते॥

---

१ राशा १–°संस्कृतया.

एवंविधस्य कर्मयोगिनः प्रशंसार्थमाह ।

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४८ ॥**

सुतीव्रस्यापि तपोमात्रस्यान्तवत्फलत्वात्तपस्विभ्यो योगी नित्यनिरुत्तरानन्दमयसमाधिमानधिकः प्रकृष्टः । ज्ञानिभ्योऽपि केवलज्ञानमात्रशरणेभ्यस्तथा कर्मिभ्यो यज्ञादिकेवलकर्मवद्भ्योऽधिकः । तस्मात्त्वं यथोपदिष्टं योगं स्वीकृत्य सर्वोत्कृष्टो योगी भव ॥

ये केचन योगिनो दर्शनभेदात्संभवन्ति तेषामप्ययमेवंविधो योगी प्रकृष्टतम इति प्रतिपादयन्नध्यायमुपसंहरति ।

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४९ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु षष्ठोऽध्यायः ॥ ६ ॥**

समस्तानां योगिनां मध्ये स योगी युक्ततमोऽतिशयेन युक्तः समाहितो मम मतः । कोऽसौ । यः श्रद्धावान् सर्वसिद्धिहेतुभूतया श्रद्धया युक्तः सन्मद्गतेनान्तरात्मना यथाप्रतिपादितज्ञानगत्या मां परमात्मानमीश्वरमेकं तत्त्वं परमोपेयतया गतेन प्रपन्नेनान्तरात्मनाऽन्तःकरणेन भजते, वाङ्मनःकायव्यापारान्मत्परानेव कुर्वन्मद्भक्तो भवति । यथोक्तज्ञानविधिना यथोक्तमत्स्वरूपावगमपूर्वं मामेव य उपास्ते स एव समाहिततम इत्योम् ॥

याता यस्याङ्गभावं दधति यदि परं योगतामन्ययोगा-
स्तं योगं ज्ञानकर्मव्यतिकरसुकराभ्यासवैराग्यगम्यम् ।
सम्यक्संप्राप्तकामैः परमगुरुरिति श्रद्धया पर्युपास्यः
षष्ठोऽध्यायोऽयमार्यैरवहितमतिभिस्त्यक्तसर्वान्यकार्यैः ॥

श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे षष्ठोऽध्यायः ॥ ६ ॥

## ॥ अथ सप्तमोऽध्यायः ॥

ॐ एवं यदङ्गभावमापन्नानां योगान्तराणां योगत्वसिद्धिस्तस्य ज्ञानकर्मसमुच्चयरूपस्य निरतिशयस्य योगस्यानुष्ठातुर्मद्भक्तस्य कर्मयोगिनोऽपि सवस्तव ज्ञेयशेषो विद्यत एवेत्यात्मन एव जगत्कारणत्वादि प्राक्सूचितप्रायं ज्ञेयान्तरं प्रतिपादयितुं,

श्रीभगवानुवाच ॥

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

[ शां. पा. १–मदाश्रयः. ]

षष्ठाध्यायपरिसमाप्तौ मद्गतेनान्तरात्मना यो मां भजति स युक्ततम इति यदुक्तं, तदेव मय्यासक्तमनाः समाश्रितश्चेत्यनेन पदद्वयेनेहानूदितम्। ततश्च मत्स्वरूपं ज्ञात्वा मां भजंस्त्वं यथा येन प्रकारेण संदेहरहितं कृत्वा समग्रं संपूर्णस्वरूपं मां ज्ञास्यसि प्रतिपत्स्यसे तदिदानीं शृणु। अयं हि जगत्प्रपञ्चः स्वतःसिद्धनित्यप्रधानपरिणामतया कैश्चित्प्रतिपन्नोऽन्यैः परमाणुपाकप्रभवत्वेन, इतरैः क्षणिकज्ञानसंतानभ्रमजन्यतया परैश्चान्यथा चेति किमत्र तत्त्वं स्यादित्यस्ति संशयस्यावकाशः। तन्निश्चयार्थं चेदं वक्ष्यमाणमवधारय ॥

तदवधारणादेव च समग्रं मत्स्वरूपज्ञानं भविष्यतीत्याह।

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।**
**यज्ज्ञात्वा नेह भूयोऽन्यत्** — 

**यज्ज्ञात्वा ने पुनः किंचिज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

[ शां. पा. १–नेह भूयोऽन्यत्. ]

इदं समनन्तरप्रस्तुतं जगत्प्रपञ्चपरमार्थप्रतिपत्तिविषयं मत्स्वरूपं साकल्यसंवित्तिविषयं च ज्ञानमुपपत्त्युपन्यासरूपं शास्त्रं तदुभयसाक्षात्कारहेतुना विशिष्टेन ज्ञानेन सहितमशेषतः कथयिष्यामि। यत्प्रातिपद्य भूयो बोद्धव्यं वस्त्वन्तरं न किंचिदवशिष्यते। यदवगमाद्विदितसकलवेद्यः कृतकृत्यो भविष्यसीत्यर्थः ॥

एतयोश्च ज्ञानविज्ञानयोर्मत्संवेदनमेव फलं पर्यवस्यति। तच्च परमरहस्यत्वान्न सर्वत्र सुलभम्। यतः,

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

---

१ राशा १–ॐ स्वस्ति प्रजाभ्यः.

इह निरवधौ प्राणिसर्गप्रपञ्चे मनुष्यत्वमेव तावद् दुर्लभम् । ते हि मनुष्याः कर्मभूमिलब्धजन्मानश्चतुर्वर्गसिद्ध्यधिकारिणः । तेषां मनुष्याणां सहस्रेषु मध्ये कश्चिदेव तथाविधकर्मपरिपाकवशादुत्पन्नसंसारविरागः सिद्धये पुनर्जन्माभावलक्षणफलप्राप्तये यतते, तत्तदुपायाहरणप्रयत्नपरो भवति । न तु तावत्सिद्धिं प्राप्नोति । तेषामपि यतमानानां सिद्धानां तत्तद्दर्शननिश्चितलक्षणां सिद्धिं प्राप्तानामपि मध्ये कश्चिदेव प्रकृष्टपुण्यपरिणामवशादवाप्तमदनुग्रहाविर्भावितयथोक्तनिरतिशयश्रद्धाभक्तिप्रसाधितविवेकजज्ञानप्रभावाद्यथाप्रतिपादितस्वरूपं मां वेत्ति, आत्मत्वेन प्रतिपद्यते ॥

तज्जगत्स्वरूपप्रतिपादनपूर्वमुपदेष्टुमाह ।

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

योऽहं सततचिन्मात्रस्वरूपाप्रच्युत एवाचिन्त्यनिजमायाशक्तिमाहात्म्याज्जडचेतनाविभागेन द्विरूप इवाऽऽभासमानो जगत्क्रीडामिमां निर्वर्तयामि, तस्य मे सुखदुःखमोहात्मकतया सर्वभावानुगतसत्त्वादिगुणत्रयरूपा जडा या प्रकृतिः सेयमष्टधा—अष्टाभिः प्रकारैर्भिन्ना विभागं प्राप्ता । के तेऽष्टौ प्रकाराः ? भूमिरित्यादि । तत्र भूम्यादिभिः पञ्चभिरप्ययं क्रमनिर्दिष्टैः प्रकारैः कारणभूतानि सूक्ष्माणि निर्दिष्टानि वेदितव्यानि । तैश्च कार्यभूतानि पृथिव्यादीनि पञ्च स्थूलभेदान्येकैकापायपञ्चादिगुणानि संगृहीतानि । बुद्धिकर्मेन्द्रियवर्गश्च दशसंख्य इति भूम्यादिभिः पञ्चभिस्तत्त्वविंशतिराक्षिप्ता । मनश्च सर्वेन्द्रियनायकम्, बुद्धिर्निश्चयात्मिका । अहंकारो देहादिष्वनात्मभूतेष्वात्मप्रत्यय इति त्रिविधमन्तःकरणमिति त्रयोविंशतिसंख्यः कार्यकारणवर्गस्तदनुगुणं च त्रैगुण्यात्मकं प्रधानं कारणमिति तत्त्वचतुर्विंशतिरूपा जडत्वेनावभासमाना प्रकृतिः । इयं चापरा वक्ष्यमाणजीवभूतप्रकृत्यपेक्षया स्थूला । यतोऽसौ जडा वेद्या परतन्त्रा विनश्वरी सती चेतनाद्वेदकात्स्वतन्त्रान्नित्याच्च जीवतत्त्वादपकृष्टा । अत एवाऽऽह । इत उक्तायाः

---

१ राना १-तत्त्वदर्शन°.

प्रकृतेः पुनरन्यां विलक्षणां परां प्रकृष्टां जीवभूतां मायावशादन्योन्याभिन्नत्वेनावभासमानक्षेत्रज्ञत्वं मामां विद्धि जानीहि । कीदृशीं ? यया कर्तृभूतयेदं यथोक्तं तत्त्वव्रातमयं जगद्धार्यते । जीवलक्षणपरप्रकृतिनिबद्धा जगत्पदार्थस्थितिः ॥

एवं मायावभासितपरापरभेदेन जडचेतने द्वे प्रकृती ।

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**

एते यथाप्रतिपादितस्वरूपे मदीये प्रकृती योनिरुत्पत्तिकारणं येषां तादृशि सर्वाणि भूतानीत्युपधारय निश्चयेन बुध्यस्व । जीवभूता हि प्रकृतिश्चित्स्वरूपत्वाव्याभिचारात् । वस्तुतः परमकारणात्परमात्मनो मत्तः परमेश्वरादाभिन्नाऽपि मन्मायावशाद्भेदमिवाऽऽपन्ना जडया प्रकृत्याऽनादित्वेन संबद्धा सती तामेव गुणात्मिकां प्रकृतिं महदादिभावेन परिणतामात्मत्वेनाभिमन्यमाना स्वसुखादिसाधनभावेन चेतनाचेतननानाभावरूपं विषयमपेक्षत इत्यादिप्रकृतिपुरुषसंबन्धौ जगत्कारणमित्येते प्रकृती सर्वभूतानां योनिरित्युक्तम् । तथा च वक्ष्यति ।

यावत्किंचित्संभवति सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ इति ।

एवं जगत्कारणभूतयोरेतयोर्मत्संबान्धिन्योः प्रकृत्योर्मन्माययैवैवमवभासने कारणमिति ।

**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

कृत्स्नस्य सर्वस्य निरवधिचराचरभूतभेदमयस्य जगतः प्रभवः प्रलयश्चाहम् । मत्त एवैतत्प्रभवति, मय्येवैतत्प्रलीयत इत्यर्थः । संकल्पमात्रोद्भावितया माययैव ते जडाजडे प्रकृती आभास्येते । तन्निबन्धनौ स्वर्गसंहारावित्येतयोर्जगत्प्रभवप्रलययोरहमेवमूलकारणमित्यर्थः ॥

अत एव ममैव परमकारणत्वात्स्वरूपलाभे कारणान्तरापेक्षा नास्तीत्याह ।

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

जडा प्रकृतिरपरेत्युक्ता । तदपेक्षया जीवभूता परा, इत्येतयोस्तु कारणभूतोऽहं परतर इति मत्तोऽन्यत्किंचिद्वस्त्वन्तरं न संभवति । यन्मत्कारणत्वेन परतमं स्यादहमेव कारणं निरुत्तरमित्यर्थः । यत इदं सर्वं भावजातं मयि सर्वाश्रयभूते

---

१ राशा १·२– 'स्व' नास्ति.

प्रोतमनुस्यूतम् । कथमेकास्मिंस्तन्तौ यथा परस्परपृथग्भूता अपि मणिगणा व्यवस्थितिमनुभवन्ति, तथा मन्मायाभावितान्योन्यभेदाश्चराचरभावा मय्येवैकस्मिन्नाश्रये तिष्ठन्तीत्यर्थः ॥

ननूभे एते जडाजडे प्रकृती । प्रकृतिश्च स्वभाव उच्यते । तत्कथमद्वयचिन्मात्रस्वरूपस्य जडात्मकत्वाद्विनश्वरश्चेतनोऽपि परम्परावच्छेदान्नानारूपस्वभाव उपपद्येतेति वास्तवं प्रमात्रद्वैतं प्रतिपादयितुमाह ।

**रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**
**पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**
**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**
**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

[ शां. पा. १–प्रभाऽस्मि. २–पुण्यो गन्धः पृथिव्यां च. ३–°वतामस्मि. ]

संवेद्यमानाः सन्तः सर्वभावास्तं तमात्मानं लभन्ते संवेद्यमानताव्यतिरेकेण प्रकारान्तरेण कस्यांचिदवस्थायां केषामप्यनुपलम्भात् । इत्थं वास्तव एक एव संवेदिता संविदन्नेव भावान्सृजति । ततो भावरूपा संवेदितुरेव शक्तिर्विजृम्भते । नान्यत्तव्द्यतिरिक्तं किंचिदिदम् । अतः पराऽपरेमे प्रकृती स्वभावभूते इति स्वतःसिद्धं प्रमात्रद्वैतं गर्भीकृत्योपक्रम एव यदुक्तम्–तद्रसोऽहमित्यादिना श्लोकचतुष्टयेनोपपादयति । तत्र यो यस्य प्राधान्येन वर्तते गुणः स एव तस्याऽऽत्मेत्यपां रस एवाऽऽत्मा स चाहं, यत उक्तेन न्यायेन रस्यमानतयाऽऽपो रसरूपमात्मानं लभन्ते । ततो रसयितुरेव रसात्मिका शक्तिर्ममैव चानुभवितृत्वलक्षणस्वभावाव्यभिचाराद्रसयितृत्वम् । ततोऽप्स्वहं रस इत्युक्तम् । यथाऽप्सु रस आत्मत्वेन व्यवस्थित एवं पृथिव्यां गन्धः । शशिरविविभावसुषु तेजोलक्षणभूतभेदेषु प्रकाशस्तेजःशब्दाभिहितो रूपगुण आत्मत्वेन व्यवस्थितः । तथा खे नभसि शब्दगुणः । एवं वायौ स्पर्शगुणोऽप्यत्र परिसंख्येय इति भूतपञ्चके गन्धादि-

१ राशा १–सर्वे.

प्रधानो गुणात्मना पूर्वोक्तेन न्यायेनाहं व्यवस्थित, इति पूर्वोक्तेन विभागेन भूतपञ्चकसंगृहीततत्त्वविंशतिरूपजडप्रकृतिविभागे मम स्वभाव इत्युपपादितम् । पुण्यशब्दश्चात्र प्राधान्यापेक्षया सर्वगुणेषु विशेषणत्वेनानुवर्तनीयः । एवंभूतेषु प्राणिषु धर्माविरुद्धः कामः संकल्पो मनोऽहम् । तथा नृषु जीवेषु पौरुषमहंकारात्मकं पुरुषत्वमहमेव । तथा बुद्धिमतां बुद्धिरहमेवेति मनोहंकारबुद्धिलक्षणमन्तःकरणं पुरुषाणां प्रधानं धर्मत्रयं पूर्वोक्तेन न्यायेनाहमेवेति त्रिभिरेतैः सहितस्त्रयोविंशतिभेदः कार्यकारणवर्गश्चतुर्विंशेन प्रधानेनानुगतो जडप्रकृतिप्रपञ्चो ममैव स्वभाव इति व्यवहितैः पादैः प्रतिपादितम् । एवमेव सर्वभूतेषु जीवनं प्राणनं प्रधानं तदप्यहमेव । तथा सर्ववेदेषु प्रणव ओंकारः । स्वोदितविकृतत्वोद्यात्मकोऽहमेव[1] । स हि प्रकृतिभूतत्वात्सर्ववेदेषु प्रधानम् । तस्य विकारभूता हि सर्वे वेदाः । तथा सर्वक्रियासु तपोमयी क्रिया प्रधानमतस्तपस्विषु वर्तमानं तपोऽहमेव । कामरागविवार्जितं बलं बलवतां प्रधानं, तदपि पूर्वोक्तेन न्यायेनाहमेव । तथा तेजस्विनां प्रभावातिशययुक्तानां तेजः प्रभावो मुख्यस्तदप्यहमेव । एवमनेन क्रमेण सर्वभूतानां बीजं हेतुरहमेवेति जडचेतनभेदेन द्विप्रकारा प्रकृतिर्ममैव स्वभाव इत्यनेन प्रकारेण विप्रकृष्टसमन्वयैः पदैः[2] प्रतिपादितम् । एवं रसोऽहमित्यादि प्राधान्यविवक्षयोपलक्षणत्वेन प्रतिपादितम् ॥

परमार्थतस्तु पूर्वोक्तेन न्यायेन तत्पदार्थजातं किंचन न संभवति यत्राहमिति प्रतिपादयितुमाह ।

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेह तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

[ शां. पा. १–एवेति. ]

अपर्यन्ते भावप्रपञ्चे प्रकृतिपरिणामरूपत्वात्सर्वस्य भावस्य त्रैगुण्ये स्थिते केचित्सत्त्वप्रधानगुणीभूतरजस्तमस्काः । केचिदेवमेव रजःप्रधानाः, केचित्तमःप्रधाना इति तारतम्यभेदानन्त्यमपेक्ष्य त्रित्वेन संगृहीता इति । ये केचन सात्त्विका राजसास्तामसाश्च भावाः संभवन्ति तान्पूर्वोक्तेन न्यायेन मत्त एव [3]परमकारणाज्जातान् जानीहि । किंतु तेषु मत्कार्यज्ञेयरूपतया लब्धात्मकेषु भावेषु

१ राशा १–°कृतध्वन्यात्मको. २ राना १–'पदैः' नास्ति. ३ राशा १–'प्रकाशरूपात्' इत्यधिकम्.

सत्सु नाहं भवामि, न तत्सत्ताधीनसद्भावता मम स्वभावसिद्धनित्योपलब्ध-मात्रधर्मकस्य विद्यते । ते तु तथारूपा मयि सति भवन्ति । उक्तोपपत्त्या मत्सत्ताधीनसद्भावाः सर्व एव भावा इत्यर्थः ॥

नन्वेवं स्वशक्तिमात्रोपादानतया सर्वकर्ता परमेश्वर एक एवायमात्मा, तत्कुतोऽयं जीवानां व्यामोहो यदेते कारणान्तरलब्धात्मकं किंचिदेव स्वविषयभूतं वस्तु जानन्ति कुर्वन्ति चेत्यत्र वक्ष्यमाणं स्वमायाशक्तिवैभवं गर्भीकृत्योत्तरमाह ।

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

सर्वं जगत्सकलो जीवलोक एभिः सात्त्विकादिभिः पूर्वं प्रतिपादितैर्गुणमयैः सुखदुःखमोहपर्यवसायिप्रतिपत्तिभिर्भावैः संवेद्यैः पदार्थैर्यथास्थितस्वभावप्रत्यवमर्शव्यवधायकतया मोहितं जनितान्योन्यभिन्नदेहाद्यात्मप्रत्ययलक्षणाज्ञानतिमिरं सर्वेभ्यो भावेभ्यो वेद्यैकस्वरूपत्वादानित्येभ्यः परं व्यतिरिक्तस्वभावमत एवाव्ययमविद्यमानयथाप्रतिपादितस्वरूपप्रच्युतिलक्षणक्षयं मां परं तत्त्वं न जानाति न प्रतिपद्यते ॥

ननु प्रबन्धतो यथाप्रतिपादितेन प्रकारेण त्वमेव परमेश्वरः परमात्मैकं तत्त्वं विजृम्भसे । तत्क एते गुणा नाम यन्मयैर्भावैर्मोहितं जगन्मां न जानातीत्युक्तमत्राऽऽह ।

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

[ शां पा. १–मायामेतां तर°. ]

यद्ब्रवीषि क एते गुणा नाम । एषा हि गुणमयी दैवी माया । इत्थं देवनात्क्रीडनाद्देवस्य सतो मम संबन्धिन्यसत्यमपि सत्यवदाभासयन्ती मदीया शक्तिर्मम किल पारमार्थिकी परा शक्तिरेकैव, साऽहमिति यथोक्तं मत्स्वरूपं परामृशन्ती विद्येत्युच्यते । इदमिति तु परामृशन्ती, मम माया इति व्यवह्रियते । इदमिति तु परामर्शो व्यतिरिक्तवेद्यार्थोद्भावनेन स्वरूपं लभते । तच्च वेद्यत्वं जडचेतनभे-

---

१ राशा १–परतत्त्वं. २ राना १–संबन्धम्; राशा १·२–असत्यपि. ३ राशा १–' मत् ' इत्यत्र ' मम '. ४ राना १–' इति ' नास्ति.

देन संग्रहतो द्विप्रकारकमेवावान्तरभेदकल्पनया तं तमपि सुखदुःखमोहभेदात्त्रिविधप्रत्ययरूपतया वेद्यत्वेन पर्यवस्यन्सत्त्वादिगुणत्रयात्मकतया सर्वं संगृहीतम् । अतो विश्वभावमयी गुणमयी मम मायेत्युक्तम् । अतः क्रीडैकप्रयोजनस्यापि ममेच्छयैव गुणमयत्वेन विजृम्भमाणा न केनाचित्परेणातिक्रमितुं शक्येति दुरत्ययेत्युक्ता । ननु यद्येवमेषा न केनचिदन्यथाकर्तुं पार्यते, तत्सर्वथा संसारविभ्रमापरमे प्रसक्ते निरर्थकमेवायमपवर्गमार्गप्राप्त्युपायोपदेश इत्यत्राऽऽह । मामेवैकं यथोक्तस्वरूपं परमेश्वरं परमात्मानं मदनुग्रहेच्छाप्रबोधिताः सन्तो ये प्रपद्यन्ते, मदभेदसमापत्तिपर्यवसायिना यथोक्तेन ज्ञानेन समाश्रयन्ते, त एनामतितरन्त्यतिक्रामन्ति । अहमेवैकः सततविकस्वरप्रकाशात्मा प्रभाकर इव तमिस्रयाऽनया न कदाचित्संस्प्रष्टुं शक्यः । ततो मत्स्वरूपसमापन्नत्वाद्गलितदेहाद्यहंप्रत्ययतयाऽहमेव संपन्नः । एवं परमार्थनिःस्वभावभावभेदाभाससंतमसमयीं मायामतिलङ्घितुमलम् । न तु तस्यास्तदितरे मोहनिद्रानिमीलितनिजदृष्टयः स्वरूपमपि संवेदितुं शक्ताः ।

ननु कस्मात्त्वां सर्वः कश्चिन्न प्रपद्यत इत्याह ।

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

मदिच्छयैवाऽऽसुरं रजस्तमोबहुलं भावं सतां सर्गमापन्ना अत एव मायया यथोक्तस्वरूपयाऽविद्ययाऽपहृतज्ञाना आक्षिप्तपरमार्थबोधास्ततश्च दुष्कृतिनः, संसारश्वभ्रपातपर्यवसायिज्ञानशून्यदुष्टक्रियावन्तोऽत एव मूढा विचेतसो नराधमाः पुरुषेषु मध्ये निकृष्टा मां परमात्मानं न प्रपद्यन्ते नाऽऽश्रयन्ते ॥

ये तु मदिच्छावशादेव दैवसर्गभाजः सन्तो मदनुग्रहेच्छाविर्भावितविद्याशक्तिप्रबोधिताः कैवल्यप्राप्तिफलपुण्यक्रियायुक्ताः प्रबुद्धास्ते,

**चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

[ शां. पा. १–°कृतिनोऽर्जुन. ]

अनुग्रहीतृतत्त्वसाम्येऽप्यनुग्रहेच्छातीव्रादितारतम्याच्च चतुर्विधाः प्रस्तुतविभागेन चतुष्प्रकारा जना मां भजन्ते, मद्भक्ता भवन्त्यत एव ते सुकृतिनः । तेषां

---

१ राशा १–°त्ययेत्यर्थः. २ राना १–मदेकपर्य° व°. ३ राशा १–°स्वरपरप्र°. ४ राशा २–एतां. ५ राशा १·२–°लङ्घयितुम्. ६ राना १–यत्ते.

चातुर्विध्यं कथयति—आर्तो इत्यादिना । तत्राऽऽर्तो मां भजते यो मृदुतरमदनुग्रहौषधेन विशीर्यमाणसंसारमोहसंनिपाततया चिरात्संवेद्यतापन्नदुःखत्रयवेदनाकदर्थ्यमानमानसस्तन्निवृत्तिमिच्छन्सकललोकप्रसिद्धतत्तत्संज्ञाकारादिस्थूलोपायसमाश्रयणेन मद्भक्तो भवति । ततः क्रमेण वर्धमानसमावेशलेशवशाज्जिज्ञासुर्यः समुपजायमानजगद्भावहेयोपादेयविचारः सन्कोऽहं, किमिदं शरीरेन्द्रियविषयादिमयं महामोहजालम्, कथमतो बन्धनात्परिमुच्येयेति तत्त्वं ज्ञातुमिच्छुर्नानाशास्त्रशुश्रूषाश्रवणाद्यभियुक्तमतिः संशयापन्न एव मत्सपर्यापरो भवति । अत एव तत्त्वजिज्ञासाभिनिवेशप्रकर्षादाविर्भवद्विवेकवासनालोकविलीयमानविपर्ययप्रत्ययतीव्रतिमिरत्वात्प्रथमानयथास्थितहेयोपादेयपदार्थप्रविभागोऽर्थार्थी मां भजते । यः शास्त्राभ्यासवशादुत्पन्ननिश्चयः सन्निदमेव परमं फलमित्युपादेयतयाऽऽत्मतत्त्वलक्षणमर्थं वस्त्वर्थयतेऽभिकाङ्क्षयति । ततो ज्ञानी मां भजते । यः सकलविचिकित्साविच्छेदविध्वस्तमतिः स्वीकृतयथोक्तज्ञानलक्षणपरमोपायः सन्यथोक्तस्वरूपमव्यवधानेन मामेवोपास्ते ॥

इत्येषां चतुर्णां मध्ये ज्ञानिनः प्रकर्षं प्रतिपादयितुमाह ।

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

तेषामार्तादीनां मध्ये ज्ञानी यथोक्तज्ञानवान्विशिष्यते । यतोऽसौ सर्वतः स्थूलात्सूक्ष्माच्च विनिवृत्तोपादेयप्रतिपत्तिः परामुपायकाष्ठामधिरूढोऽत एव वेदकैकस्वभाव एकस्मिन्नपि परस्मिंस्तत्त्वे भक्तिमानत एव नित्ययुक्तः सर्वास्ववस्थास्वविच्छिन्नसमाधानो यस्मात् । तस्यैवंविधस्य ज्ञानिनोऽहमित्यर्थः । अखिलजगत्पदार्थसार्थपरिहारेण प्रियः प्रीतिकारणम् । स चापि तथैव मम प्रियः । इत्यन्वयव्यतिरेकप्रतिपादनपरमेतत् ॥

ननु ज्ञानिन एव प्रकृष्टत्वे सत्यार्तादयः किं बहिष्कृता एवेत्याह ।

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

[ शां. पा. १—मतम्. २—मामेवानु°. ]

---

१ राना १—°संवेश°. २ राशा १ °बोधवान्.

त आर्तादयो यद्यप्युत्तरोत्तरविशिष्टत्वेनान्योन्यभिन्नरूपास्तथाऽपि भक्तिमूर्त्या कृतोदयया परयैकया मच्छक्त्याऽधिष्ठिताः सन्तः सर्व एवोदारा उदारचेतस औदार्यलक्षणेनैकेन गुणेन[2] युक्ताः । किंत्वार्तिजिज्ञासार्थार्थितादशासु ये वर्तन्ते ते व्यतिरिक्तार्थालम्बिनो ज्ञानवान्पुनरहमित्यभेदेन मत्स्वरूपैकालम्बन इत्यात्मैवासौ ममाभिमतः । एतदेव प्रकटयति——यस्मात्स ज्ञानी ममैव नान्यस्य व्यतिरिक्तस्य वस्त्वन्तरस्यानुत्तमां निरतिशयगतिं प्राप्तिहेतुमभेदज्ञानलक्षणं पन्थानमास्थितः समाश्रितः ॥

यतो युक्तात्मा मय्येव समाहितान्तःकरणोऽयमतः,

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

आर्तत्वाद्यवस्थाजुषां भूयसां जन्मनां शरीरपरिग्रहाणामन्ते परिक्षये सर्वमिदं चराचरं भावजातं परमार्थसततनिर्विकारसामान्यसंविद्रूपो भगवान्सर्वत्र वसनात्सर्वस्य वा तत्र वसनाद्वासुदेव इति सर्वाद्वयत्वनिश्चयेन मां परमकारणं प्रतिपद्यते । स चैवंविधः सर्वोत्कृष्टस्वभावः सुतरां दुर्लभो दुष्प्रापो मनुष्यकोटिष्वपि कदाचित्[3] तादृशो महानुभावो लभ्यते न वा ॥

कस्मात्तथाविधः सुदुर्लभ इत्यत्र स्वेच्छामात्रमेव कारणं प्रतिपादयितुमाह ।

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**
**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**
**स तया श्रद्धया युक्तस्तस्या राधनमीहते ।**
**लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥**
**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

इह यथाप्रतिपादितप्रकारेण नानाजीवभूता मत्प्रकृत्यात्मकाः पुरुषा मदिच्छोद्भावितकार्यकारणभावया गुणात्मिकया प्रकृत्या स्वया तत्तत्पुरुषभेदेन प्रतिनियतकार्यकारणात्मना प्रत्येकं स्वत्वमापन्नया नियताः प्रविभक्तशरीरेन्द्रि-

---

१ राशा १–उदात्त". २ राना १–' गुणेन ' नास्ति. ३ राशा २–ना १–' कदाचित् ' नास्ति.

यविषयाद्यात्मकतया परस्परभेदेन नियन्त्रिताः सन्तः सुखाद्यात्मकं प्राकृतं रूपमेवाऽऽत्मत्वेन प्रतिपन्नाः । अत एव स्वत्वापन्नतत्तत्प्रकृत्युचितैस्तैस्तैः क्रियाफलतया प्राप्यत्वेन काम्यमानैः कामैर्भोगैस्तत्तल्लोकान्तरभोग्यैर्हृतज्ञाना मुषितपरमार्थलक्षणैकतत्त्वविषयबोधाः सन्तोऽन्यदेवता अन्या आत्मलक्षणपरमदैवतव्यतिरिक्तहरिहराहिरण्यगर्भादित्यप्रभृतीस्तत्तत्स्वाभिमतनानाफलदायित्वश्रुतप्रभावाः, परस्परभिन्नात्मतयाऽवगम्यमानाः प्रतिपद्यन्ते भजन्ते । कथम् । तं तं तत्तद्दर्शनप्रसिद्धं नियमम् । इतिकर्तव्यताविशेषरूपां व्यवस्थामाश्रित्यावलम्ब्य । इत्थं स्थिते यो यः क्षेत्रज्ञः फलाभिलाषानुगुण्येन यां यां चतुर्भुजत्रिनेत्रत्वादिविभक्तविशेषां तनुं मूर्तिं भक्तः समाश्रितः सन् । श्रद्धया तावन्मात्रफलदायिभिन्नदेवताविषयया तत्तत्फलप्राप्तये पूजयितुं वाञ्छति । तस्य तस्य तामेव तावन्मात्रफलदायिभिन्नदेवताविषयां श्रद्धां, नान्यां परामेकतत्त्वविषयामचलां तद्विषयत्वेन स्थिरामहं ददामि । मत्त एव सात्त्विकादिसर्वभावोद्भवस्य प्राक्प्रतिपादितत्वात् । स तया मद्दत्तया श्रद्धया तस्य तत्तदाकृतेर्दैवताविशेषस्याऽऽराधनं प्रसादनमीहते, मनोवाक्कायैश्चेष्टते । ततश्च देवताविशेषादाराधितात्सतः पूर्वोक्तोपपत्त्या मयैवैकेन पारमार्थिकेन कर्त्रा विहितान्निसृष्टान्हिताननुकूलान्कामान्भोगाल्लँभते । किंतु मामेकमीश्वरं सर्वमनोरथप्रदं सम्यग्ज्ञानाभावादजानतामत एवाल्पप्रज्ञानां तेषां परिमितं भोगलक्षणं फलमन्तवदानित्यं भवति । ते ह्यज्ञानमोहिताः सन्त आत्मानं देवतां फलं च नानात्वेन प्रतिपद्यन्ते । ततश्च ये देवान्नानात्वेन प्रतिपन्नान्यज्ञादिभिरन्तवद्भिः क्रियाविशेषैर्यजन्ते प्रीणयन्ति ते देवान्यान्ति, तत्तद्देवताधिकरणभूतं तं तं देवलोकं गच्छन्ति । ये तु मां यथोक्तस्वरूपमेकं तत्त्वं यथाप्रतिपादितेन क्रमेण मदिच्छयैव प्रेर्यमाणाः सन्तः क्रमेण[1] ज्ञानित्वदशाधिरोहपर्यन्तेन भक्ताः समाश्रितास्ते मामेव परमं कारणं यान्ति, अहमित्यभेदेन समापद्यन्ते ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

[ शां. पा. १–अयं श्लोकः राम. पाठे नास्ति । २३ श्लो. टीकानन्तरं २५ श्लोक एव प्रस्तूयते । अन्यच्च, एतेन समानार्थः श्लोकोऽन्यत्र ९ अध्याये ११ तमः दृश्यते, यत्र शां. पाठे विद्यमानश्चतुर्थश्चरणः ' मम भूतमहेश्वरम् ' इत्यत्र ' राम ' पाठे ' ममाव्ययमनुत्तमम् ' इति संगृहीतः । काश्मीरीयपाठानुसारिणावभिनवानन्दवर्धनौ त्विमं २४ तमं श्लोकं स्वटीकया समर्थयन्ति । तेनास्माभिरयं श्लोकोऽत्र संगृहीतः ।

---

१ राशा १–' क्रमेण ' नास्ति.

तदित्थमासुरं दैवं च सर्गं मयैव स्वेच्छयाऽऽपादितो लोको मायाख्यया-विद्यया शक्त्या च प्रवृत्तिनिवृत्त्योर्धर्मयोर्नियुज्यमानः संसारापवर्गलक्षणं फलं प्राप्नोतीति संग्रहेण प्रतिपादयितुमाह ।

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

वैश्वरूपेऽप्यद्वयचिन्मात्रस्वरूपावस्थापरिच्युतिलक्षण ऐश्वरसमाधिर्योगशब्दे-नोक्तः । तथाविधयोगमहिम्नोत्पादिता माया मत्स्वरूपान्यथाप्रतिपत्तिहेतुः शक्ति-स्तया समावृतो व्यवहितः सन्नहं सर्वस्य मत्प्रकृतिमोहितस्याऽऽसुरस्वभावस्य जन्तोर्न प्रकाश आत्मतया न प्रत्यभिज्ञेयः । ततश्च सर्वो मूढो लोकोऽयमजम-व्ययं नित्यत्वाज्जन्मविनाशरहितं मां नाभिजानात्यात्मत्वेन न प्रत्यवमृशति ॥

यतः,

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

[ शां. पा. १–भविष्याणि. ]

शरीराण्यनित्यप्रकृतिपरिणामपर्यवसिताहंप्रत्ययत्वात्सर्वतोऽवच्छेदवर्तीनि वेद्य-दशामापन्नानि । अत एवातीतवर्तमानभाविष्यत्पदविशेषणानि भूतानि सर्वशरी-रिणोऽहं परमार्थवेदकस्वभाव एक एव वेद जानामि । मां पुनर्नित्यत्वात्कालक-लनाद्यवच्छेदविरहितमाहिमानं न कश्चिच्छरीरी[1] वेद जानाति । इत्यनेना-नन्यसाधारणवेदकैकस्वभावत्वं परस्य कारणस्य कार्यस्य च जगतस्तद्व्यति-रिक्तस्वरूपस्य वेद्यत्वमेव प्रतिपादितम् ॥

कस्मात्त्वां न वेद कश्चिदित्यत्राऽऽह ।

**इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

यत एतानि सर्वभूतानि मन्मायावशादन्योन्यभिन्नान्यनित्यशरीरात्मक-त्वाज्जन्मविनाशभाञ्जि सर्गे सृष्टौ सत्यां पारमार्थिकस्वरूपाविमर्शरूपमज्ञानं

---

१ राना १–शरीरे.

यान्ति, प्रतिपद्यन्ते । केन ? द्वंद्वमोहेन । द्वंद्वानि सुखदुःखाद्यात्मकानि, स एव मोहस्तत्त्वाप्रतिपत्तिस्तेन । कीदृशेन ? इच्छाद्वेषसमुत्थेन रागद्वेषप्रभवेण । इदमत्र तात्पर्यम् । मन्मायोद्भावितगुणमयप्रकृतिरूपसर्गसंमोहिताः सर्वप्राणिनः परस्परभिन्ना नित्यगुणपरिणामात्मकमेव जगदिदं मन्यमानाः क्वचिद्रज्यन्तः किंचिद् द्विषन्तः संसारचक्रपरिवर्तनमनुभवन्त्यतो यथाप्रतिपादितस्वरूपं मां नित्यानिर्विकारैकचित्स्वभावं परमात्मानं न भजन्ते ॥

के पुनस्त्वां भजन्त इत्यत्राऽऽह ।

येषां त्वन्तं गतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

[ शां. पा. १–त्वन्तगतं. ]

येषां पुनर्जनानां मदनुग्रहादेव प्रत्युदिताविद्याशक्तीनां सतामत एव पुण्यकर्मणां सुकृतिनां पापमज्ञानलक्षणमन्तं गतं विनाशं प्राप्तं, ते यथोक्ता द्वंद्वमोहान्निर्मुक्ता दृढव्रताः स्थिरनियमाः सन्तो मामेकं दैवतं भजन्ते, मदभेदप्रतिपत्तिपर्यन्तया सपर्यया समाश्रयन्ते ॥

इत्थं च,

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥
इति श्रीभगवद्गीतासूपनिषत्सु सप्तमोऽध्यायः ॥ ७ ॥

मां यथोक्तस्वरूपमाश्रित्य चतुर्विधया भक्त्याऽऽलम्बनीकृत्य ये जरामरणादिद्वंद्वदोषविमुक्तये यतन्ते ते सततमविलुप्तोद्योगा भवन्ति । ते च युक्तचेतसो यथोक्तसमाधिसततसमाहितमनसो ब्रह्मस्वरूपादिभेदेन, समनन्तराध्यायव्याख्यास्यमानसप्तविधविज्ञानदृशा मां विदुर्मां जानत इत्योम् ॥

गीताध्याये स्थितिमुपगताः सप्तमे सत्यरूपे
सन्तः सम्यक्फलितसुकृताः केऽपि लोके यथाऽस्मिन् ।

निःसंदेहाः सकलभुवनाभोगभावव्यवस्थां
हस्तान्यस्तामलकफलवद्व्यक्तमालोकयन्तु ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि
भगवद्गीताविवरणे सप्तमोऽध्यायः ॥

## ॥ अथाष्टमोऽध्यायः ॥

अथ सप्तमेऽध्याये प्रतिपादितज्ञानविदो भक्तिलक्षणविज्ञानविशारदा ब्रह्मादीन्प्रकारान्विदुरिति यद्भगवतोक्तं ततस्तेषां प्रकाराणां संजातस्वरूपजिज्ञासुः । १

अर्जुन उवाच ।

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।**
**प्रयाणकालेऽपि कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

[ शां. पा. १–°काले च. ]

प्रश्नवाक्यार्थान्येतानि गतार्थानि । किंतु किं तदिति तच्छब्दस्यायमभिप्रायो यद्भगवतोक्तप्रायेष्वेतेषु प्रकारेषु किं तद् ब्रह्म ? कः प्रकारो ब्रह्मस्वरूपः कश्चाध्यात्मस्वरूप इति विभागजिज्ञासारूपः प्रयाणकाले, कथं ज्ञेयोऽसीति पूर्वमनुक्तार्थविषयः पृथक्प्रश्नः ॥

यथोक्तप्रश्नव्याकरणार्थं भगवानुत्तरमाह ।

श्रीभगवानुवाच ।

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**
**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**
**अन्तकालेऽपि मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

[ शां. पा. १–°काले च. ]

तत्र ब्रह्म किमुच्यत इति प्रश्ने तावदुत्तरम् । परमक्षरं ब्रह्म, न क्षरति न संचलयति, न स्वरूपाच्च्यवतीत्यक्षरं चिद्रूपमुच्यते । तच्च द्विप्रकारं संभवति ।

ब्रह्मरूपं जीवरूपं च। यद् ब्रह्मरूपं तत्परमम्। तस्य न कदाचित्स्वरूपात्संचलनं भवति। यतस्तस्य प्रबन्धतः स्वरूपं जन्मविनाशादिभावविकारासंस्पृष्टैकाचिन्मात्रलक्षणं सहजनित्यानन्दैकधर्मकं सकलविश्वभावावभासकत्वाद्विश्वरूपमपि विश्वभाववदवच्छेद्यत्वेन कथंचिदसंगतत्वात्तेभ्यो व्यतिरिक्तं प्रतिपादितमेव। जीवरूपं तु कूटस्थत्वे सत्यक्षरं भवति। किंत्वपरं परं ब्रह्मवत्परत्वेनावस्थितं, यतस्तस्य मायावशात्क्षरस्वभावप्राकृतभावाहंप्रत्ययालम्भने सति देहादिप्राकृतभाववत्प्रलयोदयौ जन्ममरणादिकं वा तत्स्वरूपमनुविदधानस्य स्वरूपप्रच्युतिसंबन्धे सत्यपरमक्षरत्वम्।

यद्वक्ष्यति।

> द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
> क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
> यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
> अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ इति।

इत्थं ब्रह्मापेक्षया जीवानां नित्यत्वेऽपि प्रतिपादितोपपत्त्या निकृष्टमक्षरत्वं परमं त्वक्षरं ब्रह्मेति प्रथमप्रश्नस्योत्तरम्। अध्यात्मं किमुच्यत इत्यत्रोत्तरम्। स्वभावोऽध्यात्ममिति। स्वभावशब्देन भूमिराप इत्यादिना, ययेदं धार्यते जगदित्यन्तेन ग्रन्थेन पराऽपरा च प्रकृतिर्भगवता प्राक्प्रतिपादितेहोच्यते। एवं प्रकृत्यात्मकः स्वभावः परमकारणरूपसत्यात्मावभासितनानात्माधीनत्वादध्यात्ममित्युक्तः। आत्मा हि परमेश्वरो जडचेतनविभागेन स्वेच्छयाऽऽत्मानमेवावभासयति। यदुक्तम्।

> कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया।
> स एव कुरुते भेदानिति वेदान्तनिश्चयः॥

एवं द्विप्रकारप्रकृतिलक्षण[1]स्वभाव आत्माधीनत्वादध्यात्ममुच्यत इति द्वितीयप्रश्नस्योत्तरम्। अथ किं कर्मेत्यत्रोत्तरम्। विसर्गः कर्मसंज्ञित इति। विसर्गो विसृष्टा परब्रह्मव्यतिरिक्ता सृष्टिः कर्मेतिसंज्ञितः। तस्य हेतुगर्भं विशेषणमाह, भूतभावोद्भवकरः। भूतानां जडाजडप्रकृत्यात्मकानां यो भावः सत्ता। जडानां प्रवाहनित्यतारूपाचेतनानामन्योन्यविभक्तत्वेऽपि कूटस्थनित्यतारूपा। तस्य भावस्योद्भवं तथावभासनरूपामभिव्यक्तिं यः करोति स तथोक्तः, ईश्वरेच्छयाऽनादिना

१ राना १-°समये. २ राना १-'°लक्षण°' नास्ति.

प्रबन्धेन जडचेतनयोः प्रकृत्योर्यः संयोगस्तेन कृतो यः स्वप्रपञ्चमयः सर्गः स तयोः कर्म उच्यते । यत उक्तं प्राक् ।

'एतद्योनीनि भूतानि सर्वाणीत्युपधारय' इति ।

एवं बुद्ध्यादिपृथिवीपर्यन्तप्रपञ्चलक्षणो जडायाः प्रकृतेर्यो विविधः सर्गस्तथा चतुर्दशविधप्राणिप्रपञ्चलक्षणो यो जीवभूतायाः प्रकृतेर्विविधः सर्गः स तयोः संयोगजत्वात्तयोः कर्मत्वेन विसर्ग उक्त इति तृतीयप्रश्नस्योत्तरम् । अथाधिभूतं किमुच्यत इत्यत्रोत्तरम् । अधिभूतं क्षरो भाव इति । क्षरः परिणामवद्रूपतया स्वरूपसंचलनपरो यो भावः प्रतिपुरुषं विभक्तकार्यकारणकलापात्मकः पदार्थः सोऽधिभूत उच्यते । तस्य भूताधीनत्वात् । भूतरूपा प्रकृतिः कार्यकारणात्मना विपरिणमत इति क्षरो भावोऽधिभूतमिति चतुर्थप्रश्नस्योत्तरम् । अथाधिदैवं किमुच्यत इत्यत्रोत्तरम् । पुरुषोऽधिदैवतमिति । पुरुषः क्षेत्रज्ञ इति जातावेकवचनम् । अतस्ते ते पुरुषास्तत्तद्वासनानुगुण्येन परिणतप्रविभक्ततत्तत्कार्यकारणात्मकक्षरभावे रूपेऽर्थेऽधिष्ठातृतयाऽवतिष्ठमाना अधिदैवतत्वं भजन्त इति पुरुषोऽधिदैवतमिति पञ्चमप्रश्नस्योत्तरम् । अथात्र देहे कथं केन प्रकारेण कश्चाधियज्ञ इत्यत्रोत्तरमाह । अधियज्ञोऽहमेवात्रेति । परस्परविभक्तकर्त्रभिमानाविष्टनानाक्षेत्रज्ञाधिष्ठितेऽस्मिन्देहे यद्यपि क्षेत्रज्ञा एवाधियज्ञमर्हन्ति, तत्तत्फलाभिसंधिना तं तं योगविधिमनुतिष्ठन्तस्तादृशमवच्छिन्नमात्मानं कर्तृत्वेनाभिमन्यन्ते, तथाऽपि पारमार्थिकस्य कर्तृत्वस्यानन्यसाधारणत्वादहमेव मुख्यः कर्ता सर्वयज्ञानामित्यहमेवाधियज्ञो नान्यः । कथमिति प्रकारे प्रश्नेऽप्येतदेवोत्तरम् । अहमेवाहमित्यनेनैव प्रकारेणाहमधियज्ञः । इदमत्र तात्पर्यम् । योऽपि क्षेत्रज्ञानां शरीराद्यालम्बनानिमित्ताहंकारो, योऽपि परमस्वरूपनिष्ठो मम, तयोरहंकारत्वे नास्ति कश्चिद्भेदः । केवलं मायावशात्क्षेत्रज्ञानामवच्छेद्यालम्बननिष्ठत्वादवच्छिन्न इवासौ । मम तु स्वभावनिष्ठत्वादनवच्छिन्न इत्यहमेव नान्यो मुख्याहंकारनिष्ठतयाऽधियज्ञो न प्रकारान्तरेणेति । सर्वयज्ञेष्वधिकृतः प्रभुरहमेव । यदुक्तम्, अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । इति षष्ठस्य प्रश्नस्योत्तरम् । अनेनैव न्यायेनाधिभूतमहमेवेति बोद्धव्यम् । भूतभावेन परमार्थतोऽहमेव स्थित इत्यर्थः । तथैवाधिदैवतत्वेन पुरुषाख्यो यः प्रकार उक्तस्तत्राहमेवाधिकृत इति प्रश्नषट्कस्य संक्षेपतो व्याकरणमेवं

वेदितव्यम् । यदुत ब्रह्मात्मकर्मसंज्ञं परमात्मक्षेत्रज्ञप्रकृतिपरिणामरूपं सप्तमे तत्त्वत्रयं निर्णीतम्, तत्र यथाक्रममधियज्ञाधिदैवताधिभूतभावेनाहमेव तत्त्वतो व्यवस्थितो न मद्व्यतिरिक्तं किंचित्संभवतीति तात्पर्यम् । तथा सप्तमे 'ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना तत्त्वत्रयमेतदुक्त्वा, 'साधिभूताधिदैवं मां साधियज्ञं च ते विदुरिति तद्व्यापकत्वेनाऽऽत्मानं भगवान्निर्दिष्टवानिति । अथ प्रयाणकाले देहाद्देहान्तरसंक्रान्तिसमये नियतात्मभिर्निगृहीतान्तःकरणैः कथं ज्ञेयोऽसीत्यत्रोत्तरम्, अन्तकालेऽपि मामेवेत्यादि । अन्तकालेऽपि तत्तत्कर्मक्षयात्तस्य तस्य शरीरस्य प्रक्षयसमये मां यथोक्तविशेषणं परमात्मानं स्मृत्वा संचिन्त्य, मत्स्वरूपप्रत्यवमर्शपूर्वं कलेवरं शरीरं त्यक्त्वा स्वातन्त्र्येण विमुच्य यः प्रयाति, ततो देहादुत्क्रामति, स मद्भावं मदीयां सत्तां यात्यहमेव संपद्यत इत्यत्र संशयः संदेहो नास्ति ॥

तथा युक्तिं प्रदर्शयितुमाह ।

**यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

यं यं सात्त्विकं राजसं तामसं वा भावं पदार्थं स्मरन्, सात्त्विक्या राजस्या तामस्या वा बुद्ध्या ध्यायन्पुरुषोऽन्तेऽवसाने देहं जहाति तं तमेव देहान्तरं प्रतिपद्यते । अत्र हेतुगर्भं विशेषणमाह, सदा तद्भावभावितः । सदा नित्यकालं तस्मिंस्तादृशि सात्त्विकादौ भावे भावितः, संजातभावनो यतः । किमुक्तं भवति । वर्तमाने देहे यदेव सात्त्विकादिकं वस्तु पुरुषोऽभ्यासेन भावयति तत्तद्भावनाभ्यासप्रकर्षाहितसंस्कारस्तमेवान्तेऽवश्यं स्मरति । यमेव च स्मरंस्तस्माद्देहादुत्क्रामति तमेव तत्समनन्तरे लभते । यद्वक्ष्यति ।

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ इति ।

यत एवम्,

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मदर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥**

[ शां पा. १–मय्यर्पित°. २–°संशयः. ]

तस्मादुक्तात्कारणादाप्तोपदेशप्राप्तिक्षणात्प्रभृति सर्वेषु कालेषु । कालशब्द उपलक्षणार्थः । तेन सर्वेषु देशेषु, सर्वेष्वाकारेषु, सर्वास्ववस्थासु यथाप्रतिपादितस्वरूपं मां परमात्मानं परमेश्वरमनुस्मर संचिन्तय । मत्स्वरूपध्यानान्नपरत्र निबिडावधानो भव । युध्यस्व स्वकर्मानुतिष्ठ च । येन मयि यथोक्तेन प्रकारेण नित्यविनिवेशितान्तःकरणो निःसंशयं मामेवैष्यसि । मदभेदं प्राप्स्यसि, अहमेव भविष्यसीत्यर्थः ॥

प्रतिपत्तिदार्ढ्यार्थमेनमेवार्थं विवरीतुमाह ।

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

नित्यानुस्मरणयत्नलक्षणे समाधौ युक्तेन संबद्धेनात एवानन्यगामिना यथोक्तस्वव्यतिरिक्तवस्त्वन्तरविरतगतिनाऽन्तःकरणेन चिन्तयन् सदा ध्यायन् । संस्कारबलात्परमं सर्वेभ्यः क्षेत्रज्ञेभ्य उत्कृष्टमेकं पुरुषमात्मानं दिव्यं दिवि परमव्योम्नि स्वभावमये भवं, याति प्रतिपद्यते, तादात्म्यमुपैति ॥

एवमबाधितोपपत्त्युपन्यासपूर्वं यथाप्रतिपादितानुत्तरज्ञानमात्रसाधनं परमुत्क्रान्तिक्रमं प्रतिपद्येदानीं प्राणजयादिसाध्ययोगसाधनमपरं तं प्रतिपादयितुमाह ।

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**
**प्रयाणकाले मनसाऽचलेन**
**भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्**
**स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥**

स एवंविधो योगी तं दिव्यं दिवि परमव्योम्नि भवं, अत एव परं सर्वोत्कृष्टं पुरुषमीश्वरमात्मानमुपैति प्राप्नोति । कोऽसौ ? यो भक्त्या भगवदनुग्रहदिवसालोकप्रभातसंध्यया सकलपुरुषार्थसिद्धिबीजभूतया तथा प्रस्तुतस्वरूपनिरूपणसमाधिसामर्थ्येन युक्तः संस्तस्यामवस्थायामचलेन स्थिरसमाधानेन मनसाऽन्तःकरणेन सर्वस्य धातारं परमकारणमनुस्मरेदन्तकालेऽनुचिन्तयेत् । कथं

कीदृशं च ? भ्रुवोर्मध्येऽभ्यासवशान्नीतं प्राणमान्तरं मारुतं, सम्यग् मध्यमेन मार्गेण, निवेश्य संधाय। आदित्यवर्णं सर्वतेजोव्यतिरिक्तज्योतीरूपमत एव तमसः पु(प)रस्तात्, अज्ञानस्य पृथक्तया वर्तमानम्। कीदृशम्? सर्वस्य धातारमनुस्मरेत्। परावस्थायां कविमित्यादिविशेषणविशिष्टत्वादचिन्त्यं पारमार्थिकज्ञातृस्वभावत्वाच्चिन्तनक्रियायाः कर्मत्वं नेतुमशक्यम्, यतः पुराणं कविमनादिं द्रष्टारं तथाऽनुशासितारं सर्वस्य चराचरस्य सर्गस्य तेन तेन नियमेन नियन्तारमतः सर्वज्ञं सर्वकर्तारं चेत्युक्तं भवति। तथा स्वरूपतोऽणुः सूक्ष्मः क्षेत्रज्ञादिस्तस्मादप्यणीयांसमतिशयेनाणुम्। इदमत्र तात्पर्यम्। यः परावस्थायामद्वैतज्ञानैकविषयत्वात्स्मरणव्यापाराविषयभूतस्तत्संयोगरूपायामवस्थायां नियतदेशत्वेन नियताकारत्वेन यो योगी यथोक्तेन क्रमेण स्मरति, स तमेव पुरुषमुपैति, तत्समीपं गच्छति॥

योगक्रम एव परमपदप्राप्तिफलो यदा भवति तदा सम्यग्वक्तुं प्रतिजानीते।

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेणाभिधास्ये॥ ११॥

[ शां. पा.–°ण प्रवक्ष्ये. ]

तत्पदं योगिभिः प्राप्यं धाम संग्रहेण संक्षेपेण ते तुभ्यमभिधास्ये कथयिष्यामि। किं तद्धाम। यद्वेदविदो वेदार्थविशारदा अक्षरं नित्यं विद्वांसो वदन्ति, प्रवचनेन प्रतिपादयन्ति। यच्च यतयो ज्ञानैकनिष्ठा विशन्ति समापद्यन्ते। यच्चेच्छन्तः प्राप्तुकामा ब्रह्मचर्यं ब्रह्मणो वेदस्याध्ययनश्रवणादिना चर्यमाचारं चरन्ति गच्छन्ति समाश्रयन्ते। केचिद्विदन्तीति पाठं पठन्ति। एवमेतद्व्याचक्षते। यथा वेदविद्ग्रहणेन गृहस्थवानप्रस्थाः प्रतिपादिताः। यतस्ते शास्त्रोक्तक्रियानुष्ठाननिष्णाताः सन्तस्तत्पदं विदन्ति जानन्ति प्राप्यतयाऽध्यवस्यन्ति। यतयस्तु कृतकृत्यत्वाद्विशन्ति, तादात्म्यमाप्नुवन्ति। ब्रह्मचारिणस्तु तत्प्राप्तुकामाः स्वाध्यायशास्त्रार्थबोधादिनिष्ठा व्रतविशेषं भजन्ते॥

इति यथाप्रतिज्ञातमभिधातुमाह,

---

१ राना १–तथा.

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**
**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥**

स योगी परमां गतिं पूर्वोक्तं प्रकृष्टं पदं याति प्रतिपद्यते । कोऽसौ ? य एव देहं शरीरं त्यजन् विमुञ्चन् यात्युत्क्रामति । कीदृशः ? मामनुस्मरन् योगधारणामास्थितो मां यथोक्तस्वरूपं परमकारणमोंकारवाच्यं ब्रह्मतत्त्वमनुध्यायन् । योगस्य कस्यचित्समाधेरालम्बनीभूतेऽर्थे चित्तनिग्रहरूपां धारणां भूमिकामाश्रितः । कथमास्थितः ? प्रथमतरं सर्वद्वाराणि चक्षुरादीनि चित्तवृत्तिप्रसरवर्त्मानि संयम्य यथास्वं विषयेभ्यः प्रत्याहृत्य मनश्चोपदेशाधिगते हृदि सर्वसंविदधिकरणभूते देहैकदेशे निरुध्य प्रतिषिद्धेन्द्रियविषयप्रचारं कृत्वा, तथा प्राणमन्तश्चरं मारुतं मूर्ध्नि ब्रह्मरन्ध्रे ब्रह्मपुरार्गलभूतभ्रूमध्यग्रन्थिभेदाल्लब्धमार्गं सन्तमादाय कृत्वा, तथोमिति प्रसिद्धैकाक्षररूपं ब्रह्म शब्दतत्त्ववाच्यं व्याहरन्नुच्चारयन् । एवं प्राणस्य मूर्ध्नि प्रेरणं प्रणवस्योच्चारणं प्रणववाच्यस्य च मत्स्वरूपस्यानुस्मरणं चेति सर्वेन्द्रियमनोनियमपूर्वकं युगपत्त्रितयमेतत्संपादयन् यो देहविसर्गं करोति, स योगी परमं पदं प्राप्नोतीति तात्पर्यम् ॥

तस्मिन्प्रयाणकाले तात्कालिकावस्थाविसंस्थूलचित्तो योगी कथमत्र समाधिं सादयेदित्यत्र पूर्वोक्तं कारणमाह ।

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

तस्य नित्ययुक्तस्याविच्छिन्नसमाधेर्योगिनोऽहं नित्यशः सर्वास्ववस्थासु, सुखात्मिकासु दुःखात्मिकासु वा, सुलभः सुप्रापः । कस्य ? यः सततमव्यवधानेन मां यथोक्तयोगाभ्यस्तस्वरूपतयैकं तत्त्वं परमात्मानमनन्यचेता अन्यतो मद्व्यतिरिक्ताद्वस्तुनो निवृत्तान्तःकरणः स्मरत्यात्मत्वेन प्रत्यवमृशति । यं यं भावं स्मरन्वाऽपीत्यादिनोक्तोपपत्त्या सर्वात्मकमत्स्वरूपप्रत्यवमर्शाभ्याससुदृढसंस्कारस्य योगिनस्तस्यामप्यवस्थायामहमात्मभूतत्वात्कथं दुष्प्राप इति तात्पर्यम् ॥

ये चानेन क्रमेण मां प्रपन्नास्ते,

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

महात्मानो यथोक्तज्ञानपरिशीलनभावान्महान् सर्वातिशायी परमेश्वर एवाऽऽत्मा येषां ते तथा, अत एव मां यथोक्तया भक्त्या समाश्रित्य परां सिद्धिमभेदसमापत्तिलक्षणां परमां फलसंपत्तिमितः संसाराद्गताः सन्तः पुनर्भूयो जन्म देहान्तरप्राप्तिं नाऽऽप्नुवन्ति न लभन्ते। कीदृशं जन्म ? दुःखानामाध्यात्मिकादीनां संग्रहात्त्रिप्रकाराणां विस्तारतोऽनन्तभेदानामालयमास्पदम्। तथाऽशाश्वतमवश्यमनुसक्तशरीरेन्द्रियादिसर्वस्वविनाशम्। अनात्मन्यात्मप्रत्ययनिबन्धना सर्वदुःखयोगिता जन्मविनाशादिविकारसंबन्धता च जीवानां सामान्यं परमकारणमेकमात्मानं मामहंतया प्रतिपन्नानां पुनर्न संभवतीति तात्पर्यम् ॥

एवं च यथोक्तेन येन मत्समाश्रयणमेकमुपायं वर्जयित्वा नान्यत्किंचिदपुनरावृत्तिकारणं संभवतीत्याह ।

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

परमप्रकृष्टतपोयज्ञदानादिपुण्यकर्मप्राप्यो ब्रह्मणः प्रजापतेर्लोको ब्रह्मलोकस्तमवधिं कृत्वा यानि कानिचित्पुण्यकर्मप्राप्याणि लोकान्तराणि संभवन्ति तेषु लोकास्तत्तत्क्रियानुष्ठातृत्वाल्लब्धोपपत्तयो जनास्ते यथोक्तज्ञानशून्यत्वात्तासां क्रियाणामनुष्ठितानामन्तवत्त्वे सति पुनरावर्तिनो भूयः संसारवर्त्मनि प्रादुर्भाविनो, मां यथोक्तज्ञाननिर्मलभक्तिमात्रैकोपायगम्यं परब्रह्मस्वरूपपरमेश्वरमुपेत्य तादात्म्यप्रतिपत्तिपर्यन्तमाश्रित्य पुनर्जन्म संसारभूमावुत्पत्तिर्न विद्यत एव । मामुपेत्य भूयो न जायन्त इत्युपायजननक्रिययोरेककर्तृकत्वमत्रावगन्तव्यम् ॥

अथ कथं ब्रह्मलोकवासिनोऽपि पुनरावर्तन्ते, न पुनर्मत्प्रपन्ना इत्यत्र क्रमेण कारणमाह ।

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

जागरस्वप्नाद्यवस्थाहेतुभूतसूर्योदयास्तसमयोपलक्षितमेव कालविशेषमहोरात्रतया मन्यन्ते । तेन ते तत्त्वतोऽहोरात्रस्वरूपज्ञाः । ये तु ब्रह्मणः प्रजापतेर्दिव्यया संख्यया चतुर्युगानां सहस्रपर्यन्तो विधिर्यस्य, तावत्प्रमाणमहर्वासरं विदुर्जानते, तावत्परिमाणामेव च रात्रिं, ते तत्त्वज्ञा अहोरात्रविद उच्यन्ते । किमनेनोक्तं भवति । यथा मर्त्यानां नाडिकाषष्ट्यवच्छिन्नः कालोऽहोरात्रस्तथा ब्रह्मलोकनिवासिनां चतुर्युगसहस्रद्वयावच्छिन्नः कालोऽहोरात्रः । ततश्च

यथा मर्त्याः स्वाहोरात्रपरिकलितं वर्षशतं पुरुषायुषमतिवाह्य देहान्तरं भजन्त इतीह व्यवस्था, तथा ब्रह्मलोकनिवासिनोऽपि यथोक्तपरिमाणावच्छिन्नाहोरात्रकलनया वर्षशतं पुरुषायुषमतिवाह्य पुनर्देहान्तरं भजन्तीति कर्मभूमिभाजां मर्त्यानां ब्रह्मलोकनिवासिनां च पुण्यकर्मणामहोरात्रादेः पुरुषायुषपर्यन्तस्य कालस्य ह्रासदैर्घ्यकृतो विशेषः, न तु संसारित्वे तेषां कश्चिद्विशेषः । ततो यथा मर्त्याः पुनरावर्तन्ते, तथा ब्रह्मलोकनिवासिनोऽपि स्वकालपरिमाणेन पुरुषायुषमतिवाह्य पुनरावर्तन्त इत्याब्रह्मभुवनाल्लोकाः पुनरावर्तिन इत्युक्तम् । तेनेदमत्र तात्पर्यम् । यथोक्तज्ञानशून्यपुण्यक्रियाविशेषानुष्ठानलभ्ये कालावच्छेदतुच्छभोगसंबन्धात्संसार एव युगसहस्रपरिमाणमपि कालदैर्घ्यमन्तवत्त्वान्मर्त्याहोरात्रान्नातिरिच्यत इति यथोक्तं युगसहस्रद्वयपरिमाणं कालमहोरात्रत्वेन ये मन्यन्ते, तेऽहोरात्रविदो जना इत्युक्तम् ॥

इदानीं तु तस्य ब्राह्मस्याहोरात्रस्य स्वरूपप्रतिपादनद्वारेण मर्त्याहोरात्रतुल्यवृत्तान्ततामुपदेश्यानां विवेकनैर्मल्यायोपदेष्टुमाह ।

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**
**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

अव्यक्तादीश्वरोद्भावितजगत्कारणभावाद् गुणसाम्यात्मनः प्रधानापराभिधानात्पदार्थाद् युगसहस्रपरिमाणब्रह्मदिवसाविर्भावे सति सर्वा व्यक्तयः सर्वभावानां सर्वे विशेषाः प्रभवन्ति प्रादुर्भवन्ति । यथा सूर्योदयात्प्रवृत्ते दिवसे सर्वप्राणिनां सर्वक्रियाविशेषाः प्रभवन्ति तथैव युगसहस्रपरिमाणे ब्रह्मनिशागमे तत्रैव यथोक्तेऽव्यक्तसंज्ञतत्त्वे प्रलीयन्ते, व्यक्तरूपतां परित्यज्य शक्तिमात्रत्वेनावतिष्ठन्ते । यथेह सर्वप्राणिभूतां सूर्यास्तमयात्संजाते निशागमे सर्वेन्द्रियप्रवृत्तयोऽन्तरेव प्रलीयन्ते । किमत्र तात्पर्यम् । इहोदयास्तमययोः सर्गप्रलययोश्च पर्यायेण प्रवहतोरनित्यत्वे नास्ति कश्चिद्भेदः । केवलं कलेवरादिविनश्वरभावार्ह एव संकलितनिसर्गनिरवच्छेदसंविदां मायाशक्तिमोहितानां ह्रासदैर्घ्यकल्पनाकृतो विशेषविभ्रमोऽत्र तदा यथोक्तज्ञाननिष्ठतया कालानवच्छिन्ने सत्ये स्वात्मन्यहंप-

१ राना १–' यथा ' नास्ति. २ राना १–ह्रस्वदैर्घ्य°. ३ राना १–' कल्पना° ' नास्ति. ४ राशा १–तेन.

तिपत्तिविवेकिभिर्दृढीकार्येति । एतदेव निगमयति—भूतग्रामः स एवायमिति । स एवायं चतुर्दशविधेन प्रपञ्चेन प्रविभक्तो भूतग्रामश्चराचरप्राणिवर्गो यथोक्तेन क्रमेण सर्गादौ भूत्वा भूत्वा पुनः पुनरभिव्यक्तिमासाद्य रात्र्यागमे ब्रह्मरात्रिसंज्ञे प्रलयकाले प्रलीयते न्यग्भवति । अहरागमे सर्गादौ तु प्रभवति व्यक्तिमासादयति । इत्येवमाब्रह्मभुवना लोकाः पुनरावर्तन्ते ॥

इत्येतंप्रतिपादनप्रसंगेन सर्गप्रलयस्वरूपं प्रतिपाद्य, इदानीं मत्प्रतिपन्ना येन कारणेन न पुनरावर्तन्त इत्येत्प्रतिपादयितुमाह ।

**परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**
**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

[ शां. पा. १—व्यक्तोऽव्यक्तात्. ]

तस्माद्व्यक्तसंज्ञाज्जगत्कारणत्वेनावभासितात्पदार्थात्प्रधानाख्यात्परः पुनरन्यो विलक्षणो भावः परमार्थसत्पदार्थो विद्यत इति शेषः । कीदृशः? व्यक्ताव्यक्तः, व्यक्तं कारणत्वेन प्रधानापन्नमव्यक्तं प्रधानात्मकं वस्तु यस्मात् । तथाविधविवक्षितेश्वरलक्षणभाववशात्किलाव्यक्तव्यवहारोऽयं प्रतीयते । यदि वा व्यक्तश्चाव्यक्तश्चेति विशेषणसमाश्रयणेन व्याख्येयं तत्पदम् । स हि भावो नित्योदितप्रकाशात्मकतयैव सर्वमिदं प्रकाशयन् व्यक्त एव । मायावशात्तु सर्वस्य तथाप्रतिपत्त्यभावादव्यक्ततया सनातनः सदा सर्वकालं भवतीति सनातनो नित्यः । कीदृशोऽसौ ? समस्तेषु जडचेतनभेदेन द्विप्रकारेष्ववान्तरभेदादपर्यन्तप्रपञ्चेषु भूतेषु प्राणिषु नश्यत्सु, उक्तेन प्रकारेण प्रधाने प्रलयमनुभवत्सु न नश्यति, नित्योदिताद्वैतचित्प्रकाशात्मकत्वात्प्रलीनत्वादिव्यपदेशं न याति । कुतोऽत्यन्ताभावता । तत्कस्मान्नोपलभ्यत इत्याह । अचिन्त्यस्वमायाशक्तिमोहितान्प्रति यथास्थितेन नित्येन रूपेणाप्रथमानत्वादव्यक्तः । परमार्थतः पुनरक्षरो न क्षरति, स्वात्मरूपान्न संचलति । यश्चैवंविधो भावस्तां परमां गतिमनुत्तरां प्राप्तिमाहुस्तत्त्वविदः। अत एव कीदृशं तं यं प्राप्याऽऽसाद्याऽऽत्मत्वेन प्रतिपाद्य प्रशान्तप्राप्यान्तरस्पृहा यथोक्तयोगिनो न निवर्तन्ते, पुनः

---

१ राशा १—इत्येतदर्थप्रति°. २ राना १—भावतः.

संसारसरणिं नावतरन्ति । यतस्तथाविधो यो भावस्तन्मम परस्य ब्रह्मणः परमकारणस्य परमेश्वरस्य धाम नित्योदितः प्रकाशो निरुत्तरस्थानं वा ॥

तत एवंविधं मां ये प्रपन्नास्ते न पुनरावर्तन्त इति तथाविधानां योगिनामपुनरावृत्तिकारणं प्रतिपादितम् । तस्यैव यथोक्तस्य भावस्य स्वरूपं निगमयंस्तत्प्राप्त्युपायं स्मारयन्नाह ।

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ।**
**यस्यान्तःस्थानि भूतानि येत्र सर्वं प्रतिष्ठितम् ॥ २२ ॥**

[ शां. पा. १–इयं पङ्क्तिः शां. पाठे नास्ति. २ येन सर्वमिदं ततम्. ]

य एष यथाप्रतिपादितस्वरूपो भावः स परः सर्वक्षेत्रज्ञातिरिक्तप्रभावत्वान्निरतिशयः पुरुषशब्दवाच्यः । सर्वशरीरान्तःशायित्वात् । पुरुषः परमात्मा । कीदृशः । उक्तवक्ष्यमाणप्रकारेण यं प्राप्याऽऽत्मत्वेन प्रतिलभ्य योगिनः स्वीकृतनानाविधसमाधिभेदाः पुनर्भूयो जन्म संसारितयोत्पत्तिं नाऽऽप्नुवन्ति न लभन्ते । तथा यस्यैकस्यान्तः सामान्यसंविल्लक्षणे हृदये स्थितानि सर्वाणि चराचराणि भूतानि । न हि तेषामेवमन्योन्यविभिन्नरूपतया स्फुरतामद्वयचिन्मात्ररूपानुप्रवेशमन्तरेण सत्ता सद्भावः । अत एव यत्र यस्मिन्सकलजगत्पदार्थसार्थसामान्याधारे सर्वमिदं प्रतिष्ठितं कृतव्यवस्थानम् । स पुनरित्थं भूयो भक्त्या प्रतिपादितोत्तरोत्तरप्रकृष्टां तत्त्वादिज्ञानपर्यन्तचतुरवस्थारूपतया सेवया लभ्यः प्राप्यः । कीदृश्या । अनन्यया, तत्स्वरूपाव्यतिरेकेण सर्वावस्थास्वविद्यमानमन्यदालम्बनं यस्यास्तया तथाविधयेति ॥

अथान्यमुत्क्रान्तिविषयं योगोपदेशं प्रस्तावयन्नाह ।

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

यत्र यस्मिन्वक्ष्यमाणे काले प्रयाताः संन्यस्तदेहाः सन्तो योगिनोऽनावृत्तिं तथाऽऽवृत्तिं विशिष्टभोगाधिकरणयोग्यशरीरादिसंबन्धं यान्ति, स्वातन्त्र्येण भजन्ते, तं तादृशं वक्ष्यमाणं क्रमेण योगिनामेव सुलभं कालमुपदेक्ष्यामि ॥

तमाह ।

---

१ राना १–प्रभवत्वात्.

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥
धूमः कृष्णस्तथा रात्रिः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

[ शां. पा. १-धूमो रात्रिस्तथा कृष्णः. ]

इहाग्नीषोमौ प्रकाशतमसी । तदुपलक्षितदिनरात्री, शुक्लकृष्णौ पक्षौ, तथा षण्मासपरिमाणेनोत्तरदक्षिणे अयने इति स्थूलदृष्ट्या कालविभागमाचक्षते । तस्य देवपितृमर्त्यविषयत्वेन प्रकृष्टमध्यमनिकृष्टपरिमाणतां च । इत्थं स्थितेऽग्निर्ज्योतिः सूर्यप्रकाशस्तदुपलक्षितमहस्त्रिंशन्नाडिकावच्छिन्नपरिमाणो दिवसाख्यः कालांशः । आपूर्यमाणसोमोपलक्षिताः पञ्चदशाहोरात्राः । शुक्लपक्षः, शुक्लशब्देन निर्दिष्टः । तथा मकरादिराशिषट्कसंचारिविरोचनचारोपलक्षिताः षण्मासा उत्तरायणम् । इत्येते कालविशेषाः प्रसिद्धास्तत्रैवंविधायां कालविशेषसामग्र्यां ये ब्रह्मविदो विज्ञातपरमकारणस्वरूपाः प्रयान्त्युत्क्रामन्ति शरीरमुत्सृजन्ति, ते ब्रह्म परं गच्छन्ति । अपुनरावृत्तिं मोक्षगतिं प्राप्नुवन्तीत्यर्थः । तथा धूमो जलात्मकत्वात्सोमः । तथा च तदुपलक्षिता रात्रिः प्रसिद्धा । कृष्णः क्षीयमाणसोमोपलक्षितः पञ्चदशाहोरात्राः कृष्णः पक्षः । स च क्रमापेक्षया यथापाठं न व्याख्यातः । तथा कर्कटादिराशिषट्कसंचारिसूर्योपलक्षिताः षण्मासा दक्षिणायनम् । तत्रैवंविधायां कालसामग्र्यां पुनर्जन्महेतुभूतं चान्द्रमसं ज्योतिस्तेजः प्राप्य योगी समाधिमावर्तते पुनः संसारमार्गमवतरति । अत्र केचिद्विचक्षणा एवं विचारमारभन्ते । इह तावद् ब्रह्मणो यथोक्तस्य परमस्य कारणस्य द्विविधं वेदनम् । स्वसंवेदनेन साक्षात्कार आप्तोपदिष्टस्य वा स्वरूपावगममात्रम् । तत्राऽऽद्येन प्रकारेण ये ब्रह्मविदस्तेषां प्राप्तप्रापणीयत्वादुक्तकालसामग्री न ब्रह्मप्राप्तिहेतुत्वमर्हति । द्वितीयेऽपि पक्षे स्वरूपावगममात्रेण ये ब्रह्मविदस्तेषामसाक्षात्कृततत्त्वानां यथोक्तकालविशेषप्राप्तिमात्रमपुनरावृत्तिहेतौ ब्रह्मणः प्राप्तिकारणमिति न शक्यते वक्तुम् । एवमुभयरूपाणामपि ब्रह्मविदामन्तकाले यथोक्तकालप्राप्त्यधीना ब्रह्मप्राप्तिरिति न युक्त्या संगच्छते । योऽपि योगी स्वीकृतसमाधिविशेषस्तस्य तद्बलानपोहेन यथोक्तकालविशेषप्राप्तिमात्रादेव पुनरावर्तनमयुक्तिमत् । यं यं वाऽपि स्मर-

---

१ राना १-' न ' नास्ति.

न्भावं त्यजत्यन्ते कलेवरमित्यादिना प्रतिपादितोपपत्त्या सुदृढभावनाभावितस्य भावस्याव्यभिचारान्मन्थरं भावितस्य तत्कालमसंस्मरणे सति पुनरावृत्तिः स्थितैव । किमुक्तः कालः करिष्यति । तदेवं योगी यथोक्तकालविशेषप्राप्तेः पुनरावर्तत इत्येतदपि न हृदयावर्जकम् । यदप्युच्यते, यद्येष यथोक्तः कालो ब्रह्मप्राप्त्यादिहेतुर्न भवेत्तत्कथं ब्रह्मविदोऽपि शान्तनवस्य तनुसंन्यासार्थमुत्तरायणप्रतीक्षा श्रूयत इति । सत्यं श्रूयते, किंतु ब्रह्मप्राप्तिहेतुत्वेन तेनासौ कालो न प्रतीक्षितः । यदि हि स एव ब्रह्मप्राप्तिहेतुः स्यात्तदा सर्वैर्ब्रह्मविद्भिर्देहोत्सर्गे स एवापेक्ष्येत । तत्कालोत्सृष्टदेहाश्च सर्व एवानावृत्तिभावं भजेयुः । न चैवमस्ति । न चैवंविधे काले म्रियेतेति विधिरुपपद्यते । सर्वस्य मरणे स्वातन्त्र्याभावात् । भीष्मस्य तु स्वतन्त्रमृत्युत्वात्तादृक्कालप्रतीक्षणे निमित्तान्तरमनुमेयम् । तच्चेदं, यत्किल स्थूलया दृशा यथोक्तः कालः कलेवरसंन्यासावसरे समुपनतो गतिविशेषाधानहेतुर्भवतीत्यागमवचनप्रमाणीकरणार्थं भीष्मस्य तादृक्कालप्रतीक्षोद्यमः । तस्माद्यथोक्तस्य कालस्य मुख्यतया नाहोरात्रादिरूपत्वम् । ततश्च ब्रह्मविदां योगिनां च यथाक्रमं ब्रह्मप्राप्तेः पुनरावृत्तेश्च कारणभूतं यदेतत्कालगतिद्वयमुक्तं तत्रावश्यं कश्चिद्विशेषो बोद्धव्यत्वेन वर्तते । वक्ष्यति हि,

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन । इति ।

न चैतयोः स्मृत्योर्बाह्यकालविशेषरूपयोर्देवयानपितृयाणसंज्ञामात्रस्य ब्रह्मादिप्राप्तिहेतुर्भवेत् । अतः कश्चिद्विशेषो यथोक्तार्थसंगतिहेतुरत्रानुमेय इत्याचक्षते । कालस्य हि बाह्याभ्यन्तरभेदेन रहस्यशास्त्रेषु द्विप्रकारता प्रतिपादिता । तत्र प्रसिद्धसूर्येन्दुचारोपलक्षितो बाह्यप्रकारः, प्राणापानलक्षणसूर्येन्दुचारोपलक्षितस्त्वाभ्यन्तरः । तत्र मुख्यस्य बाह्यस्य प्रतिपादितबाधकसद्भावाद्गौण आभ्यन्तरः समाश्रीयते । तेनाग्न्यादय उत्तरायणपर्यन्ताः शब्दाः प्राणगतिप्रतिपादितत्वेनात्र प्रयुक्ताः । यतः प्राणगतिरेव दिवसाद्युत्तरायणकालावयवत्वेन तत्र तत्र रहस्यशास्त्रेषु तत्तद्विशिष्टशरीराद्यपेक्षया प्रसिद्धा । इत्थं स्थिते येषां यथोक्तज्ञाननिष्ठतया ब्रह्मविदां सतामन्तकाले स्वरसेन मूर्धच्छिद्राख्यब्रह्मद्वारवाहिनि प्राणचारे नियमितं संवित्स्रोतः प्राणोपशान्तिक्षणे सर्वतो निरवच्छेदनिस्तरङ्गनिसर्गनिर्मलसामान्यसंविन्महोदया प्रविश्य समरसी-

१ राना १–'इति' नास्ति.

भावमापद्यते । तेषां ब्रह्मप्राप्तिरव्यवधानेनोपपन्ना । स हि ब्रह्मविदां देवयानः पन्थाः । एषैका तद्विषया शाश्वतिकी गतिः । यस्तु यथोक्ततत्त्वज्ञानव्यतिरेकेणाभ्यासस्वीकृतकेवलयोगस्तस्य योगिनो यथोक्तमाणगतिं नियमितमपि संवित्स्रोतः प्राणोपशान्तिक्षणे ब्रह्मवेदित्वाभावाद्देहाद्यहंप्रत्ययपर्वतप्रतिहतप्रसरं सत्परावर्तते । परावर्तमाने च धूमादिदक्षिणायनशब्दान्तप्रतिपादितामपानवृत्तिमेव पितृयाणलक्षणां गतिं समाश्रित्य योगाभ्यासप्रकर्षानुसारोचितं विशिष्टं शरीरान्तरमाविशति । यत्र पूर्वाभ्यासह्रियमाणचित्ततया प्रकृष्टतरेणोत्साहेन यतमानः परां सिद्धिं प्राप्स्यतीत्युक्तम् । तदयमत्र संक्षेपार्थः । ये ज्ञानित्वाद् ब्रह्मविदः सन्तोऽन्तकाले यथाप्रतिपादितेन क्रमेण प्राणशक्त्यालम्बनचित्तवृत्तयस्तत्प्रशान्तिक्षणेऽप्यविलुप्तपरतत्त्वस्मृतयो देहमुत्सृजन्ति, ते निर्व्यवधानब्रह्मप्राप्तिवशान्न पुनरावर्तन्ते । ये तु केवलयोगिनः सन्तः प्राणवृत्तिमेवाऽऽश्रित्य देहमुत्सृजन्तो ज्ञानित्वाभावात्परतत्त्वस्मृत्यभावे सत्युत्क्रामन्ति, ते देहाद्यनुपरताहंप्रत्ययत्वादपानवृत्तिं संसारमार्गमाश्रित्य विशिष्टं देहान्तरमाप्नुवन्ति । यतः सर्वस्य कस्यचिच्छरीरिणः सर्वसंसारिसाधारणप्राणवृत्त्याश्रयणेन वर्तमानाद्देहादुत्क्रान्तस्यापानवृत्त्याश्रयणेन भविष्यद्देहसंक्रान्तिर्भवति ॥

ब्रह्मविदां योगिनां देहप्रकरणे विशेष एवं प्रतिपादितः । अत एव प्राणापानलक्षणान्तरविशिष्टमार्गद्वयत्वेनैतत्संग्रहीतुमाह ।

शुक्लकृष्णेगती ह्येते जगतः शाश्वते मते ।
अनयोर्यात्यनावृत्तिमेकयाऽऽवर्ततेऽन्यया ॥ २६ ॥

[ शां. पा. १–°कृष्णे गती. २–एकया याति. ३–अन्ययाऽऽवर्तते पुनः. ]

एते यथोक्ते द्वे गती, प्राणापानवृत्तिरूपौ देवयानपितृयाणसंज्ञौ द्वौ मार्गौ, जगतः सर्वलोकस्य । शाश्वत इति छान्दसः पाठः । तेन नित्येन सर्वः कश्चिज्जनस्तिर्यग्वाहिप्राणमार्गाश्रयणेन देहादुत्क्रामति । अपानमार्गाश्रयणेन देहान्तरे संक्रामति । ब्रह्मविदो योगिनश्चायं तु विशेषो यदनयोर्गत्योर्मध्यादेकयोर्ध्ववाहप्राणरूपया शुक्लया गत्या यथाप्रतिपादितेन प्रकारेणान्तकाले समाश्रितया ब्रह्मविदनावृत्तिं याति, ब्रह्म प्राप्नोति । योगी तु तथैवोत्क्रामन्नोन्ययाऽपानरूपया कृष्णयोक्तेन हेतुनाऽऽवर्तते विशिष्टदेहान्तरे संक्रामति ॥

यतः,

१ राशा १–मानं. २ रामा १–उत्क्रामेत्नान्यया.

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

एते यथाप्रतिपादिते सृती प्राणापानरूपे गती जानन् । यथोक्तया महत्तया प्रतिपाद्यमानो योगी प्राक्प्रतिपादितस्वीकृतमुख्ययोगो न कश्चिन्मुह्यति । सर्व एव तद्गतिज्ञः सन्ब्रह्मप्राप्तिहेतुगतिसमाश्रयणेन ब्रह्मैव प्राप्नोति, न तु संसार-मितरगतिपरिहारात् । एतयोश्च गत्योरेवंविधां महत्तां ब्रह्मविदां ज्ञेयत्वेन स्थितां तत्त्वविदो वदन्ति । सर्वदेहेषु मनःप्रसरसहचारोऽयं प्राणप्रसरो यत उदेति, यत्र चास्तमेति तत्कालकलनासकलप्रपञ्चविरहितब्रह्मतत्त्वोपलब्धिपदम् । ततश्च यथोक्तप्राणप्रसरनिबद्धः सकलः कालादिप्रपञ्चस्तदुदयास्तमयदशावि-मर्शक्षमसंविदां ब्रह्मविदां प्रलीयते । तादृशीं च दशामासाद्य यो ब्रह्मवित्पर-मयोगी देहमुत्सृजति स ब्रह्मण्येव परिणतो न पुनरावर्तते । यस्तु केवलयोगी तां दशां प्रत्यवमार्ष्टुं न कुशलः स चान्द्रमसं ज्योतिरपानप्रसररूपमाश्रित्योत्का-मद्देहान्तरे संक्रामति । यत्र क्रमेण सिद्धिमाप्स्यतीत्येवमनयोर्गत्योः सिद्धिहेतु-विभागविज्ञानमत एवोक्तं, नैते सृती पार्थ जानन्योगी मुह्यतीति । यत एवं तस्मात्सर्वेषु कालेषु बाह्यदृष्टोत्तरायणदक्षिणायनादिबहुभेदप्रतिपादितेषु योगयुक्तो भव, यथोक्तेन प्रकारेण प्राणापानगतिज्ञामात्मके योगे समाधौ युक्तोऽवहितो भव ॥

यतोऽस्य योगस्यायं प्रभावः,

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाऽऽद्यम् ॥ २८ ॥

इति श्रीभगवद्गीतासूपनिषत्स्वष्टमोऽध्यायः ॥ ८ ॥

इदं सप्तप्रश्नकव्याकरणरूपं वस्तु विदित्वा ज्ञात्वा यथोक्तसमाधिस्स्तत्सर्वं वेदाध्ययनयज्ञतपोदानाद्यन्तवत्पुण्यक्रियाफलमत्येति, अतिक्रामति । यत आद्यम-नुत्तरमत एव परमनन्तानन्दमयत्वादत्युत्कृष्टं स्थानं धामोपैति प्राप्नोति, परमात्मनि स्वाभाविकीं प्रतिष्ठां लभते, इति यद्यप्येवं कैश्चिदयमर्थो व्याख्यातो यथाऽमुयैव वृत्त्योत्तरायणकालसामग्र्यां प्रयाता ब्रह्मविदोऽर्चिरादिसंज्ञलोकान्त-

राक्रमणक्रमेण ब्रह्म गच्छन्ति । योगिनश्चात एव योगिशब्देनोक्ता दक्षिणायन-कालसामग्र्यां प्रयाताः सन्तश्चान्द्रमसं ज्योतिः प्राप्य धूमादिसंज्ञलोकान्तराक्रमण-क्रमेण संसार आवर्तन्त इति पूर्वोक्तयुक्त्या चैतदपि व्याख्यानं न संगच्छते । यथोक्तयुक्त्या चायमपि क्रमोऽनयोरेव गत्योरन्तर्भवतीति केचिन्मन्यन्ते, तदत्र परमार्थवेदिनः प्रमाणमित्योम् ॥

गम्भीरैर्विपुलैः स्वभावविमलैः श्रीमत्पदार्थोज्ज्वलैः
स्फीतां सप्तभिरम्बुराशिभिरिव ब्रह्मादिभिर्वस्तुभिः ।
अध्यायस्य नरोऽष्टमस्य विवृतिं पृथ्वीमिमामञ्जसा
यः स्वीकर्तुमलं स एव विदुषां साम्राज्यमेकोऽर्हति ॥

श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि
भगवद्गीताविवरणेऽष्टमोऽध्यायः ॥ ८ ॥

## ॥ अथ नवमोऽध्यायः ॥

अष्टमाध्यायपरिसमाप्तावष्टमप्रश्ननिर्णये तु काले शुक्लकृष्णगतिद्वयज्ञानं ब्रह्मप्राप्त्युपायत्वेनोपदिष्टमतस्तावन्मात्र एव ब्रह्मप्राप्त्युपायस्त्वया मा वेदीत्यर्जुनम-ष्टमाध्याये प्रतिपादितमेवोपदेशं स्मारयन्संग्रहेण

**श्रीभगवानुवाच ।**

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥**

तुशब्दो व्यतिरेके । अष्टमाध्यायोक्त एव लक्षणोपायव्यतिरेकेणेदं स्वबु-द्धिनित्यसंनिहितं ज्ञानं ब्रह्मप्राप्त्युपायभूतं विज्ञानेन स्वसंवित्साक्षात्कारपर्यन्तेन विशिष्टेन ज्ञानेन बोधेन संयुक्तं तुभ्यमहं प्रकर्षेण संक्षेपतः सारप्रतिपादनरूपे-णातिशयेन वक्ष्यामि कथयिष्यामि । कीदृशाय । अनसूयवे श्रद्धाविशुद्धबुद्धि-त्वाद्योऽस्मै ज्ञानायानसूयासि यथोक्तस्य फलस्य संभावनावशादज्ञानवदगर्हण-मारभसे । कीदृशं ज्ञानं वक्ष्यामि ? गुह्यतमम् । गुह्यं गुह्यतरं च पूर्वेष्वध्यायेषु ज्ञानमुक्तम् । इदं तु तदपेक्षयाऽतिगुह्यम् । अनाविर्भूतविवेकजज्ञानानां गुहायां दूरत-रेऽध्वनि स्थितम् । रहस्यतया वा गुह्यमत एव त्वं यद्विदित्वा जन्मजरामरण-चक्रपरिवर्तमानलक्षणादशुभादश्रेयसो मोक्ष्यसे, स्वयमेव मोक्षं प्राप्स्यसि ॥

१ राना १-' अनयोः ' इत्यत्र ' तयोः ' २ कोशेषु—रामकण्ठ. ३ राशा १-°त्वाद्यतोऽस्मै. ४ राना १-°तरं तु.

यतो वक्ष्यमाणज्ञानोपायनिष्ठस्यान्तकाले गतिद्वयज्ञानाभ्युपायव्यतिरेकेणापि ब्रह्मप्राप्तिर्निर्दिष्टैव, अत एवास्य ज्ञानस्य प्रशंसार्थमाह ।

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

इदं वक्ष्यमाणं ज्ञानमुत्तममनन्यसामान्यं पवित्रं पावनम् । सर्वकिल्बिषकलङ्कपङ्कसंक्षालनहेतुमन्ति हि पवित्राणि तीर्थमन्त्रतपोयज्ञदानादीनि तु ज्ञानराहितत्वादन्तवन्ति । यदि परमे तज्ज्ञानसंस्कृतान्यनन्तफलमश्नुवीरन्नत एवोत्तमं पवित्रमित्युक्तम् । यतो राजविद्यैषा राज्ञां जनकाश्वपतिप्रभृतीनामुग्रं स्वकर्माण्यनुतिष्ठतामेषा विद्या ज्ञानमपवर्गफलत्वेन श्रूयते । ततश्च तेषां राज्ञां रहस्यमेतत् । यतः प्रत्यक्षावगमं, प्रत्यक्षः स्वसंवेदनवेद्योऽवगमो बोधो यस्य तत्तथाविधम् । अन्येषां हि पवित्राणां कालान्तरे देहान्तरे लोकान्तरे च फलावगमो भविष्यति । तथा धर्म्यं, धर्माच्छास्त्रोदिताद्वर्णाश्रमक्रमविभक्तात्सदाचारादनपेतमत एव कर्तुं संपादयितुं सुसुखमत्यन्तसुखकरं सहजस्वभावकर्ममात्रसाधनत्वात् । तथाविधं सदप्यव्ययमविद्यमानक्षयं तत्प्राप्यस्य फलस्य मत्समापत्तिलक्षणस्य नित्यत्वात् ॥

एतच्च मदनुग्रहोद्गतभक्तिश्रद्धादिगुणसंपद्भिरेव सुलभम् । यतः,

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

अस्योक्तस्य वक्ष्यमाणस्य च ज्ञानरूपस्य धर्मस्याश्रद्दधाना यथोक्तफलासंभावनापराः पुरुषा मां यथोक्तस्वरूपं परं ब्रह्म प्राप्य मत्समापत्तिमनासाद्यैव मृत्युसंसारयोर्भूतेषु नित्यपरिवर्ततोर्मरणजन्मनोर्वर्त्मनि निवर्तन्ते पुनः पुनरापतन्ति । किमुक्तं भवति । मदनुग्रहसुधासागरसमुद्गतश्रद्धासुरतरुमञ्जरीसकलासिद्धिप्रसवैकहेतुर्यैरुपास्यते तैरेवानेन ज्ञानेन सुलभो, नान्यैरिति ।

तदिदानीं ज्ञानं प्रतिपादयितुमाह ।

**मया ततमिदं कृत्स्नं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**
**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥ ५ ॥**

[ शां. पा. १–सर्व. ]

---

१ राज्ञा २–°ग्रहोत्थित°.

मम संबन्धिनमैश्वरमीश्वरे सर्वथा स्वामिन्येकस्मिन्भवं योगमनन्याधिकरणं समाधिं पश्य, प्रतिपद्यस्व। यत इदं वेद्यत्वेन सर्वप्रमातॄणां कृत्स्नं सर्वं संक्षेपतश्चराचरभावरूपमवान्तरभेदपरिकल्पनया निष्पर्यन्तं वस्तु मयोपादानसहकार्यादिकारणान्तरानिरपेक्षेण नित्यनिर्विकारसामान्यसंविन्मात्रस्वभावाप्रच्युतेनानन्यानुकार्यनिरतिशयनिजक्रीडामात्रिकप्रयोजनेन स्वेच्छैकसाधनेनैकेन कर्त्रा ततम्। इत्थमनन्ताश्चर्यावभासरूपतया विस्तारितं जगद्भुवनमव्यक्तमूर्तिना मन्मायोत्थापितैः सर्वैः प्रमातृभिरिदंतया परिच्छेत्तुमशक्यत्वादव्यक्ताव्यपदेश्यव्यक्तिविरहिता मूर्तिराकृतिः स्वरूपं यस्य स तथा, तेन तादृशेन । किमुक्तं भवति। ब्रह्मादेरारभ्य परमक्षुद्रजन्तुपर्यन्तस्य सर्वस्य प्रमातुर्यत्संवेद्यं वस्तु येन येन प्रकारेण यदा यदा यत्र यत्र प्रकाशते तत्संवेद्यमानं सन्तमात्मानं लभते । संवेद्यमानता च संवेदितुः कर्मभावापत्तिः संवेदिता च परमार्थतः सदैक एव भवितुमर्हति । यो न कथंचिन्न कुत्रचित्संवेद्यत्वलक्षणविशेषणसंपर्कं सहते। ततो मत्स्थानि मय्येकस्मिन्संवेदितरि स्थितानि सर्वाणि निखिलानि स्थावराणि जङ्गमानि च संवेद्यानि भूतानि। एवं सर्वकर्ता सर्वशक्तिहेतुरहम् । न च तेषु भूतेषु व्यवस्थितः । यथा नित्यं संवेदितृत्वमात्रस्वभावाव्यभिचारिणो मम व्यवस्था संवेद्यानां सर्वभूतानां व्यवस्थितिहेतुर्न तथा सर्वभूतव्यवस्था मद्व्यवस्थितिहेतुरित्यर्थः । सर्वाणि हि भूतानि संवेद्यत्वादेवोत्पादविनाशादिधर्मसंबन्धादानित्यानि। मम तु संवेदितृत्वमेकं लक्षणमिति कथं मम भूतस्थित्यधीनाऽवस्थितिर्भवेत् । इत्थं मदधीनास्थितिकान्यपि भूतानि न मत्स्थानि मयि संवेदितरि मद्रूपतयैव न स्थितिं भजन्ते, वेद्यतया स्फुरणात् । भूतस्थितिहेतुरहं यथा संवेदितृतयैव नित्यं स्फुरामि न तथाऽन्यान्यपि भूतानि, संवेद्यत्वेनैव तेषां प्रतीतेः ॥

एवं यथोक्तेन प्रकारेण ममाऽऽत्मा स्वभावो भूतभृद्भूतानि बिभर्ति धारयति, तेन तेन रूपेणावस्थापयति। न च भूतस्थो न भूतस्थित्यधीनस्थितिक इत्युक्तमेव । अतश्चानेन क्रमेण भूतभावनो भूतानि भावयति सृजतीत्यर्थः । अत्र केनचित्सादृश्यांशेन दृष्टान्तमाह ।

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

---

१ राना १-'हेतुः' नास्ति.

एवमनेन प्रकारेण मय्यनवच्छिन्नमहिम्नि स्थितान्याधेयत्वमापन्नानि तत्तद्देशगतानि सूक्ष्माणि महान्ति च भूतानि, उपधारय बुध्यस्व। कथम्। यथाऽऽकाशे निरवच्छेदव्याप्तौ नित्यं सदैव स्थितो वायुः। कीदृशः। सर्वगस्तत्र तत्र देशे गतः कृतव्याप्तिः, महांश्चान्यापेक्षया व्यापकः। एवं मत्स्थानि भूतानि बुध्यस्व। अत्रेदं तात्पर्यम्। यथा वायोः सर्वत्र सर्वगत्वमहत्त्वादयो धर्मा अपर्यन्ताकाशावकाशैकनिबन्धनास्तथा सर्वभूतानां सर्वधर्मा मत्स्वभावानुप्रवेशैकनिबन्धना इति ॥

तदेतन्निगमयितुमाह।

**ऐवं हि सर्वभूतेषु चराम्यनभिलक्षितः ।**
**भूतप्रकृतिमास्थाय सह चैव विनैव च ॥ ७ ॥**

[ १–अयं श्लोकः शां. पाठे नास्ति. ]

एवमनेन वाय्वाकाशसंबन्धौपम्येन प्रकारेण सर्वभूतेषु चरामि, तानि व्याप्नोमि। अनभिलक्षित इदंतया केनाचिदप्यनवधारितस्वरूपः। किं कृत्वा चरामि। भूतप्रकृतिं प्राक्प्रतिपादितचेतनात्मकभूतलक्षणां प्रकृतिं स्वभावमास्थायाधिष्ठाय। कथं चरामि। सह चैव विनैव च। नित्यमन्योन्यसंबन्धत्वात्सह वेद्यवेदकलक्षणस्वरूपभेदाद्विनैवान्योन्यपृथक्तयैवान्यो हि वेदकस्वरूपो मम स्वभावोऽन्यच्च मदिच्छोद्भावितं वेद्यस्वरूपम् ॥

मदिच्छोद्भावितत्वमेषां प्रतिपादयितुमाह।

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामकीम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥**

[ शां. पा. १–मामिकाम् . ]

एतानि चेतनाचेतनानि सर्वभूतानि महाकल्पावसाने मदीयां प्रकृतिं स्वभावं यान्ति। मदिच्छयैव मयि प्रलीयन्त इत्यर्थः। तानि च कल्पादौ कल्पान्तरारम्भेऽहमेव विसृजामि। चतुर्दशविधेनैव भेदेनावभासयामि। न तु यान्येव प्रलीनानि तान्येव पुनः सृजामीत्यर्थः। ईश्वरेच्छयाऽपर्यनुयोज्यत्वात्स्वातन्त्र्येऽपि चतुर्दशविधमेव भूतसर्गं प्रलयोत्पादावस्थयोः संहरति सृजति च परमेश्वर इति तात्पर्यम् ॥

एतदेव निगमयति।

---

१ राना १–°पगमेन.

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिदं[1] कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥**

[ शां. पा. १-°ग्राममिमं. ]

स्वां प्रकृतिं निजस्वभावं नान्यत्किंचित्कारणान्तरमवष्टभ्यावलम्ब्येदं सर्वं भूतग्रामं प्राणिसमूहं पुनः पुनर्भूयोऽनादिप्रबन्धप्रवृत्तकल्पादिकालकल्पनया सृजाम्येवमुद्भासयामि । प्रकृतेरेव वशान्मत्स्वभावपारतन्त्र्यादेवावशमस्वतन्त्रम् । कल्पान्ते च तथैव संहरामीत्यत्रानुवर्तनीयम् ॥

किंच,

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥**

तानि सर्गसंहाररूपाणि[1] कर्माणि न पुनर्मां बध्नन्ति मन्मायोद्भावितनानाक्षेत्रज्ञवन्नियमितविपाकारम्भकत्वादिना न परतन्त्रीकुर्वन्ति । यथा क्षेत्रज्ञानां कर्माणि जात्यायुर्भोगलक्षणविपाकारम्भकत्वेन संसारबन्धकारणत्वमापद्यन्ते, न तथा सर्गादिकर्माणि ममेत्यर्थः । कीदृशं सन्तं मां न निबध्नन्ति । हेतुगर्भविशेषणमाह । तेषु कर्मस्वसक्तत्वान्ममत्वादिग्रहाभावेनानिमग्नचित्तत्वादुदासीनवत्तटस्थवदासीनं स्थितम् । यथा परकीयकर्मसु परो नैतानि मम तत्तत्फलदानीति मन्यमानस्ताटस्थ्यमनुभवंस्तैस्तैः कर्मभिः स्वफलभोक्तृत्वादिना न नियम्यते, तथा सर्गादिभिः कर्मभिर्न निबध्यो, यतस्तानि सर्गादीनि कर्माण्याचिन्त्यवैभवस्वमायोद्भावितान्योन्यभेदान्क्षेत्रज्ञान्प्रति मम सर्वतः स्वेच्छामात्रेण तथावभासकत्वमेव कर्तृत्वम् । क्षेत्रज्ञा एव हि मन्मायामोहिताः सन्तोऽन्योन्यभेदेनावभासमानानां भावानां सर्गाद्यवस्थायोगित्वं प्रतिपद्यन्ते । मम पुनरेते सर्वे भावास्तत्तत्सर्गाद्यवस्थाजुषोऽप्यद्वयचिन्मात्रलक्षणात्स्वभावान्न भिद्यन्ते ।

इत्यनेन प्रकारेण तेषु कर्मसूदासीनवदासीनं मामेतानि न निबध्नन्तीत्युक्तम् । एष चार्थः प्रागेव पुन पुनः ' तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ' इत्यादिना, 'न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि' इत्यादिना च प्रतिपादितः । यद्येवं वस्तुस्थित्या परमेश्वरो नेदं जगत्साक्षात्सर्गादिकर्माणि युनक्ति, तत्केनेदं जगत्सृज्यत इत्याह ।

---

१ राशा १·२-°संहारादि°.

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥**

मया परमेश्वरेण नित्यं स्वभावमात्रावस्थितेनैवाध्यक्षेणाधिष्ठात्रा हेतुभूतेन प्रकृतिः सप्तमेऽध्याये चेतनाचेतनविभागेन प्रतिपादितपरापरस्वरूपा स्वभाववृत्तिरेवापर्यन्तस्थावरजङ्गमभेदयुक्तं जगत्सूयते, जनयति । अनेन हेतुना निमित्तेनेदं जगद्विपरिवर्तते, सर्गस्थितिसंहारप्रबन्धचक्रे परिभ्रमति ॥

एवमद्भुतैश्वर्यैकास्पदम्,

**अवजानन्ति मां मूढा मानुषीं तनुमास्थितम् ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥**

[ शां पा. १—आश्रितम्. २—मम भूतमहेश्वरम्.—अत्र रा. टीकायां विद्यमानः 'ममाव्ययमनुत्तमम्' इति चरमचरणपाठो यद्वा उत्तरार्धमेव शां. पाठे ७·२४ श्लोके दृश्यते । स तु राम. पाठे तत्र नास्ति । ]

मूढा मायामुषिततत्त्वज्ञाना मां यथाप्रतिपादितस्वभावमवजानन्ति नित्योदितनिरतिशयप्रकाशप्रद्योतमानस्वभावमपि मोहबलोत्साहविच्छेदान्मज्जिज्ञासायामप्यवज्ञामाश्रयन्ति । कीदृशं सन्तं मामवजानन्ति । मानुषीं तनुमास्थितम् । मानुषीग्रहणमुपलक्षणार्थम् । तेन मनुष्यादिभेदेनान्योन्यभिन्नानन्ताकृतिविशेषभेदरूपां पारमार्थिकस्वरूपतिरोधानतिरस्कारिणीमाश्रितम् । अत एव ते मूढाः । कीदृशाः सन्तो मामवजानन्ति । एवंविधया मन्मायया मदीयं परमेतस्मान्नानाचेतनाचेतनभावलक्षणात्प्रपञ्चादन्योन्यविलक्षणं, तथाऽव्ययमविनश्वरमत एवानुत्तमम् । उत्तरोत्तरविचार्यमाणप्रकर्षे सत्यविद्यमानोऽन्य उत्तमः प्रकृष्टो यस्मात्तं तथाविधं भावं पारमार्थिकीं सत्तामजानन्तः सन्तो मामेव विमर्शाभावादबुध्यमानाः ॥

यतस्ते मूढाः सन्तः,

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १३ ॥**

[ शां. पा. १—राक्षसीमासुरीं चैव. ]

मोहिनीं स्वभावाज्ञानकारिणीं प्रकृतिं गुणमयं स्वभावं श्रिता देहात्मकाहंकारनिबन्धनस्थितयोऽत एव कीदृशीं प्रकृतिम् । आसुरीं रजोलेशानुगततमः-

प्रधानां, तथा राक्षसीं केवलतमःप्रधानामुत्तमाधमासुरसर्गभेदत्वेन प्राक्प्रस्तावनायां प्रतिपादितस्वरूपाम्। यत एवंविधां प्रकृतिं श्रिताः, ततो मोघाशा मोघाः फलशून्या आशा येषां ते तथाविधाः। ते ह्यासुरराक्षसप्रकृतित्वाद्रजस्तमसोरुभयत्वे सति कामात्मानो भोगविषयं संकल्पमेव कुर्वन्ति, न तु तत्फलप्राप्तिहेतुं शास्त्रोदितं कर्माऽऽरभन्ते। ततो मोघाशा इत्युक्तम्। तथा मोघकर्माणो यदपि कर्माऽऽरभन्ते तच्छास्त्रीयोपायनियमाभावान्मोघं निष्फलं येषां ते तथाविधाः। वक्ष्यति हि राजसतामसयोः कर्मणोर्लक्षणम्। तद्यथा,

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम्॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम्।
मोहादारभते कर्म यत्तत्तामसमुच्यते॥ इति।

तथैवंविधं कर्तृलक्षणमपि,

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते॥

तथा- अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते॥

तथा मोघज्ञानाश्चिकीर्षितकर्मनिष्पत्तिहेतुत्वात्कर्मारम्भपूर्वताविज्ञानमपि मोघं निष्फलं येषां त तथोक्ताः। ज्ञानपूर्वकं हि कर्म। ज्ञानस्यैव चाऽऽसुरादिप्रकृत्याश्रितज्ञातृसंबन्धिनो विपर्ययप्रतिपत्तिदोषसंबन्धात्कर्मफलेन विसंवादात् निष्फलता स्थितैव। तथा चैवंविधज्ञानलक्षणमपि वक्ष्यति,

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्॥
वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम्॥

तथा- यत्तु कृत्स्नवदेकस्मिन्कार्येऽसक्तमहेतुकम्।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम्॥ इति।

मोघज्ञानत्वाद्विचेतसस्तत्त्वार्थनिष्ठत्वाभावात्सदपि विगतं सम्यग्ज्ञानलक्षणस्वकार्याकरणादविद्यमानमेव चेतोऽन्तःकरणं येषां ते तथाविधाः॥

एवमेकान्ततो मायाक्रोडीकृतानामासुरप्रकृत्याश्रितानां वृत्तिं प्रतिपाद्य विद्यानुगृहीतानां प्रवृत्तिनिवृत्तिविषयशास्त्रोपदेशमात्रभूतानां दैवप्रकृत्याश्रितानां प्रतिपिपादयिषुः परदैवप्रकृत्याश्रितानां तावत्तां प्रतिपादयितुमाह।

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥**

प्रस्तावनाप्रदिपादितपरापरस्वरूपमय्याः परस्या देव्याः प्रकृतिं दैवीं सम्यग्ज्ञानविवेकद्योतनशीलत्वाद्देवशब्दवाच्यानां संबन्धिनीं प्रकृतिं स्वभावमाश्रितास्त्वत एव महात्मान उत्कृष्टस्वभावा मां परमात्मानं भजन्ते । चतुर्विधया सेवयाऽनन्यमनसो मद्व्यतिरिक्तवस्त्वन्तराभावप्ररूढप्रतिपत्तित्वान्मय्येवैकास्मिंस्तत्त्वे मनो येषां ते तथाविधाः । ज्ञात्वा चानुष्ठानमिति स्थितेः । कीदृशं मां विदित्वा भजन्ते ? भूतादिं भूतानां चेतनाचेतनानां मध्य आदिं प्रथमं तथाऽव्ययम्, नित्यत्वान्न मम क्षयो विद्यत इत्यर्थः । सर्वभूतान्याद्यन्तवन्तोऽहमादिरेव, नान्तवानित्यत्र तात्पर्यम् ॥

किंच,

**सततं कीर्तयन्तश्च यतमाना यतव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥**

[ शां. पा. १–°यन्तो मां यतन्तश्च दृढव्रताः. ]

त एव दैवप्रकृत्याश्रिताः प्रबुद्धाः सततमव्यवधानेन कीर्तयन्तो मन्त्रजपस्वस्त्यादिनोद्घोषयन्तस्तथा ध्यानादिना यतमानाः, तथा नमस्यन्तः प्रह्वीभवन्तो मां भक्त्या हेतुभूतया नित्ययुक्ताः सन्त उपासते, वाङ्मनःकायव्यापारान्मदेकविषयान् कुर्वाणाः परिचरन्तीत्यर्थः ॥

किंच,

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६ ॥**

पूर्वेभ्यः प्रसिद्धभक्तिप्रकाराश्रयणेन मद्यजनपरेभ्योऽन्ये विलक्षणज्ञानेन विशुद्धसंविन्मात्रमत्स्वरूपचिन्तनैकलक्षणेन यज्ञेन यागविधिना यजन्तः पूजयन्तश्च मामुपासते सेवन्ते । कथं मां ज्ञानयज्ञेनोपासते ? एकत्वेन सकलप्रपञ्चपरिहारादभिन्नैकसंविन्मात्रमत्स्वरूपतया, तथा पृथक्त्वेन नानात्वेनात एव बहुधाऽनेकधा ज्ञानेन क्रियाद्युपचरणीयविचित्राकृत्यादिभिन्नरूपतया । वस्तुतः कीदृशम् ? विश्वतोमुखं सर्वतः सर्व एवोपासनीयाभेदान्मुखं प्रत्यभिज्ञाकारणं यस्य तं तादृशम् । इदमत्र तात्पर्यम् । द्विविधः पारमार्थिको मत्स्वरूपोपासनाक्रमः । एकः संविन्मात्रैकतत्त्वविषयज्ञानसाधनः । अपर एकस्यैव तत्त्वस्य नानाजगद्भावनानाशक्तिसमूहत्वात्तद्द्वारेण तस्य तस्योपासनमिति ॥

तदेवैकस्य तत्त्वस्य सर्वशक्तित्वं प्रतिपादयितुमाह ।

**अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम् ॥ १७ ॥**

क्रतुयज्ञयोर्यद्यपि पर्यायत्वेन व्यवहारो दृश्यते तथाऽपि यज्ञशब्दसंनिधाने पशुसोमादिसाधनविशिष्ट एव यज्ञः क्रतुशब्देनात्रोक्तः । ततो यथाप्रतिपादितब्रह्माद्वैतस्थित्या सर्वो यागविधिर्नानादेवतासंप्रदानोऽहमेव । तथा स्वधा पितृतर्पणमन्त्रोऽप्यहमेव । तथा नानौषधिविकारात्मकमौषधं यागोपकरणद्रव्यमहमेव । तथा संप्रदानभूतदेवतासंमुखीकारादिविविधार्थवाचकशब्दविशेषरूपो मन्त्रो यज्ञोपकरणमन्त्रविशेषोऽप्यहमेव । तथाऽऽज्यं घृतं तर्पणद्रव्यं तथाऽग्निर्यागक्रियाधिकरणम्, तथा हुतं हवनं होमकर्मेति यज्ञादिरूपतया ब्रह्मार्पणविधिन्यायेनाहमेवं स्थित इत्यत्र तात्पर्यम् ॥

**पिताऽहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १८ ॥**
**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥**

अस्य जगतः समस्तस्य चराचरस्य विश्वस्योत्पत्तिमूलकारणत्वात्पिता माता चाहम् । यदि वा पितरौ यथाऽपत्यस्य समस्तयोगक्षेमोद्वहननित्यावहितौ तथाऽहमस्य जगतः । तथा धाता धर्ता स्थितिहेतुस्तथा पितामहो ब्रह्मादीनां जगतः स्रष्टृत्वेन स्थितानां जनकत्वात्पितामहः । पवित्रं परमं पावनं यद्वेद्यं ज्ञेयं वस्तु । तथोंकारः परब्रह्मवाचकः प्रणवाख्यो वेदादिः शब्दविशेषस्तत्प्रभवाणि च ऋक्सामयजूंषि । तथा गम्यते ज्ञायते वा परं तत्त्वमनयेति गतिरुपायः । तथा भर्ता पोष्टा, तथा प्रभुर्यथेष्टाविनियोगैकस्वामी । तथा साक्षी शुभाशुभकर्माध्यक्षः, तथा निवासः सर्वभूतानामेकमावसथं, तथा शरणं सर्वोपद्रवप्रशमायाऽऽश्रयः । तथा सुहृत्सर्वभावेनोपकारी । तथा जन्मविनाशस्थितिहेतुत्वात्प्रभवः प्रलयः स्थानं च । तथा प्रलीनं सद्यत्रावतिष्ठते तत्प्रधानात्मकं निधानं, तथा यतः प्रभवति तत्प्रधानस्याप्यव्ययमक्षयं बीजं कारणमिति न तत्किंचिदस्ति यदहमस्य जगतो न भवामीत्यर्थः ॥

---

१ राशा २ ना १-'दृश्यते ' नास्ति. २ राना १-एवाऽऽस्थितः.

तथा च,

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥**

सूर्यो भूत्वा ग्रीष्मादौ रसमाददानोऽहं तपामि, यतस्तदा ह्यहमेव वर्षं निगृह्णामि निरुणध्मि । वर्षाकाले चाहमेव पर्जन्यो भूत्वोत्सृजामि । तपनवर्षणक्रिययाऽन्नाद्युत्पादनेनाहमेव जगद्वर्तयामीत्यर्थः । तथाऽमृतमविनाशि यद्वस्तु, मृत्युश्च विनाशहेतुरहमेव । किं बहुनोक्तेन । यत्किंचित्सद्विद्यमानं शोभनं वा यदसत्तद्विपरीतं किंचिज्जगति संभवति तत्सर्वमहं मच्छक्तिरेवैका सदसद्भावेनावभासते ॥

इत्येवं परदैवप्रकृत्याश्रितसर्गभेदप्रतिपादनप्रसङ्गेन ब्रह्मस्वरूपं संग्रहेणोक्त्वेदानीमपरदैवप्रकृत्याश्रितानां पुरुषाणां प्रवृत्तिं प्रतिपादयितुमाह ।

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोक-**
**मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २१ ॥**
**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ॥ २२ ॥**

ज्ञानरहितक्रियामात्रोपदेशपर्यवसितार्था ऋग्यजुःसामलक्षणास्तिस्रो विद्या अधीयते विदन्ति वा त्रैविद्याः, मुख्यतया ब्राह्मणादयस्त्रैवर्णिकाः । धूतपापा आनिषेकाच्छास्त्रविहितसंस्कारसंपन्नत्वाद्धुतकल्मषाः । तथा निवृत्तयथोक्तब्रह्मचर्याद्याश्रमनियमाः सन्तः सोमपा नित्यनैमित्तिकस्वकर्मानुष्ठाननिष्ठा इत्यर्थः । तथाविधाः सन्तो देवतान्तरयजनविधिरूपैर्यज्ञैस्तैस्तैः शास्त्रचोदितैर्यागविशेषैः सम्यग्ज्ञानाभावादविदन्तोऽपि मामेवेष्ट्वा पूजयित्वा स्वर्गतिं देवलोकप्राप्तिकामात्मानः सन्तः प्रार्थयन्त उपयाचन्ते । यतस्तैस्तैर्यज्ञविधिभिस्तांस्तान्देवविशेषान्यजन्त इति विश्वतोमुखमेकं तत्त्वं मामेव यजन्ते । केवलं संप्रति विद्याशक्त्याऽननुगृहीताः परं मदीयं भावमविदन्तो भोगमात्रं यज्ञादिक्रियाफलं मन्यमा-

नाः स्वर्गमभिकाङ्क्षन्ति । ते तथाविधास्त्रैविद्या देहान्ते स्वकर्मोपनतं स्वर्गलोकं विशालं विपुलं देवलोकं गत्वा, तद्गतान्भोगान्भुक्त्वोपसेव्य स्वकर्मोपार्जिते पुण्ये तदनुरूपकालातिवाहनात्क्षीणेऽन्ते गते मर्त्यलोकं कर्मभूमिमिमां स्वकर्मानुरूपजातिविशेषाश्रयणेन विशन्ति प्रतिपद्यन्ते । एवमनेन क्रमेण त्रयीधर्मं वेदोक्तं स्वं स्वमाचारमनुप्रपन्नाः समाश्रिताः सन्तः कामकामाः स्वर्गादिभोगाभिकाङ्क्षिणश्चातुर्वर्णिका अपि गतागतं स्वर्गादिभूमौ गमनं आगतं, ततो भूयः कर्मभूमावागमनं लभन्ते प्राप्नुवन्ति । संसारबन्धभागिनः पुनः पुनर्भवन्तीत्यर्थः ॥

एतदन्तेन ग्रन्थेन ज्ञानं कथयित्वा विज्ञानकथनमाह ।

**अनन्याश्च विरक्ता मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

[ शां. पा. १–°न्याश्चिन्तयन्तो मां. ]

ये जनाः परां दैवीं प्रकृतिमाश्रिता दृष्टानुश्राविकगुणात्मकेभ्यो भोगेभ्योऽशुद्ध्यतिशयक्षयादिदोषवद्भ्यो विरक्ताः सन्तो नित्यनिर्मलनिरतिशयानन्तानन्दसुधासागरं मां परमकारणं ब्रह्मतत्त्वं पर्युपासते, यथाप्रतिपादितज्ञाननिष्ठतया स्वकर्माण्याजनितः समन्तात्सेवन्ते । कीदृशाः सन्तः। अनन्या अविद्यमानमन्यन्मव्द्यतिरिक्तं वस्तु येषां ते तथाविधाः । मन्मयमेव सर्वमिदमनुभवन्त इत्यर्थः । तेषां तादृशानां नित्याभियुक्तानां यथोक्तज्ञानैकताननतया सततोद्युक्तानां सर्वास्ववस्थासु यथोक्तमत्स्वरूपस्मरणैकपरायणानामित्यर्थः । अहं परमेश्वरो योगक्षेमं वहामि । योगं प्रागनासादितेन मत्स्वरूपसंवेदनात्मकेन फलेन संबन्धं क्षेममासादितस्य पुनरपरिलोपलक्षणं धारयामि । ये नित्यं मन्मयास्तेषां कुतो योगक्षेमक्षतिरित्यर्थः ॥

एवं यथोक्तोपायनिरपायैर्निवेशितान्तःकरणतया मत्स्वरूपानुभवरूपां परां काष्ठामधिरूढा भक्तिरेव विज्ञानमिति तात्पर्यम् । ननु विश्वतोमुखस्त्वमेवैकं तत्त्वमिति देवतान्तरयाजिनोऽप्यनन्या एव, तत्कथमुक्तमनन्या ये मामुपासते तेषां योगक्षेमं वहामीत्यत्राऽऽह ।

**येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २४ ॥**

---

१ राशा १–पराः. २ राना–'निरपाय' नास्ति.

सत्यं येऽपि जना अन्यदेवताभक्ताः परस्परं भिन्नस्वरूपांस्तान्सूर्येन्द्रादिप्रमुखान्देवविशेषान्भक्तास्तेऽपि परमार्थतो मद्व्यतिरिक्तद्वितीयवस्त्वभावान्मामेव श्रद्धया तत्तत्फलभिन्नसंभावनया यजन्ते पूजयन्ति । किंत्वविधिपूर्वकम् । मद्यजन एवंविधविधिरुक्तो वक्ष्यते च, यथोक्तज्ञाननिष्ठतया सर्वेषु यष्टव्येषु देवताविशेषेषु तासु तासु यागक्रियासु यष्टरि च स्वात्मन्यद्वयचिन्मात्रलक्षणमत्स्वरूपानुभवः । स च तेषां ज्ञानशून्यकेवलक्रियामात्रशरणानां विधिर्न संभवति । तस्मादविधिपूर्वकं मां यजन्त इत्युक्तम् ॥

एतदेव प्रकटयितुमाह ।

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २५ ॥**

सर्वयज्ञानां नानाभेदानां यागानामहमेव भोक्ता, एक एव परमेश्वरः फलस्य स्वीकर्ता, तथा प्रभुरनुष्ठानक्रियाधिष्ठितः सर्वे यज्ञा अहमेवेति । न पुनस्तथाविधं मां तत्त्वेन परमार्थेन यथोक्तेनाभिजानन्त्येकत्वेन प्रतिपद्यन्ते । अतो हेतोस्ते तादृशा अनुष्ठातारश्च्यवन्ति मत्तो वियुज्यन्ते नानात्वेन सर्वं पश्यन्तीत्यर्थः ॥

ततश्च,

**यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२६॥**

देवेभ्यो देवतार्थं व्रतं नियमो येषां ते शक्रादिदेवाराधका देवव्रतास्तत्सपर्यासिद्धौ देवानेव यान्ति । तल्लोकभाजो भवन्तीत्यर्थः । एवं पितृव्रताः पितॄन्यान्ति । तथा भूतेभ्यो यक्षरक्षःपिशाचादिभ्यस्तदर्थमिज्या यागो येषां ते तादृशास्तान्येव पूर्ववद्यान्ति । देवपितृयाजिनः सात्त्विकाः, भूतयाजिनस्तु राजसाश्च तामसाश्च । यदुक्तम् ।

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतपिशाचांश्च यजन्ते तामसा जनाः ॥ इति ॥

ये तु निस्त्रैगुण्यास्ते मद्याजिनो मामेव त्रैगुण्यातीतस्वरूपं यष्टुं शीलं येषां ते तथाविधमेव मत्स्वरूपं परब्रह्म यान्ति समापद्यन्ते ॥

स च मद्यागो देवव्रतादियागवत्तत्स्नानाद्रव्यसंभारसाधनो नैवेत्याह ।

---

१ राना १-°पूर्वं मां.

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २७ ॥**

भक्तिरद्वयचिन्मात्रस्वरूपब्रह्मतत्त्वभावनयाऽऽत्मन एव, तस्य तस्य वा नानादेवताविशेषस्योपासनं, तथा साधनभूतया यस्तत्त्ववित्पत्राद्यपि यत्किंचिन्मह्यं प्रयच्छति तत्तस्य प्रयतात्मनस्तथाविधाद्वयविज्ञानसमाहितान्तःकरणस्य तादृशभक्त्युपहृतमश्नाम्युपभुञ्जे । यादृशभावनाविशेषेणोपहृतं तथैव तत्स्वी करोमीत्यर्थः ॥

यत एवं ततः,

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २८ ॥**

यत्करोषि, तत्तत्फलार्थितया यत्कर्मानुतिष्ठसि, यच्चाश्नासि तत्तत्कर्मफलभूतमुपभुङ्क्षे, तत्सर्वं मदर्पणं कुरु, मयि ब्रह्मस्वरूपेऽर्पणं मदात्मकप्रतिपत्त्या निवेदनं यस्य तत्तादृशं कुरु संपादय । तच्च कार्यं ज्ञानरहितानां नानाफलहेतुत्वेन व्यवस्थितं विवृणोति । यज्जुहोषि तेषु तेषु यज्ञेषु तत्तद्देवतातर्पणार्थं यदग्नौ हवनक्रियया क्षिपसि । यच्चान्तर्वेद्यादौ ददासि पात्रेभ्यः प्रयच्छसि । यत्तपो नियमविशेषं चरसि, तत्सर्वं मदर्पणं कुरु । यज्ञदानतपोलक्षणासु क्रियास्ववश्यकर्तव्यासु तत्तत्फलाभिकाङ्क्षाकर्मण्यपरिहारेण मत्स्वरूपानुभवमेवैकं फलमवलम्बस्वेत्यर्थः ॥

अस्या भावनायाः फलमाह ।

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥**

एवमनेन प्रकारेण यज्ञादिकाः स्वाः क्रिया अनुतिष्ठन्नपि शुभाशुभफलैः शुभैः सुखात्मकैरशुभैर्दुःखात्मकैः क्रियाणां फलैर्मोक्ष्यसे, त्यक्ष्यसे । तानि ते बन्धनाय न कल्पयिष्यन्त इत्यर्थः । कीदृशैः । कर्मबन्धनैः कर्माणि ज्ञानशून्यानि बन्धनं नियमहेतुर्येषां तथाविधैः । कर्मनिबन्धनानि हि फलानि ज्ञानशून्यं बध्नन्ति, न यथोक्तज्ञानसंपन्नम् । अतस्त्वं संन्यासयोगेन फलेन संकल्पसमाधिना युक्तात्मा संबद्धस्वभावोऽत एव मुक्तः सर्वबन्धनेभ्यो विनिष्क्रान्तो मामेकं परमकारणमुपैष्यस्यहमेव संपत्स्यस इत्यर्थः ॥

ननु केषांचिद्यज्ञादिक्रियाभिरप्युपसेवमानानां बन्धनहेतुर्भवान् । अन्येषां तु पत्राद्युपहरतां मोक्षहेतुरिति किं तवापि रागद्वेषानुषङ्ग इत्यत्राऽऽह ।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ३० ॥**

सर्वभूतेषु चतुर्दशविधेन प्रपञ्चेन प्रसृतेषु परमार्थतस्तत्त्वैकत्वात्परतत्त्वात्मकोऽहं समो निर्विशेषवृत्तिः । अतो व्यतिरिक्तत्वाभावान्न मे कश्चिद् द्वेष्यो द्वेषदोषहेतुर्नापि प्रियो रागदोषहेतुः संभवति । एतौ भेददर्शिनामेवानुषक्तौ । ततश्च ये पुनर्महात्मानो मदिच्छयैव विद्याशक्त्यनुग्रहादेकतत्त्वदर्शिनः सन्तो मां यथोक्तस्वरूपमेव यथोक्तया भक्त्या भजन्ते सेवन्ते, यथोक्तया भावनयोपासते, ते मयि तिष्ठन्ति, तेषु चाहमभेद एव तिष्ठामि, मत्तस्तेषां दुर्भेदभेदप्रत्ययसेतुविदलनात् । ब्रह्मामृतसागरसमरसीभूतत्वात्तद्बोधस्य ॥

एवं यथोक्तया भावनया भगवद्भक्तेः स्तुतिमाह ।

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३१ ॥**

यद्यपि युष्मत्प्रतिपादितं दृष्ट्या युद्धादिघोरकर्मानुष्ठानात्सुतरां दुष्टचेष्टितः सन्ननन्यभाङ् मदेकालम्बनो मां भजते उपास्ते, स तादृशः साधुः सदाचार एव मन्तव्यो बोद्धव्यः । यतः सम्यगविपर्यस्तज्ञानत्वाद्यथावत्स तादृग्भक्तो व्यवसितो गृहीतव्यवसायः । एतावदेव सदाचारदुराचारयोर्लक्षणम् । योऽनन्यतया मद्भक्तः स सदाचारः, तद्व्यतिरिक्तस्तु दुराचार इति । एतावदत्र तात्पर्यम् । अपर्यनुयोज्येच्छस्य हि भगवतः शक्तिरवतीर्णा क्वचिदप्यनुग्राह्ये विनष्टं च निर्मूलमखिलं दुराचारत्वम् ॥

एतदेव प्रकटयितुमाह ।

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मद्भक्तः प्रणश्यति ॥ ३२ ॥**

[ शां. पा. १–मे भक्तः. ]

क्षिप्रमनुग्रहलक्षणसमकालमेव धर्मात्मा भवति, प्रतिपादितज्ञानयोगलक्षणः परमो धर्म आत्मा स्वभावो यस्य स तादृशः संपद्यते । तथासंपन्नमात्रः शश्वन्नित्यकालं शान्तिं यथाप्रतिपादितात्मानात्मादिज्ञेयवस्तुज्ञानभावलक्षणक्षोभक्षयरूपं प्रशमं यथोक्ततत्त्वसमापत्तिरूपं नितरां गच्छति प्राप्नोति । नियच्छतीति पाठ आत्मनि तां नियच्छति नियतामव्यभिचारिणीं करोति । ततश्च हेतोस्ते

तुभ्यं प्रतिज्ञां करोमि, यथा मद्भक्तो यथोक्तेन रूपेण मदुपासको न प्रणश्यति, मत्स्वरूपव्यतिरेकप्रतिपत्तिलक्षणं नाशं न प्राप्नोति ॥

अत एवाऽऽह ।

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**

पापाः पापकर्मजा पापकर्मविपाकजा योनिरुत्पत्तिकारणं येषां ते स्त्रीशूद्रवैश्यादयो येऽपि केचन भवेयुस्ते मां व्यपाश्रित्य यथोक्तमदेकशरणा भूत्वा परामनुत्तरां गतिमपुनरावृत्तिपदवीमाप्नुवन्ति । न चैतदतिशयोक्तिमात्रमेवेति व्याख्यातमेव प्राक् । किं पुनर्ये पुण्याः पुण्यकर्माणः पुण्यकर्मविपाकाल्लब्धोत्कृष्टयोनयो ब्राह्मणा राजर्षयश्च राजत्वे सत्यपवर्गभागित्वान्मुख्या ऋषयो द्रष्टारो भक्ताः सन्तः परां गतिं यास्यन्ति । तदेतेन सर्वलोकसाधारणत्वमात्मज्ञानस्य भगवता प्रतिपादितम् ॥

यत एवमुत्कृष्टफला मद्भक्तिस्ततः ।

**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥**

इमं लोकं कर्मभूमिलक्षणं भुवनं प्राप्य, अत्र जन्म लब्ध्वेत्यर्थः । कीदृशं लोकम्? अनित्यं शरीरस्य भोगसाधनस्य भोगानां चान्तवत्त्वादस्थिरम् । असुखं च यदप्यत्र किंचित्सुखभ्रान्त्या गृह्यते तदपि विवेकबुद्ध्या विचार्यमाणं दुःखमेव । यदुक्तम् । परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः । यथा जलधिमध्यपतितस्य रत्नातिशयलाभः कथंचित्संभाव्यते तथा दुःखैकहेतुकर्मभूमिपतितस्य मद्भक्तिलाभः संभाव्यत एवास्मिल्लोक इत्यर्थः ॥

गुणवृत्तिविरोधाच्च सर्वं दुःखं विवेकिन इत्येवंरूपमपीमं लोकं लब्ध्वा मामनुत्तरसुखहेतुं भजस्वेत्याह ।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु नवमोऽध्यायः ॥ ९ ॥**

एवंविधः सन्मद्भक्तो भव । कीदृशः ? मन्मना मद्याजी तथा मन्नमस्कारपरः। एतेन विशेषणत्रयेण चित्तकायवचनक्रियाणां भगवत्स्वरूपलक्षणैकतत्त्वविशेषणात्मको मुख्यो भक्तिप्रकारः प्रतिपादितः। मां नमस्कुर्वित्यनेन हि मन्त्रजपनमस्कारः प्रतिपादितः स्तुत्यादिरूपा भगवत्प्रणतिरुक्ता । एवमनेन प्रकारेणाऽऽत्मानमन्तःकरणं युक्त्वा समाधाय मत्परायणो मदेकालम्बनः संवृत्तः सन् मामेवैष्यासि मदभेदसमापन्नो भविष्यसीत्योम् ॥

व्योम्नि ज्योतिर्गण इव घनध्वान्तशान्तिप्रसन्ने
सूर्येन्द्वादिद्विगुणविकसन्निर्मलस्वप्रसादः ।
यत्रार्थौघः स्फुरति सुतरां ज्ञानविज्ञानपूर्व-
स्तत्राध्याये तरतु नवमे राजहंसीव गीर्वः ॥

इति श्रीराजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे नवमोऽध्यायः ॥ ९ ॥

## ॥ अथ दशमोऽध्यायः ॥

एवं नवमाध्यायपर्यन्तग्रन्थग्रथितप्रसन्नगम्भीरभणितिभेदाभिहितज्ञानविज्ञानादिपरमरहस्यरूपार्थश्रवणादुपजातपरितोषविशेषतामत्यन्तदुरवधारपरमार्थत्वादस्यार्थस्यासंतुष्टहृदयतां चार्जुनस्योपलक्ष्य प्रसादातिशयमनुकम्पां चोपगच्छन्नेकदेशपरतत्त्वसाक्षात्कारकारणभूतनिरतिशयानुग्रहचिकीर्षाविष्कारि वाक्यं,

**श्रीभगवानुवाच ।**

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

यद्यपि प्रायेण निरवशेष्यमुपदेश्यं वस्तु वितत्य प्रतिपादितं तथाऽपि तदपि सूक्ष्मत्वात्परमप्रकृष्टप्रज्ञानामपि हृदये झगिति प्रतिष्ठां न लभत इति भूयो बहुतरमेव पूर्वोक्तं तन्मदीयं परममुत्तमार्थप्रतिपादकत्वात्प्रकृष्टं वचनमिदमाकर्ण्य बहुतरवचनकथने कारणमाह । यद्वचनं प्रीयमाणाय परितोषं भजते हितकाम्ययाऽऽत्यान्तिकानुकूल्यकरणेच्छया तुभ्यमिदानीमहं कथयिष्यामि । किमनेनोक्तं भवति । यावत्प्रकारान्तरदुर्हरमोहविषविषादहारिणा प्रतिपादितार्थपरमार्थापूर्वपीयूषपरमलेशस्पर्शनेन नाह्लादितं हृदयं तावत्कुतः प्रीयमाणत्वम् ।

अतथाविधस्य हि पुनरुक्तकथनादुद्वेग एव स्यात्। अतः प्रीयमाणत्वेनाऽऽविष्कृतविशिष्टशिष्यगुणाविशेषाय तद्धितचिकीर्षुणा दयाविष्टहृदयेन दैशिकोत्तमेन विचित्रोक्तिप्रकारैस्तावदुपदेष्टव्यम्। यावदसौ सुगृहीतार्थतया निराकाङ्क्षतामापद्यत इति भूयो वचनकथनेन भवता नोद्विजनीयमिति भगवतोऽभिप्रेतम्। अथवा,

निद्रां मोहमयीं हरत्स्वसहसैवान्तःप्रबोधश्रियं
तन्वत्स्वर्थिषु वाञ्छितार्थविषयावन्ध्योद्यमाधायिषु।
सूर्यांशुष्विव पौनरुक्त्यजनितोद्वेगत्वमापत्स्यते
तेष्वेवाभिनवीभवत्सु भगवद्वाक्येषु कश्चेतनः॥

इह मत्स्वरूपविज्ञानलक्षण एवार्थ उक्तो वक्ष्यते च। तच्च मत्स्वरूपं गुह्यतमत्वान्नाल्पेन प्रयत्नेन प्रतिपत्तव्यं प्रतिपाद्यं च। अतो बहुतरवचनाकर्णनेऽवहितो भव॥

यतः,

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥ २॥**

मम परमार्थत एकस्यैव सनातनस्य तत्त्वस्य प्रभवमुत्पादम्। प्रभावमिति वा पाठे माहात्म्यम्। सुरगणा ब्रह्मेन्द्रसूर्यादयो देवसमूहा न विदुर्न जानते। महर्षयो भृग्वादयोऽपि तथैव। ते हि मन्मायाशक्त्युद्भावितततत्स्वरूपातिशक्त्यादिभेदास्तं तं स्वाधिकारमनुतिष्ठन्तः प्रतिकल्पं सर्गप्रलयाद्यनित्यभावसंबन्धावस्थाजुषः। अहं तु नित्यत्वात्तेषामादिः प्रथमः। एवं प्रकर्षगत्या कल्पादिदीर्घकालस्थायिनोऽपि देवादयो मदीयपरमसत्तापेक्षयाऽन्तवन्तः। ते च मदीयमायामोहिताः सन्तः स्वाधिकारनिवर्तनमात्रपर्याप्तसामर्थ्यास्तत्त्वतो मां संप्रति न विदन्ति॥ ततः,

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥ ३॥**

यः कश्चिद्विरलो महात्मा मदनुग्रहादेव प्रत्युदितसम्यग्ज्ञानशक्तिः। अजं नित्यत्वाज्जन्मरहितमत एवानादिमविद्यमानपूर्वपुरुषान्तरम्। तथा लोकमहेश्वरं, लोकानां ब्रह्मादीनां, लोक्यन्ते दृश्यन्ते विद्यन्त इति लोकशब्दवाच्यानां जनानां महान्तं सर्गस्थितिप्रलयाद्यवस्थाविधानस्वतन्त्रशक्तित्वादुत्तमं स्वामिनम्। तेषामपि हि ब्रह्मादीनां स्वविषयं यावन्मात्रमैश्वर्यं तत्र कारणमित्यर्थः। एवंविधं

मां वेत्त्यात्मत्वेन प्रतिजानीते स मर्त्येषु मायाक्रोडीकृतत्वान्मरणधर्मसंबद्धेषु देवादिषु सर्वजन्तुषु मध्येऽसंमूढः, सत्यात्मनि मय्येव प्ररूढात्मप्रत्ययत्वाद्विपर्ययलक्षणः । संमोहोऽज्ञानं तस्य न विद्यत इत्यर्थः । अत एव सर्वैर्निरवशेषैर्मनोवाक्कायनिर्वर्त्यैः पापैर्नानायोन्यन्तरविशेषहेतुभिः किल्बिषैः प्रमुच्यते, परिवर्ज्यते । देहाद्यनित्यवस्तुव्यवस्थिताहंकारमात्रं हि सर्वपापानामुत्पत्तिकारणम् । सम्यग्ज्ञानवस्तु तत्रास्तीति स एवासंमूढ इत्युक्तम् ॥

सर्वभूतानां सर्वावस्थाहेतुत्वे लोकमहेश्वरत्वं यद्व्याख्यातं तदेव विवृण्वन्नाह ।

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥**
**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

इहाहमेवैकं तत्त्वं परमार्थसदिति बहुशः प्रतिपादितमेव । अयं च देवासुरभेदेन द्विप्रकारः क्षेत्रज्ञवर्गो मन्माययैवेत्थमवभास्यत इति प्रतिपादितमेव । तदस्य क्षेत्रज्ञवर्गस्था अपि तदहंकारावलम्बनेन प्रसरन्तो बुद्ध्यादयः पृथग्विधा नानारूपा भावा मत्त एवैकस्मात्कारणाद्भवन्त्युत्पद्यन्ते । एते हि विविधा भावभेदाः प्रबुद्धैस्तत्त्वज्ञानदृशा परामृश्यमानाः परमात्मस्वरूपान्मनागपि न व्यतिरिच्यन्ते । ततो मायामात्रमेवैतद्भेदेनावभासमानता भावानाम् । सा च मच्छक्तिरेवेति मत्त एव ते भावा भवन्तीत्युक्तम् । के ते भावाः ? बुद्धिर्मुख्यमन्तःकरणं यया बुध्यते निर्विकल्पतया निश्चीयते बोद्धव्यं वस्तु, ज्ञानं तु मनःसंज्ञोऽन्तःकरणविशेषो येन बोद्धव्यं विकल्प्यते । एतौ सर्वप्रमातृसाधारणौ बुद्धिज्ञानसंज्ञौ भावौ । असंमोहः परमार्थनिष्ठं ज्ञानम् । ततोऽन्यविषयं सर्वमेव ज्ञानं विपर्ययादिदोषसंबन्धात्संमोहात्मकम् । स चासंमोहलक्षणो भावो मुमुक्षूणामेव संभवति । क्षमा वाचा मनसा कर्मणा वा निर्विकारत्वम् । सर्वात्मना शक्तिमत्त्वेऽपि परापराधसहिष्णुत्वम् । एषोऽपि यत्याद्यवस्थायां मुमुक्षूणामपवर्गोपायभूतो धर्मः । अवस्थान्तरे हि ज्ञाननिष्ठतया स्वकर्मापरित्यागस्य मोक्षसाधनत्वादक्षमाऽपि शास्त्रचोदिता सती मोक्षसाधनं भवत्येव । सत्यम्, आत्यन्तिकभूतहितपर्यवसायि यथादृष्टार्थकथनम् । एतत्स्वर्गापवर्गफलार्थिनां च साधारणम् । दम उत्पथप्रवृत्तानां

---

१ राशा १–भासित एव ( ' इति प्रतिपादितम् ' नास्ति ); शा २–इत्यपि प्रति–°.

सर्वेन्द्रियाश्वानां वैराग्यभावनादिकशाभिघातात्ततः प्रतिषेधनम् । शमः सिद्ध्यसिद्ध्योर्निर्विकारान्तःकरणता च । तौ योगविषयौ । सुखं तत्तदिष्टवस्तुप्राप्तेरभिकाङ्क्षानिवृत्तौ संतुष्टचित्तता । एते सुखादयः सर्वप्राणिसाधारणा भावाः । अहिंसा सर्वभूताभिद्रोहात्सर्वात्मना विरतिः । सा च यत्याद्यवस्थायामेव मोक्षसाधनम् । हिंसाया अप्यस्मादवस्थान्तरे मोक्षसाधनत्वात् । यतः शास्त्रचोदितं यज्ञे वधादि, संग्रामे रिपुव्यापादनं दुष्टनिग्रहश्च, हिंसात्मकत्वेऽपि तथाविधस्वकर्मनिष्ठानां सतां मोक्षसाधनम् । समता सुहृन्मित्रार्युदासीनेत्यादिना प्राक्प्रतिपादितस्वरूपैकदार्शिता मुमुक्षूणामेव धर्मः । तुष्टिः सर्वभूतविषया प्रीतचित्तता । मुमुक्षुविषयैव सुखस्यैव सर्वसाधारण्येन प्रतिपादितत्वात् । तपो वाक्चित्तकायनिर्वर्त्यो नियमविशेषः । दानमिष्टापूर्तविभागेन स्वद्रव्यस्य परद्रव्यत्वापादनम् । ज्ञानादीनां स्वत्वनिवृत्तिं विना परत्र संक्रमणमदानम् । एतत्स्वर्गापवर्गफलार्थिनोः साधारणम् । यशः शास्त्रचोदितानां शुभानां कर्मणां सात्त्विकबुद्ध्या समाचरणात् सर्वजनविषया प्रशंसा । अयशस्तद्विपरीताचरणादप्रशंसा ॥

इत्येवंविधानां धर्माणामाश्रयभूता धर्मिण आप्रजापतिभ्यो मत्त एव भवन्तीत्याह ।

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

पूर्वे कल्पारम्भभाविस्वायंभुवमन्वन्तररूपपूर्वकालभावित्वात्प्रथमे, सप्त महर्षयो मरीच्यादयो ये पुराणप्रजापतयः प्रोक्ताः । केचित्तु बुद्धिमनसी महाभूतपञ्चकं चेति सप्त महर्षीन्कथयन्ति । प्रजासर्गहेतुत्वात्तेऽपि प्रजापतय इति चाऽऽहुः । चत्वारो मनवः प्रजासर्गे प्रतिवर्णं चातुर्वर्ण्यस्य प्रथमे पुरुषाः, येषां ब्राह्मणादिवर्णसर्गहेतुत्वान्मनुत्वं प्रजापतित्वं च । एते मद्भावाः परमकारणादेव भाव उत्पत्तिर्येषां ते तथाविधाः । कीदृशाः सन्तो मद्भावा मानसा जाताः । संकल्पजा इत्यर्थः । येषां प्रजापतीनां सतां संबन्धिन्यो लोके भुवनेष्विमाः प्रजाः । ये प्रजासर्गकर्तारः कल्पारम्भे प्रजापतयः श्रूयन्ते ते मदिच्छामात्रोद्भाविताः स्रष्टृभावा इत्यर्थः ॥

एवंविधस्यैश्वर्यज्ञानफलमाह ।

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

---

१ राशा १.२-°क्या बु°.

एतां यथोक्तां विभूतिं जगत्कर्तृत्वादिरूपमैश्वर्यं तथा योगं नानाभावप्रपञ्चावभासनरूपकर्तृत्वादिसंबन्धेऽप्यद्वयचिन्मात्रस्वभावाप्रच्युतिलक्षणमत्यद्भुतमनन्यसाधारणं समाधिं मम यस्तत्त्वतः परमार्थतो वेत्ति जानाति, स मदीयेनैवाविकम्पेन सर्वदा निरुपप्लवेन योगेन समाधिना युज्यते संबध्यते । नात्रार्थे कश्चित्संदेहः संभवति । यतो मदनुग्रहाविर्भूतसम्यग्ज्ञानतया ममैवैकस्य तत्त्वस्य जगल्लक्षणं विभवं सम्यग्यो विभावयति, स मत्स्वरूपसमाविष्टत्वान्मदीयेन समाधिना संबध्यत इति कोऽत्र संशयस्यावकाशः ॥

यत एवंविधाः,

**अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

[ शां. पा. १–अहं. २–मत्तः. ]

बुधा मां भजन्ते मदिच्छयैव देवप्रकृत्याश्रयसर्गभावत्वान्मदनुग्रहपात्रभूततया समाविर्भूतबोधाः सन्तो मुख्यविपश्चितो मां यथोक्तरूपमुपासते । अन्ये त्वासुरसर्गभावास्ततो मत्समाधिना युज्यन्ते । ते च किं कृत्वा समुपासते ? इति मत्वा एवं मत्स्वरूपं निश्चित्य । कथमयं परमेश्वरः परमात्मा सर्वस्य भावजातस्य प्रभव उत्पत्तिकारणं यस्माद्बहुशः प्रतिपादितोपपत्तिवशादेतद्व्यतिरिक्तकारणान्तराभावादित एतस्मादेव हेतोः सर्वमिदं प्रवर्तते प्रसरतीति । इदमत्र तात्पर्यम् । द्विविधं ज्ञानं, निर्विकल्पपरमार्थप्रतिपादकशास्त्रोपदेशदृढप्रतिपत्तिजनकमेकम् । तद्वशाच्च क्रमेण तत्त्वसाक्षात्कारप्रभवमपरम् । तद्वन्तो बुधा अपि द्विविधास्ततो यथोक्तमद्विभूतियोगज्ञा मत्समाधिना युज्यन्ते नात्र संशय इत्युक्तम् ॥

ये तु मां भजन्ते तेषामेवंविधं चेष्टितमित्याह ।

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

मच्चित्ता मयि चित्तमन्तःकरणमेषां ते तथाविधा मदेकनिष्ठज्ञानक्रियाप्रसराः सन्तोऽन्योन्यं बोधयन्तः स्वानुभवसंवादेन ज्ञापयन्तः, तथा कथयन्तो यथाबोधमागमवचनैः कीर्तयन्तस्तुष्यन्ति संवादात्स्वयं प्रीयन्ते । परस्परं रमयन्ति रतिमनुभवन्ति ॥

एवंविधानां च,

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

तेषां बुधानां बुधत्वादेव प्रीतिपूर्वकं तत्त्वज्ञानजनितपरितोषपुरःसरं सेवमानानाम्। अत एव नित्योद्यतानां[१] बुद्धियोगं प्रज्ञासंबन्धं वितरामि येन हेतुभूतेन बुधा मामुपयान्ति, मदीयं योगं समापद्यन्त इति भक्तानां स्वयोगप्राप्तावसंशयस्य कारणं प्रतिपादितम्। यतस्तेषामेव देवसर्गभाजामनुकम्पार्थं संसारक्लेशविश्लेषणेन कृपां कर्तुमहमज्ञानजं मोहसमुद्भूतं तमस्तत्त्वाप्रतिपत्तिमयं तिमिरं नाशयामि प्रध्वंसयामि। केन? भास्वता परसंविदात्मकदीप्तियुक्तेन ज्ञानदीपेन। यथोक्तज्ञानदीपेन प्रबोधकेन। कीदृशः सन्? आत्मभावस्थ आत्मनः संवेदितुर्भाव आत्मतत्त्वम्, तेन स्थितः। यद्यपि सर्वगत एक एवाहमात्मा, तथाऽपि स्वेच्छया यानेवानुगृह्णामि तेषामेवाहमात्मत्वेन स्थितः। अन्येषां तु[२] देहादावात्मप्रतिपत्तिरित्यर्थः। एवं परमेश्वरोऽहं यानेवानुगृह्णामि त एव यथोक्तेन प्रकारेण मां भजन्ते, मद्विभूतियोगयोस्तत्त्वविदः सन्तो मदीयमेव योगं समापद्यन्ते। मदभेदलक्षणं मोक्षमासादयन्तीत्यर्थः। यदाहुर्ब्रह्मविदः, 'नायमात्मा प्रवचनेन लभ्यो न मेधया नो बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैवाऽऽत्मा विवृणीत तनुं स्वामिति'॥

अथ भगवद्वचनाद्विशेषितश्रद्धादिगुणतया भगवन्मुखादेवाधिगतं भगवत्स्वरूपमनुवदंस्तद्विभूतिविशेषजिज्ञासार्थम्,

अर्जुन उवाच।

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥

[ शां. पा. १–मे. ]

परं निरुत्तरं परमात्मलक्षणं निरतिशयबृहत्त्वादि योगितत्त्वं भवान्भगवानेव परमार्थतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्मायावभासितस्य प्रकृत्यादेर्वेद्यस्यापि

---

१ राज्ञा १–नित्योदितानां. २ राज्ञा २ ना–'तु' नास्ति.

स्थूलस्य । ब्रह्मशब्देन व्यवहारात्परत्वेन ब्रह्म विशेषितम् । तथा वक्ष्यति—उक्तं च तासां ब्रह्म महद्योनिरित्यत्र प्रकृतेर्ब्रह्मशब्देन व्यवहारः । तथा 'शब्दब्रह्मातिवर्तते' इत्यत्र शास्त्रादिशब्दरूपस्यापि सर्गस्य तथा परं सामान्यसंविदात्मकं निरतिशयं धाम ज्योतिर्भवान् । भेदाविषयक्षेत्रज्ञसंबन्धिसंविदपेक्षया धाम्नोऽपि परत्वेन विशेषणम् । तथा परमनुत्तमं पवित्रं पावनं भवान् । मोहलक्षणमहापातकविनाशहेतुत्वात् । उक्तार्थावगमस्याऽऽगमं भगवद्वचनं च कारणं प्रतिपादयितुमाह । यस्मात्सर्वे ऋषयः परावरद्रष्टारो मुनयः शाश्वतं नित्यं पुरुषं परमात्मानं त्वामाहुः कथयन्ति । कीदृशं ? दिव्यं परमव्योमस्थम्, तथाऽऽदिं सर्वेषां पूर्वं देवं परप्रकाशात्मतया द्योतनशीलं, अत एवाजं जन्मरहितं, विभुं व्यापकम् । न केवलं सर्वर्षयो यावन्नारदासितदेवलाभिधाना महर्षयस्त्वामेवंविधमाहुः । स्वयं च साक्षाद् ब्रवीषि ॥

**सर्वमेतदृतं मन्ये यन्मे वदसि केशव ।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा महर्षयः ॥ १४ ॥**
**स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

[ शां. पा. १—यन्मां. २—देवा न दानवाः. ]

एतत्सर्वं यथाप्रतिपादितस्वविभूतियोगादिरूपं वस्तु यत्साक्षाद्वदसि, तदहमृतं सत्यं मन्ये, यतो देवा अपि तव व्यक्तिं पारमार्थिकीं न विदुर्महर्षयोऽपि तथैव न विदुः । ततो महर्षिभ्यः श्रुते मम प्रत्ययो नाऽऽसीदिदानीं तु भगवद्वचनादत्रार्थे निःसंशया प्रतीतिः । कुतस्त्वां देवा ऋषयश्च न विदुरित्यत्र हेतुमाह—स्वयमेवेत्यादि । जगत्पते विश्वेश्वर, तथा भूतभावन भूतानां चराचराणां सत्त्वानां भावन, वेद्यत्वापादनमात्रेणोत्पादक । तथा तेषामेव यथेष्टविनियोगैकस्वतन्त्रतयेश स्वामिन् । स्वयमेवाऽऽत्मनाऽऽत्मानं स्वरूपं त्वं वेत्थ । वेदैकस्वभावत्वात्कथं वेद्यपदवीमन्यस्य देवादेरवतरसि । सर्वं हि तवैकस्य सर्वज्ञस्य वेद्यम् । न तु त्वं कस्यचिद्वेद्यः ॥

ततो हेतोः,

**वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

[ शां. पा. १—दिव्या ह्यात्मविभूतयः ]

---

१ राना १—परसा°.

आत्मनो विभूतीः स्वैश्वर्यविजृम्भा अशेषेण साकल्येन वक्तुमर्हसि कथयितुं प्रसीदेत्यर्थः । कीदृशीर्विभूतीः ? शुभाः सर्वस्य सदसद्विभागेन व्यवस्थितस्य मायावभासितस्य जगत्पदार्थजातस्य शुभाशुभत्वे सति यत्र यत्र सर्गे या या शुभरूपा[1] विभूतिस्तां तामादिशेत्यर्थः । कास्ता विभूतीः ? याभिरिमाँल्लोकान्सप्त भुवनानि त्वं व्याप्याऽऽक्रम्य वर्तसे । अत्र दिव्या आत्मविभूतय इति प्रथमान्तपाठं केचित्पठन्ति[2] । ते च यत्तच्छब्दाध्याहारेण छान्दसप्रयोगेण वा समर्थयन्ति[3] ॥

विभूतिश्रवणे प्रयोजनमाह ।

कथं विद्यां महायोगिंस्त्वामहं परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥
विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

[ शां. पा. १-अहं. २-त्वां सदा. ]

हे भगवन्सर्वज्ञत्वादिगुणैकाश्रय, तथा महायोगिन्ननन्यसाधारणसमाध्येकनिष्ठ, त्वामेवंरूपं कथं केन प्रकारेणाहं परिचिन्तयन्ननुस्मरन्विद्यां विजानीयाम् । केषु केषु च भावेषु पदार्थेषु मया चिन्त्योऽसि, ध्यातव्योऽसि । अतः प्रागुक्तमैश्वर्यं समाधिं विभूतिं चेत्थं जगदाभासलक्षणम् । स्वैश्वर्यविजृम्भां विस्तरेण वैतत्येन मह्यं भूयो बहुतरं कथयाऽऽदिश । यस्मादेतत्स्वरूपप्रतिपादनलक्षणममृतं सुधारसं शृण्वतो मे श्रवणाभ्यां पिबतस्तृप्तिः संतोषो नास्ति ॥

यथैवमभ्यर्थितः-

श्रीभगवानुवाच ।

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

[ शां. पा. १-दिव्या ह्यात्मविभूतयः. ]

हन्ताभ्युपगमे । बाढं यथा शुश्रूषिताः शुभाः स्वविभूतीस्तुभ्यं वक्ष्यामि । किंतु प्राधान्येन चेतनाचेतनेषु पदार्थेष्वपर्यन्तवर्गभेदविभेदितेषु यत्र यत्र वर्गे या या काचित्प्रधानत्वादतिशायिनी विभूतिस्तां तां वक्ष्यामि । यतो मद्विभूतीनां विस्तरस्य विततत्वस्यान्तो निष्ठा न विद्यते ॥

१ राना १-'शुभरूपा' नास्ति. २ राना १-वदन्ति. ३ राशा २ ना १-°यन्ते.

तत्रेदानीं नानाविभूतिकथनप्रस्तावमस्यान्तेऽप्यभिधायिष्यमाणां परमार्थ-स्वरूपलक्षणां परां विभूतिं तावत्प्रथममेव प्रतिपादयितुमाह ।

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**

सर्वेषां चेतनानामाशये हृदि स्थितः कृतप्रतिष्ठ आत्माऽहं सकलक्षेत्रज्ञ-हृदयाभिव्यक्तसामान्यसंविद्रूप एक एव परमार्थत आत्मा । सैव परा विभूति-र्यतस्तन्निबन्धन एवायं स्वमायाशक्तिप्रकाशितविश्वभावात्मकनानाविभूतिप्रपञ्च-स्तद्रूपतया चिन्तितोऽहमनन्तविभूतिविस्तरैककारणतया ज्ञातो भवामि ।

यतः,

**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

सर्वभूतानामादिः प्रागवस्था सर्गरूपा, अतश्च नाशावस्था मध्यं च स्थित्य-वस्थाऽहमेवैकः । यतो मन्मायावशात्सर्गस्थितिविनाशावस्थायोगित्वेन परस्पर-मवभासमानेषु सर्वभूतेषु नित्यनिर्विशेषैकचिन्मात्रस्वभावोऽहमेव स्थितः । यैस्तु तादृश्या महाव्याप्त्याऽहं चिन्तयितुमशक्यस्तैस्तदधिगमाभ्यासाय यत्र यत्र वर्गे यद्यदुत्कृष्टं तत्तन्मद्विभूत्यंशतया चिन्तयद्भिर्निरुत्तरा सर्वव्यापिनी सामान्यसं-विदात्मका परा मदीया विभूतिराधिगन्तुं शक्यते । यां नानाविभूतिप्रतिपादनप्र-करणस्यान्तेऽपि सामान्यरूपजडांशव्यतिरेकिणीं ‘ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ’ इति वक्ष्यति । तदेवंविधे चतुर्दशविधे भूतसर्गप्रपञ्चेऽष्ट-विधायां देवयोन्यामादित्यादिषु देवादिसर्गेषु षड्विधायां मनुष्ययोनौ मनुष्यादि-सर्गेषु यद्यदुत्कृष्टं तत्तन्मदीयपरमप्रकाशलेशतया भावयता निरुत्तरप्रकर्षासामा-न्यसंवित्प्रकाशमयी परा मद्विभूतिराधिगन्तव्येत्यध्यायस्य तात्पर्यम् ॥

तानिदानीमुच्चावचान्स्वविभूत्यंशानहंतया प्रतिपादयितुमाह ।

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

अदित्यपत्यत्वात्सर्वदेवानामादित्यत्वे प्राप्ते रूढ्या द्वादशसंख्यावच्छिन्नपुरा-णपाठितधातृमित्रार्यमादिसंज्ञानां देवविशेषसर्ग आदित्यसंज्ञा प्रसिद्धा । तेषां मध्ये तद्गणान्तःपतितो विष्णुसंज्ञ आदित्योऽहम् । तस्य जगत्स्थितिपालनलक्षणप्रभा-वातिशययोगाद्विभूत्यंशत्वम् । तथा ज्योतिषां दिवि द्योतमानानां सर्वतेजसां

---

१ राना १—प्रथिता.

मध्ये रविः सूर्योऽहम्। कीदृशोंऽशुमान्। सकलभुवनप्रकाशनादिशक्त्यंशुयुक्तत्वे सति प्रकृष्टैरंशुभिर्युक्तः। अत एव तस्य मद्विभूत्यंशत्वम्। तथा मरुतां देवविशेषाणामेकोनपञ्चाशतां मध्ये मरीचिर्नाम मरुदहम्। तस्य तन्मध्ये प्रजासर्गकर्तृत्वलक्षणप्रभावयोगान्मद्विभूत्यंशत्वम्। तथा नक्षत्राणामष्टाविंशतिसंख्यानां मध्ये शशी, चन्द्रमा अहम्। शशिनो नक्षत्रनाथत्वान्मध्ये गणनम्। तस्य चाप्यायनहेतुत्वादिसामर्थ्ययोगान्मद्विभूत्यंशत्वम् ॥

तयैव दृष्ट्याऽन्यानप्याह।

**वेदानां सामवेदोऽहं देवानामस्मि वासवः।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

[ शां. पा. १–°वेदोऽस्मि.]

वेदानां त्रयाणां चतुर्णां वा प्रसिद्धानां मध्ये सामवेदोऽहम्। तस्य भगवतैव प्राधान्यमाविष्कृतम्। येन प्रनष्टेषु वेदेषु वाजिवदनपुरुषेणोद्गीथमुच्चार्य स एव पूर्वं प्रत्याहृतोऽतस्तस्य तद्विभूत्यंशत्वम्। देवानां त्रयस्त्रिंशद्गणभेदेन पुराणपठितानां मध्ये वासव इन्द्रोऽहम्। तस्य तदीश्वरत्वान्मद्विभूत्यंशत्वम्। इन्द्रियाणामेकादशानां मध्ये मनोऽहम्। तत्प्रवृत्तिनिवृत्तिहेतुत्वात् प्राधान्ये सति मद्विभूत्यंशत्वम्। द्विविधानि भूतानि चराणि स्थावराणि च। तेषामुभयेषामपि चेतना प्रधानम्। यतश्चेतनोपलक्षितत्वेन चराणां स्थितिः प्रसिद्धैव, चेतनानिबन्धना च स्थावराणामपि व्यवस्था, तदनुगृहीतानां तेषां संकल्पात्। अतः सर्वभूतप्राधान्यव्यवस्थिता चेतना भिन्नाऽपि क्षेत्रज्ञशक्तिरहम्। तस्या मुख्यतया मद्विभूत्यंशत्वम्। केचित्तु चेतनां बुद्धिमाचक्षते, तस्याश्च कार्यकारणभेदेन प्रसृतानां जडानामेव भूतानां मध्ये प्राधान्यमाहुः। सा हि तानि सर्वाणि पुरुषसंनिधिसमुद्भूतचेतनभावांश्चेतयत इति ॥

किंच,

**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम्।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

रुद्राणामङ्गारकादिसंज्ञाभिः पुराणप्रोक्ताभिः प्रसिद्धानामेकादशसंख्यानां मध्ये शंकरोऽहम्। तन्मध्ये तस्यैश्वर्यातिशयान्मद्विभूत्यंशत्वम्। तथा यक्षाणां गुह्यकानां तथा रक्षसां पिशिताशिनां साहचर्यात्पिशाचानामपि देवयोनिषु दृष्टानां

---

१ राना–अङ्गादि°.

मध्ये वित्तेशो धनेश्वरोऽहम् । तस्य तद्वर्गाधिकृतत्वान्मद्विभूत्यंशत्वम् । तथा वसूनां धनादिसंज्ञाभिः प्रसिद्धानामष्टानां मध्ये पावकाख्यो वसुरहम् । तस्य नानाविधयागविध्यधिकरणभूतत्वादिना प्राधान्ये सति मद्विभूत्यंशत्वम् । तथा शिखरिणां पर्वतानां मध्ये मेरुः कनकाचलोऽहम् । तस्य देवालयत्वसूर्योदयहेतुत्वादिना तेषु प्राधान्यमिति मद्विभूत्यंशत्वम् । इत्युत्तरत्र सर्वत्र वेदितव्यम् ॥

किंच,

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनान्यामप्यहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

[ शां. पा. १–सेनानीनामहं. ]

पुरोधसां राजगुरूणां मध्ये मुख्यं प्रधानं बृहस्पतिं देवराजगुरुं मां विद्धि, तस्य तेषु प्रकृष्टत्वात् । सेनान्यां चमूनायकानां च मध्ये चमूनायकः स्कन्दोऽहम् । तस्य तन्मध्ये वीर्यातिशययोगात्प्राधान्यम् । सरसां जलाशयानां मध्ये सागरः समुद्रोऽहम् । तन्मध्ये नानारत्नप्रभवहेतुत्वादिना सागरस्य प्राधान्यम् ॥

किंच,

**महर्षीणां भृगुरहं गिरामप्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽहं स्थावराणां हिमालयः ॥ २५ ॥**

[ शां पा. १–अस्म्येकम्. २–°यज्ञोऽस्मि. ]

ऋषीणां सप्तर्षित्वादिना प्रजापतित्वादिना च महतां प्रकृष्टानां मुनीनां मरीच्यङ्गिरःप्रभृतीनां मध्ये भृगुरहम् । तस्य तदपेक्षया ज्ञानादिप्रकर्षश्रवणात् प्राधान्यम् । तथा गिरां गीर्निर्वर्त्यत्वाद्गीःशब्दवाच्यानां मध्ये प्रणवाख्यमेकमक्षरमहम् । तस्य हि पदभूतस्य विश्वरूपातिरिक्तपरमेश्वरस्वरूपवाचकत्वात्प्राधान्यम् । यज्ञानां द्रव्यनिर्वर्त्यानां यागविशेषाणां प्रागुक्तानां मध्ये जपः प्रणवादिपवित्रावर्तनम् । स एव यज्ञो यागविधिरहम् । यथा मन्त्रजपेन देवता आराध्यन्ते तथा द्रव्ययज्ञादिनेति तस्य प्राधान्यम् । यतः फलानभिसंधानेन जपयज्ञनिष्ठस्य यत्फलं प्राप्यं तदपेक्षया तत्तल्लोकान्तरप्राप्तिरपि निरयगतित्वेन मोक्षधर्मेषु प्रतिपादिता । तथा च तत्रोक्तम् ।

चतुर्णां लोकपालानां शक्रस्यापि बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ।

रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥

मुख्यजापकप्राप्यस्येत्यर्थः । तथा स्थावराणां जङ्गमव्यतिरिक्तलक्षणानां मध्ये हिमालयः प्रालेयशैलोऽहम् । तस्य समस्तस्थावरभूतमध्ये नानारत्नौषधीप्रभवत्वादिना [१]यज्ञयोनिभूतत्वेन यज्ञाङ्गत्वाच्च प्राधान्यम् । गिरीणां मध्ये मेरोर्विशिष्टत्वमुक्तम् । [२]सर्वस्थावराणां तु हिमालयस्येति न पौनरुक्त्यम् ॥

किंच,

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमिनामहम् ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

---

१ राशा २ ना–१ 'यज्ञयोनि...त्वाच्च' इति नास्ति. २ राशा २ ना १–' सर्व 'नास्ति.

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः।
मुनीनामप्यहं व्यासः कवीनामुशनाः कविः ॥ ३७ ॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

[ शां. पा. १—संयमताम्. २—उशना कविः.]

श्लोकत्रयोदशकनिष्ठानां वृक्षादीनां पदार्थवर्गाणामश्वत्थादीनां तत्तद्विशेषणानां यज्ञियत्वादिना तेन तेन विशेषणेन प्राधान्यं प्रसिद्धमिति प्रतिपद्येन सर्वं न व्याख्यातम्। किंतु क्वचित्किंचित्पदं व्याख्यायते। तत्र प्रजनः प्रजनक्रियाकर्ता तस्य जातावेकवचनम्। तेन प्रजनयितॄणां मध्ये प्रजनक्रियायां मुख्यहेतुत्वात्कन्दर्पः कामोऽहम्। सति हि तस्मिन्नन्येषां प्रजनकत्वप्रसिद्धिः। यादःशब्देनाब्देवता आहुः। तासां मध्ये वरुणः प्रधानम्। तथा यमो वैवस्वतो देवताविशेषो यतस्ततो योनेर्यत्र तत्र योन्यन्तरे सर्वक्षेत्रज्ञान्नियच्छति। तस्य संयमिनां नियमक्रियासमर्थानां सर्वेषां मध्ये प्राधान्यम्। केचिन्निपुणाः संयमतामिति पठन्ति। संयमतामिति छान्दसो यच्छादेशाभावः। कालः कलयतामित्यत्रेह तावत्सर्वात्मना निरवच्छिन्नमहिम्नो नित्यस्यैकस्येश्वराख्यस्य तत्त्वस्य परमार्थसत्त्वात्कालो नाम तद्व्यतिरिक्तः पदार्थो न कश्चिद्भवितुमर्हति। किंतु तन्मायावभासितजडाजडभावात्मके जगत्यजडः क्षेत्रज्ञलक्षणो यो भावस्तस्य परस्परभिन्नार्थप्रमातृतायां सत्यामनित्यवस्तुविषयत्वेन कलनामात्रनिमित्तकः कालः समुन्मिषति। अनित्या हि भावा उत्पत्तिस्थितिनिरोधधर्माणो भूतवर्तमानभविष्यद्दशायोगित्वात्कलनीयतां तेन तेन रूपेणावच्छेद्यतां प्रतिपद्यन्ते। तेषां च मायीया एवं प्रमातारः कलयितारः। ततः कलनक्रियैव कालः। ततः कलनीयविषयव्यवहारमुख्यसाधनभूतकलनक्रियायामेकस्य कालस्य कलयितॄणां मध्ये मुख्यत्वमिति क्रियात्वेन परिकल्पितस्य कालस्येह प्रतिपादितं स्वरूपम्। द्रव्यत्वेनापि तस्य कैवल्यकल्पना व्यवस्थाप्यते, तामग्रे वक्ष्यति। अक्षराणां पदावयवभूतानां मातृकावर्णानां सर्वप्राणभूतत्वादकारस्य प्राधान्यम्। स हि जीव इव शरीराणां तेषां वर्णानां व्यापकत्वेनैको व्यवस्थितः। तस्य ह्यनासा-

दितदीर्घककारादिरूपविकारत्वे सति यद्रूपं तन्नादात्मकं परं शब्दतत्त्वमिति तत्त्वविदो वदन्ति । तथा सामासिकस्य तत्पुरुषबहुव्रीह्यादेः समाससमूहस्य मध्ये सकलपदार्थप्राधान्यादिना युगपदधिकरणवचनत्वादिना च द्वंद्वस्य प्राधान्यम् । तथाऽक्षयः काल इति । यदा द्रव्यत्वेन कालः कल्प्यते तदा सर्गादीनां नित्यप्रवृत्तानां नित्यत्वावर्तस्यापि नित्यत्वे सति क्षणिकादिकल्पस्थायिपर्यन्तभावभेदपृष्ठपातिनामनित्यानां स्वावयवानां निमेषादिकल्पान्तानां मध्येऽक्षयत्वमनन्तत्वमिति स्वावयवापेक्षयैवैतस्य प्राधान्यम् । अवयवनिर्देशस्त्वत्रार्थात्कल्पनीयः। कल्पना तु कालस्य क्रियात्वेन द्रव्यत्वेन चोभयथाऽपि प्रतिपत्तिसहिष्णुत्वात्संभवत्येव । संभवापेक्षयैव भगवता पुनः कालनिर्देशः कृतः । यदि वा योऽहमक्षयः परमार्थो नित्यत्वादविनश्वरः स एव कालोऽहमेव । स्वमात्मानं कालत्वेनावभासमानमिति पूर्वोक्तकालस्य मदिच्छाकल्पितस्वरूपप्रतिपादनार्थं पुनर्वचनमिति। यदि वा दर्शनभेदेन क्वचित्क्रियात्वं क्वचिद् द्रव्यत्वं कालस्य पश्यता भगवता द्विर्निर्देशः कृतः । तथा यः सततं जीवितेन्द्रियशरीरादिकं युगपदेव हरति तस्य मृत्योस्तत्कालभाविनो मरणे हेतोर्वस्तुनोऽन्येषां हन्तॄणां मध्ये प्राधान्यम् । तथा छलयतां वञ्चयतां मध्ये द्यूतस्य छलयितृत्वेऽपि धर्मानपेतत्वात्प्राधान्यम् । तथा धर्मो, द्यूतं धनश्रद्धादिक्रियासु शस्यते । परवञ्चनादिसंधिमूलत्वात्तस्य छलयितृत्वं स्थितम् । तथा सत्त्ववतां गुणानां सत्त्वरजस्तमोलक्षणानां सत्त्वगुणप्रकाशात्मकत्वात्प्राधान्यम् । तथा येन राजानो दुर्विनीतान्दमयन्ति, स दण्डः शास्त्रनियमितो निग्रहविशेषो मुख्यसाधनमिति स एव दमयिता । तेन [1]दमयतां मध्ये दण्डस्य प्राधान्यम् । तथा जिगीषतां प्रतिद्वंद्विनो जेतुमिच्छतां नीतिः कर्मारम्भोपायादिकार्यसिद्धिपर्यन्ताङ्गपञ्चकमयो नय एव मुख्यं साधनमिति नीतेरेव जिगीषतां मध्ये प्राधान्यम् । तथा गुह्यानां रहस्योपायानां मध्ये मौनं वाङ्नियमरूढं मुनित्वमहम् । नानार्थविषयस्य संकल्पस्याप्यनुन्मेषो [2]यत्र स हि परमसमाधिस्तस्मिंश्च सति संकल्पमूलया वाचा नियमरूपस्य मौनस्य सिद्धिरिति । तदेवं सम्यं गुह्यमित्युक्तम् । तथा ज्ञानवद्ग्रहणे नानर्थवद्विषयाणि भिन्नानि ज्ञानानि गृह्यन्ते । तेषां मध्य एकस्य ज्ञानस्य यथोक्तस्य प्राधान्यम् ॥

अनेन प्रतिपादितं विभूतिप्रतिपादनमुपसंहरन्नाह ।

---

१ राना १–दमयिनां. २ राना २–°प्यनुद्देशो.

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**

किं बहुना विभूतिविस्तरकथनेन ? संग्रहादियं मम परा विभूतिः। सर्वभूतानां प्राक्प्रतिपादितपरापरप्रकृतिभेदेन प्रसृतानां यद्बीजमुत्पत्तिकारणं सोऽहमेव। बाह्यकारणं जगतां किंचित्संभवति, मन्मायाशक्तिमात्रमेकं वर्जयित्वेत्यर्थः। यतस्तदिह वस्तुजातेन चेतनमचेतनं नास्ति, न सत्तां भजते, यन्मया विनोत्पद्यते चराचरम् । अतः सकलकारणाभासव्यतिरेकेण पारमार्थिकमहमेव कारणं सर्वभूतानामिति ॥

मया च परमकारणेन सता सा माया महिमोद्भाविततनानाभावभेदाश्रिता। या विभूतयो मम संभवन्ति तासाम्,

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

मम संबन्धिनीनां, दिवो मद्धृदयाकाशादुद्भूतानां पर्यन्तपदार्थसर्वव्यवस्थितानां विभूतीनां निजशक्तिविजृम्भमाणानामन्तोऽवधिर्न विद्यते । एष त्विह प्रकरण उद्देशतः कस्यचिद्धर्मस्य कीर्तनाद्विभूतीः स्वविभवस्य विस्तारः कस्यचिदेव भागस्य प्रसरः कथितः ॥

संग्रहतस्त्विदं तासु विभूतिविज्ञानं ब्रवीमि ।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छेस्त्वं मम तेजोंशसंभवम् ॥ ४१ ॥**

[ शां पा. १–°गच्छ त्वं.]

इह सर्वलोकेषु यद्यत्सत्त्वं यत्किंचिद्वस्तुजातं चेतनमचेतनं वा विभूतियुक्तमत एव श्रीमच्छोभातिशयसंपन्नमूर्जितं तत्तदर्थक्रियासामर्थ्ययुक्तं तत्तत्सर्वं मम संबन्धिनो तेजसो वा परस्य प्रकाशस्य यल्लेशमात्रं तत्संभवं तत्समुद्भूतं त्वमवगच्छेरवजानीथाः ॥

प्रकारान्तरापेक्षेण विभूतिनिष्ठां प्रतिपादयितुमाह ।

**अथो वा बहुनैतेन किं ज्ञानेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु दशमोऽध्यायः ॥ १० ॥**

[ शां. पा. १–अथवा. २ ज्ञातेन. ]

---

१ राना १–विन्यस्त°.

अथो एतेन तत्र तत्र वर्गे तत्तद्वस्तुमद्विभूतिमत्त्वेन, स्थितमवगच्छेरिति पूर्वोक्तेन, बहुना प्रभूतग्रन्थप्रतिपादितेन ज्ञानेन तथा प्रतिपन्नेन सता किं ते प्रयोजनम् । न किंचित्तेन कृत्यम् । यत इदमनवधिविचित्रितं[1] चित्रभावमयं कृत्स्नं समस्तं जगत्सर्वलोकमिदं विश्वमेकेन सर्वदा सर्वथा विचित्रसामान्यसंविदात्मना वेद्यांशव्यतिरिक्तेनांशेन भागेनावष्टभ्याऽऽक्रम्य व्याप्याहं स्थितः । तदिदमनेनोक्तं भवति । तत्र तत्र दर्शने तत्तत्प्रकारभेदेन प्रतिपादितस्य जगतो द्वावंशौ संक्षेपतः स्वरूपम् । एको वेदकैकस्वभावः सर्वदा सर्वात्मना निर्विकारचिन्मात्रस्वरूपः । अपरो नानारूपत्वेऽपि वेद्यैकस्वभावस्तत्र वेद्यांशपरिहारेण तदाभासैककारणभूतमेकांशविश्रान्तसंविदाभियुक्तेन भवितव्यम् । येन मद्विभूतिः परमाऽधिगम्यत इत्योम् ॥

विभूतीर्या[2] विष्णोरिह सकलसर्गातिशयगाः
परब्रह्मैश्वर्यावधि समधिगन्तुं व्यवसितैः ।
इयं साक्षाद्भक्तिर्भवति[3] तु विशुद्धैव विबुधै-
र्निधातव्या नित्यं मनसि दशमाध्यायविवृतिः ॥

इति राजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे दशमोऽध्यायः ॥ १० ॥

## ॥ अथैकादशोऽध्यायः ॥

अथाध्यायदशकेन भगवदुपदिष्टज्ञानविज्ञानपूर्वसमस्ताभिधेयवस्तुश्रवणमात्रादेव भगवतः परमेश्वरावगमात्तस्य परमकारणत्वे तदुक्ते वचसि यथोक्तफलाविसंवादकतया प्रकृष्टोपायत्वे निवृत्तसंदेहमात्मानमावेदयन्[4], श्रुतिमात्रप्रतिपन्नतत्त्वसाक्षाद्दर्शनेच्छाप्रबोधितः,

**अर्जुन उवाच ।**

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

---

१ रान. १– चित्रितं ’ नास्ति. २ राशा १. २– °भूतिराविष्णोः. ३ राना १–भगवति, विशुद्धेन. ४ राना १ निर्वृत्त°.

मदनुग्रहाय मामनुग्रहीतुं निजया परमशक्त्या प्रबोधयितुं त्वया परमेश्वरेण स्वयंप्रतिपादितस्वभावेन यद्वचनमध्यायदशकात्मकं वाक्यमध्यात्मसहितमात्मविषयात्मकज्ञानमत एव परं गुह्यं प्रकृष्टं रहस्यमुक्तमुपदिष्टं तेन हेतुभूतेनायं सर्वजनकोडीकारेण स्थितो मोह इति प्रतिपादितपरमार्थप्रतिपत्त्यन्यथाप्रतीतिलक्षणमज्ञानं मम निवृत्तो व्यपगतः ॥

तत्र हेतुमाह ।

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

[ शां. पा. १–विस्तरशो. ]

यस्मात्त्वत्तः परमकारणादेकस्मात्समस्तानां स्थावरजङ्गमानां भूतानां प्रभवाप्ययावुत्पत्तिलयौ विस्तरतो वैतत्येन मया श्रुतौ । श्रुतिमात्रेऽवधारितौ । अपि चाव्ययं नित्यं माहात्म्यं निरतिशयैश्वर्यलक्षणं महत्त्वं श्रुतम् । " अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति" इत्यादेरविसंवादिनो भगवद्वचनादेव भगवानेव सकलभूतभावैककारणम् । तथा भावेऽपि शुद्धचिन्मात्रभावाप्रच्युतेरद्भुतस्यैश्वर्यस्यैकास्पदमिति च मया प्रतिपन्नमित्यर्थः ॥

श्रुतिमात्रेणैतन्मया प्रतिपन्नं न तु साक्षादनुभूतमिति तदर्थमाह ।

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वरम् ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

[ शां. पा. १–परमेश्वर. ]

यथा येन प्रकारेण पूर्वोक्तेन त्वयाऽऽत्मानं स्वरूपं परमेश्वरं ब्रह्मादीनामपीश्वराणामीशितृत्वात्प्रवरं प्रभुमात्थ कथयसि । एतद्वस्त्वेवमनेन प्रकारेण स्थितं, नात्र मे भ्रान्तिरित्यर्थः । तत एव ते रूपं दिव्यं वपुरैश्वरमीश्वरस्य तव संबन्धि द्रष्टुं साक्षान्निरूपयितुमिच्छामि, अभिकाङ्क्षामि । अनेन ह्यधुना दृश्यमानेन पुरुषाकृतिना रूपेण तत्परं रूपं वाङ्मात्रेण मम केवलं कथितम् । यत्रेदमेकस्मिन्सर्वमेव स्थितं तदिदानीं भगवद्वचनप्रत्ययान्मया सत्यतस्तथा विद्यमानतया प्रतिपन्नम् । अतः पुरुषोत्तम, परमपुरुष, त्वत्प्रसादात्प्रत्यक्षतः प्रेक्षितुमभिकाङ्क्षामि ॥

---

१ राशा १·२–'मात्रेण प्रतिपादितौ न त्ववधारितौ. २ राना १ 'माहात्म्यं' नास्ति. ३ राशा २ ना १–'अपि' नास्ति.

किंतु,

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयाऽऽत्मानमव्ययम् ॥ ४ ॥**

[ शां. पा. १–योगेश्वर. ]

हे प्रभो, परमेश्वर, तत्तथाविधं तात्त्विकं रूपं परमयोगिभिरपि प्रार्थ्यमानदर्शनं मया मनुष्यमात्रेण द्रष्टुं साक्षात्प्रेक्षितुं शक्यं सह्यमिति यदि मन्यसे जानासि, यदि ममेयतीं योग्यतां संभावयसि, ततस्त्वं योगीश्वर, सहजसिद्धनिरतिशययोगत्वात्प्रयत्नसाध्ययोगानां सर्वेषां योग्यरूपाणां प्रभो, मे मह्यमनादिनिधनमात्मानं स्वरूपं दर्शय प्रत्यक्षी कुरु ॥

इत्यभ्यार्थितः प्रसादाभिमुखः,

**श्रीभगवानुवाच ।**

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**
**पश्याऽऽदित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याऽऽश्चर्याणि पाण्डव ॥ ६ ॥**
**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥**

[ शां. पा. १–भारत. ]

हे पार्थ ममैकस्यैवे परमार्थतः परमात्मनः स्वैश्वर्यातिशयात्स्वशक्तित्वेन संबन्धीन्यसंख्यानि रूपाण्याकृतिविशेषात्मकानि पश्यावलोकय । कीदृशानि ? नानाविधानि विचित्राण्यत एव नानावर्णाकृतीनि विविधाभाससंस्थानानि, तथा दिव्यान्यमानुषीयाणीति सामान्येनोपक्रम्य विशिष्टान्युद्देष्टुमाह । आदित्यान्द्वादशसंख्यान्देवविशेषांस्तथा वसूनष्टसंख्यान्रुद्रांश्चैकादशसंख्यानाश्विनौ दस्रौ, मरुतश्चैकोनपञ्चाशतो देवविशेषान्पश्येति प्राधान्येन देवताविशेषाणि रूपाण्युद्देशमात्रेणोक्त्वा संक्षेपत आह । एतावत्तावत्त्वया स्वर्लोकनिवासिना सता दृष्टानि, यान्यपि बहून्यप्रमेयान्यदृष्टपूर्वाणि न कदाचिदालोकितान्याश्चर्याण्यद्भुतानि, तान्यपि सर्वाणि पश्य । किं बहुनेह मम संबन्धिनि देह एकस्मिन्नेव रूप

१ राना १–'एव' नास्ति. २ राना १–प्रपश्य.

एकत्र स्थितं कृत्स्नमखिलं चराचररूपत्वासंक्षेपेण द्विप्रकारं यद्यप्यन्यत्किंचिद्यथाभिलषितं द्रष्टुमतिवाञ्छसि तदप्येकस्थमेव पश्येत्येकस्य परमार्थसतः परमकारणस्य स्वमायाशक्त्यवभासितानन्तान्योन्याभिन्नभावात्मकत्वमिदमत्यद्भुतं पश्येत्यत्र तात्पर्यम् ॥

अत एवाद्भुतत्वादस्यार्थस्य,

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

अनेन मर्त्यभावात्परिमितदर्शिनैव चक्षुषा गोलकाधिष्ठानया दृक्शक्त्या पुनर्मां प्रदर्शयिष्यमाणाश्चर्यरूपं द्रष्टुमालोकयितुं न शक्यसे न क्षमो भविष्यसि । अतो दिव्यं सर्वदर्शनशक्तियोगात्परमात्मरूपं परमाकाशभवं प्रकृष्टज्ञानात्मकं चक्षुर्नेत्रं ते ददामि पारमेश्वर्या स्वशक्त्या निष्प्रयत्नस्याविर्भावयेयम् । तेन ममेश्वरस्य संबन्धि प्रदर्शयिष्यमाणं रूपं पश्य, साक्षान्निरूपयेति ॥

अथ भगवता परमेण समाधिना निरतिशयनिजरूपदर्शनयोग्यताधानायार्जुनो यथाऽनुगृहीतस्तथैव पूर्वं व्यासमुनिप्रसादादासादितदिव्यदृष्टिर्धृतराष्ट्राय प्रतिपादयितुं,

**संजय उवाच ।**

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**
**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतो मुखम् ॥ ११ ॥**

[ शां पा. १–योगेश्वरो. २–माल्याम्बर. ]

गतार्थमेतच्छ्लोकत्रयम् । किंत्वेकमवैश्वर्यं भगवत्संबन्धि विशुद्धसंविन्मात्रं परमार्थतो यद्रूपं तदेव सकलजीवलोकं विचित्राकृतिभेदेन तन्मायाशक्त्यैवावभासते । ततो विश्वमेव भगवद्रूपमित्येतावन्मात्रतात्पर्याणि रूपविशेषाण्यवगन्तव्यानि येन तद्रूपसामानाधिकरण्येनानन्तं विश्वतोमुखं देवमिति ग्रन्थः संबन्धमेति ॥

१ राशा १·२–दिव्यचक्षुर. २ राना १–सामान्याधिकरणेन ३ राशा १ ( मूलपाठः )–संपद्यते ( पश्चादन्येन प्रान्ते ‘ संबन्धमेति ’ इति लि. )

अत एवैकस्य परमार्थाद्वैतनिरतिशयचित्प्रकाशात्मनो वैश्वरूपेणावभासमानस्य स्वरूपं प्रतिपादयितुमाह ।

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

यद्यन्तरिक्षे समुदितस्य भास्करसहस्रस्य समकालमेव समुत्थिता प्रसृता भा दीप्तिः कदाचिद्भवेत्सा तस्यैकस्य परमप्रकाशस्वभावस्य परमात्मनः परमपुरुषसदृशी स्यात्तुल्या भवेदिति काक्का व्याख्येयं, येन सदृशी स्यादित्येवं पर्यवस्येत् । न ह्यनन्यप्रकाशस्य सकलवस्तुप्रकाशकानिरातिशयप्रकाशात्मनस्तस्य कोटिशोऽपि युगपदुत्थितानां दिनकराणां दीप्तिस्तत्प्रकाशात्मत्वसादृश्यलेशमप्यासादयितुमर्हति ॥

एवमनुत्तरप्रकाशात्मनि,

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

तदा तादृग्भगवद्वैश्वरूप्यदर्शनकारणभूतदिव्यज्ञानात्मकचक्षुर्दानलक्षणपरानुग्रहरूपे काले तत्र तादृशि परप्रकाशात्मनि देवदेवस्य सर्वेश्वरस्य शरीररूप एकस्थमेकत्रैवाऽऽश्रये स्थितम् । अथ च नैकधा प्रविभक्तं विश्वभावरूपैर्भेदैर्विप्रकीर्णं जगदखिलमर्जुनोऽपश्यत्साक्षात्कृतवानिति संजयो दिव्येन चक्षुषा पारमेश्वरमनुग्रहमर्जुनस्य दृष्ट्वैतदुक्तवान् ॥

अथ दृष्टपरमेश्वरवैश्वरूप्योऽर्जुनः किं चकारेत्याह ।

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

ततः तादृगत्यद्भुतभगवद्रूपसाक्षात्कार[3]क्षणादनन्तरं पुनर्मानुषभावाविर्भावेऽप्यननुभूतं परतत्त्वस्मरणजनितेन विस्मयेनाऽऽविष्टप्रक्रान्ताचित्तवृत्तिरत एव हृष्टरोमा संजातपुलको धनंजयो देवकीपुत्रं पुरोवर्तिनं साक्षात्कृतनिरतिशयप्रभावत्वात्संजाततद्विषयबहुमानातिशयो मूर्ध्ना पादप्रणामं कृत्वा कृताञ्जलिः सन्निदं वक्ष्यमाणमभाषतोवाच ॥

किमित्याह ।

---

१ राशा १–प्रकाशत्व°. २ राशा २–कृत्स्नमखिलं जगत्. ३ राशा १–'लक्षणात्' नास्ति.

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दीप्तान् ॥ १५ ॥

[ शां. पा. १–दिव्यान्. ]

हे देव परमेश्वर तव देहे सकलजगद्भावैकाश्रयभूतेऽस्मिन्वपुषि देवान्दिवौकसस्तथाऽन्यानामपि चराचराणां भूतविशेषाणां प्राण्यन्तराणां सहस्राणि पश्यामीति देवादिप्राधान्येनैव हि झगिति समस्तविश्वदर्शनं भगवद्वपुषि पूर्वप्रतिपाद्यक्रमेण तद्विशेषदर्शनं प्रतिपादयितुमाह । ब्रह्माणं प्रजापतिमीशं प्रभुं कमलासनस्थं पुण्डरीकविष्टरसंनिविष्टं पश्यामीत्यनेन ब्रह्मलोकान्तमूर्ध्वभुवनदर्शनमुक्तवान् । ऋषींश्च सर्वान्पश्यामीत्यनेन प्राधान्यापेक्षया ऋषिजनोपलक्षितमध्यमलोकदर्शनमुक्तवान् । एवं त्वद्वपुषि भुवनत्रयं लीनं पश्यामीति स्वानुभवं प्रतिपादितवान् ॥

एवं देवादिविश्वभूताधिष्ठितभुवनत्रयदर्शनेऽपि त्वामेवैकं सर्वाश्रयं पश्यामीत्याह ।

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवाऽऽदिं
पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥

[ शां. पा. १–°विश्वरूप. ]

स्पष्टार्थः श्लोकः । किंतु भुवनत्रयगतानां भूतानां ये नानाविधभुजजठरवदनलोचनादयोऽवयवास्ते तवैव सर्वतोऽवच्छिन्नमाहात्म्यस्यैकस्यावयवत्वेन पश्यामीत्यत्र तात्पर्यमिदम् ॥

एकवचने पुरःस्थितं रूपं त्वदनुग्रहात्परमेश्वरतेजोमयं पश्यामीत्याह ।

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

---

१ राशा १ ना १–भवद्देहे.

अवतरणिकयैव व्याख्याततात्पर्यमेतत् ॥

अत एव परमेश्वरप्रतिपादकानि विशेषाणि तस्य रूपस्य प्रतिपादयितुमाह ।

**त्वमक्षरं परमं वेदितव्यं**
**त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः सात्वतधर्मगोप्ता**
**सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

[ शां. पा. १-शाश्वतधर्म.° ]

अक्षरं स्वरूपप्रच्युतिलक्षणक्षोभरहितं यत्परमं निरुत्तरं वेद्यं ज्ञेयं तत्त्वं तद्भवान् । तथाऽस्यानन्तप्रपञ्चस्य जगतः प्रकृष्टं निधानं त्वय्येव तत्सर्वं जगन्निविशते । न त्वस्ति जगतो निधानं प्रधानं यत्र तत्प्रलये निधीयते सत्यमस्ति तत्तदपि परमकारणे भगवति निधीयते । त्वत्त एव प्रभवतीति तस्यापि निधानत्वात्त्वं परमं निधानं जगत इत्युक्तम् । तथा तथा कालावच्छेदाविषयत्वादव्ययोऽक्षयः । सात्वतधर्मगोप्ता त्वं सदिति ब्रह्मनाम यद्वक्ष्यति ।

'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ' इति ।

तद्विद्यते यस्य समत्वात्परमेश्वरः परब्रह्ममयो सदेव येषां ते सात्वता ब्रह्मविदस्तेषां धर्मो यथाप्रतिपादितज्ञानक्रियासमुच्चयानुष्ठानरूपः सदाचारस्तस्य गोप्ता । कालापचयवशात्तिरोभवतः पुनः पुनः प्रणयनात्तद्बाधकविघ्नघटनाच्च रक्षिता त्वमेव ॥

अत एवाऽऽह ।

**अनादिमध्यान्तमनन्तवीर्य-**
**मनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं**
**स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

अनन्तत्वादाद्यन्तमध्यरहितम् । अवच्छेद्यस्य वस्तुन आद्यादिविभागवत्त्वमित्थं जगत्प्रपञ्चविरचनसामर्थ्यं वीर्यमनन्तं न कदाचिन्निवृत्तं यस्य तं तथा सर्वक्षेत्रज्ञानां तत्तत्क्रियासाधनभूता येऽनन्ता बहवस्ते पारमार्थिकस्यैव कर्तुः परमेश्वरस्य संबन्धिन इत्यनन्तबाहुत्वम् । तथा क्षेत्रज्ञशरीरे चक्षुर्भ्यां नियतवि-

---

१ राशा २ ना १-°तारकियैव. २ राना १-भगवान्. ३ राना १-'अस्य' नास्ति. ४ राना १-निलीयते.

प्रयप्रकाशनं क्रियत इति शशिसूर्यनेत्रम् । तथा क्रियावद्भिर्विविधयज्ञक्रियाविशेषैर्वैश्वानरो विश्वमूर्तिः परमेश्वर एवैकस्तर्प्यत इति तस्यैव दीप्तो हुताशोऽग्निर्वक्त्रमित्युक्तम् । तथा स्वेन तेजसा संविद्रूपेण ज्योतिषा सर्वमिदं तपति द्योतयत्येवंविधं विश्वात्मानं त्वां पश्यामीति संबन्धः ॥

अथ सर्वशक्तेः परमेश्वरस्य कुरुसैन्यसंहारप्रसृतकालाख्यशक्तियुक्तत्वाद्घोरत्वविशिष्टरूपं वर्णयितुमाह ।

> द्यावापृथिव्योरिदमन्तरं हि
> व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
> दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
> लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

[ शां पा. १–रूपमुग्रं तवेदं. ]

यस्मान्महता रूपेण गगनभूम्यन्तरालं सर्वाश्च कुकुभस्त्वयैकेन व्याप्ताः पूरितास्तदिदमीदृग्विधं तव घोररूपं दृष्ट्वा लोकत्रयं त्रैलोक्यनिवासि तत्तद्दर्शनयोग्यदेवादिरूपं प्रव्यथितं प्रकर्षेण भीतम् । एवं महात्मन्निति रूपं महत्वापेक्षमामन्त्रणम् ॥

तेषां देवादीनां तथाविधरूपदर्शनभयोत्पन्नाश्चेष्टाः प्रतिपादयितुमाह ।

> अमी हि त्वा सुरसंघा विशन्ति
> केचिद्भीताः प्राञ्जलयो गृणन्ति ।
> स्वस्तीति चोक्त्वैव महर्षिसंघाः
> स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

[ शां. पा. १–आनन्द.–“ असुरसंघा इति पदं छित्त्वा ‘ भूभारभूता दुर्योधनादयः ” नील.–“ असुरसंघा असुरांशा दुर्योधनादयः ”–इतरत्र ‘ सुर° ’ इत्येव पाठः. २–स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः. ]

अमी यस्मात्त्वां दुष्टक्षयायाऽऽविष्कृतदारुणाकारं शक्रादिदेवसमूहा विशन्ति त्वय्येव लीयन्ते । केचिच्च भीताः संत्रस्ताः सन्तो विरचितकरपुटा गृणन्ति स्तुतीः पठन्ति । अतश्च महर्षिसंघाः, मुनिप्रवरसार्था जगत्क्षेमाय स्वस्तिशब्दमुच्चार्य पुष्कलाभिर्मुख्यार्थत्वात्संबन्धिनीभिः स्तुतिभिरुच्चारितैरुत्सारितोद्गीरणैस्त्वां स्तुवन्ति प्रशंसन्ति ॥

किंच,

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षाः सुरासिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

[ शां. पा. १-°यक्षासुर°. ]

रुद्रादयो देवविशेषा व्याख्याता । ऊष्मपाख्याः पितरो, गन्धर्वादयः प्रसिद्धाः । एते सर्वे, एते देवयोनित्वाज्ज्ञानविशेषसंभवे सति त्वां वीक्षन्ते पश्यन्ति । घोरत्वादपूर्वस्य रूपस्य विस्मयाविष्टाः ॥

यादृशं रूपं दृष्ट्वा त एवंविधाः संवृतास्तद्वर्णयितुमाह ।

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥

स्पष्टार्थः श्लोकः ॥

तद्रूपदर्शनेन विशेषतस्तामवस्थां दर्शयितुमाह ।

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

अयमपि श्लोको गतार्थ एव । किंतु दिव्यचक्षुर्दानभगवदनुग्रहं दृष्ट्वा दिव्येन ज्ञानेनानुभूयाध्यानमन्यधर्मावेशे सति तद्रूपं स्मरन्भीतचित्तः सन् धैर्यं निराकुलचित्तत्वं न प्राप्नोमीत्यतो दर्शनकाल एव भयादीनां संभवो वेदितव्यः । अन्यत्रापि वर्तमानाख्यातप्रयोगे पूर्वदृष्टस्मरणं कारणत्वेन बोद्धव्यम् ॥

किंच,

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

स्फुटार्थं एतद्वाक्यम् । किंतु भगवतो दंष्ट्राकरालबहुमुखत्वं संहारप्रवृत्तबहु-विकरालकृतान्तपुरुषविशेषात् ॥

अत एव कृतान्तपुरुषाक्रान्तानां कुर्वादीनां चेष्टितं वर्णयितुमाह ।

अमी [1]सर्वे धृतराष्ट्रस्य पुत्राः
सर्वैः सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

नानारूपैः पुरुषैर्योध्यमाना
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः
शस्त्रैः कृत्ता विविधैः सर्व एव ।
त्वत्तेजसा निहता नूनमेते
तथा हीमे त्वच्छरीरे प्रविष्टाः ॥ २८ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा [4]द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो [5]ज्वलन्ति ॥ २९ ॥

यथा प्रदीप्तं ज्वलनं पतंगा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ ३० ॥

[ शां. पा. १–अमी च त्वां. २–सर्वे. ३–पङ्क्तित्रयात्मकः २८ तमः श्लोकः शां. पाठे नास्ति. ४–द्रवन्ति. ५–अभिविज्व°. ]

एतच्छ्लोकपञ्चकं निगदितरूपं व्याख्यातपूर्वम् । किंतु तव वक्त्राणि विशन्तीति बहुवचनेन दंष्ट्राकरालानीत्यादिविशेषणविशिष्टानि वक्त्राण्युपक्रम्य, अचिन्त्यरूपं वक्त्रं तव विशन्तीति यदुक्तं तत्र कालपुरुषोत्तमसंबन्धिन्यो घोराकृतिविशेषरूपा नानाविधाः शक्तय एकस्यां त्वदीयायां परमसामान्यशक्त्यां परिणमन्ति, इति भगवतः सर्वशक्त्याश्रयत्वप्रतिपादनपरं बोद्धव्यम् । यत एकवक्त्रेण शब्देन प्रतिपादितायाः सामान्यशक्तेरव्यपदेशादचिन्त्यरूपत्वेन विशेषणमुक्तम् । तथा हीमे त्वच्छरीरं इत्यनेन तदेव स्फुटीकृतम् । यत्र श्लोकपञ्चकेन सार्धेन नानारूपैरित्यादि त्वच्छरीरे प्रविष्ट इत्यन्तं श्लोकसार्धकं श्लोकसाम्यार्थं केचिन्न पठन्ति । कश्चित्तु त्वत्तेजसा निहता नूनमित्यादिश्लोकार्धमनेनाभिप्रायेण न पठति । इह तु बहुपुस्तकदर्शनाद्भारते च तत्र सार्धश्लोकप्रणयनाद् व्यासमुनेः श्लोकपञ्चकं सार्धमेव पठितम् ॥

अथ तथाविधां घोररूपां भगवतः शक्तिं दृष्ट्वा तत्त्वजिज्ञासार्थमिदमाह ।

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णोः ॥ ३१ ॥
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३२ ॥

[ शां. पा. १–विष्णो. ]

इमान्समस्ताँल्लोकान्समन्तात्सर्वतो ज्वलद्भिर्वदनैः सानलैर्मुखैर्ग्रसमानः कवलयँल्लेलिह्यसेऽभीक्ष्णं लेक्षि[1], आस्वादयासि । अत एव तवोग्रा भासो घोरदीप्तयः समस्तं विश्वं तेजोभिर्व्याप्य प्रतपन्ति देदीप्यन्ते । यत एवं परमप्रशान्तचिन्मात्रस्वभावस्य तव घोरं रूपं पश्यामि, ततो देववर, सकलसुरोत्तम, तुभ्यं नमः प्रसादं च कुरु । को भवानुग्ररूपः संवृत्त इति मह्यमाख्याहि आचक्ष्व । तथैवंविधघोररूपग्रहणे प्रवृत्तिं प्रसरं न जानामि, तस्मात्तो नावगच्छाम्यत आद्यं परमकारणं भवन्तं ज्ञातुं विशेषेण बोद्धुमिच्छामि ॥

---

१ राशा १–लीक्षि.

केन हेतुना कः संस्त्वमेवं घोररूपां शक्तिमाविष्करोषीति विज्ञप्तः,

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

[ शां. पा. १–( भाष्ये—' ऋतेऽपि विनाऽपि त्वा त्वाम् '). ]

कालोऽस्मि निरुपप्लवस्वरूपामच्युतस्यैव विजृम्भमाणशान्तोग्रघोररूपसमग्रशक्तेः कालाख्या घोरा ममेयं शक्तिरित्यर्थः । शक्तेश्च शक्तिमदभेदो यदहमेव काल इत्युक्तम् । कीदृशः कालः ? सकललोकसंहारैकव्यापारोऽधुना त्विह पृथिव्यां प्रवृद्धान्मदोद्रिक्तान्पृथिवीभारभूताँल्लोकानिमान्समाहर्तुं क्षयं नेतुं प्रवृत्तः प्रसृतो रुद्रस्त्वदृतेऽपि त्वां विनाऽपि परिपूर्णपापात्मकत्वात्सर्व एते न भविष्यन्ति । त्वयाऽयोत्स्यमानेऽपि विनङ्क्ष्यन्त्येव । के ते योधाः ? संप्रहारिणः प्रत्यनीकेषु प्रतिपक्षसैन्येषु येऽवस्थिताः ॥

यत एवमेते संप्लवन्त्येवावश्यंभाविविनाशनाघाताः,

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३४ ॥

कालात्मिकया मच्छक्त्या प्रागेव ग्रस्तानेतान्निघ्नंस्त्वं कारणमात्रं संपद्यस्वेति व्यक्तार्थ एवैष श्लोकः ॥

द्रोणादयश्चाप्रतिमपराक्रमत्वाद् दुर्जया इति च माऽवमंस्था इत्याह ।

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि लोकवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३५ ॥

[ शां. पा. १–योधवीरान्. ]

द्रोणादयोऽपि सकललोकैकवीराः कालस्य दुर्जयत्वान्मया व्यापादिता इति तान्सुजयान्मत्वा मा भैषीरिति तात्पर्यम् ॥

एवं भगवदुक्तेऽर्जुनावस्थां धृतराष्ट्राय,

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाऽऽह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३६ ॥

स्पष्टार्थः श्लोकः ॥

कृष्णं किमर्जुनः प्राहेत्याह ।

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३७ ॥

इत्थं सर्वशक्तेः सर्वेश्वरस्य तव प्रकीर्त्या प्रशंसया यत्सर्वं जगत्प्रहर्षं भजतेऽत एव त्वदनुरक्तं भवति, तदा तद्व्युत्थापकानि रक्षांसि यातुधानानि भयाद्यतस्ततः पलायन्ते । सिद्धसंघा देवविशेषसमूहाः समस्ताः प्रणमन्ति च, तत्सर्वं स्थाने, युक्तं च ॥

त्व(भग)दनुग्रहादेव साक्षात्कृतं परं भवत्स्वरूपं परामृशन्पुनरप्याह ।

कस्माच्च ते न नमेयुर्महात्म-
न्गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तः परं यत् ॥ ३८ ॥

[ शां. पा. १–नमेरन्. २–सदसत्तत्परं यत् ]

अथवा कस्मात्कुतश्च हेतोरेते सिद्धादयस्तुभ्यं न नमेयुर्महात्मन्परमपुरुष । कीदृशाय ते तुभ्यं, ब्रह्मणोऽपि प्रजापतेरपि गरीयसे परमगुरवे, यत आदिकर्त्रे आद्याय स्रष्ट्रे, तस्यापि जन्महेतवे । हे देवेश, अनन्तापरिच्छिन्नमाहात्म्य, सकलसुरनाथ, समस्तभुवनैकनिधान, यतस्त्वमत इन्द्रियागोचरादिदंतावधारणीयाद्वस्तुनो यत्परं व्यतिरिक्तं, तस्मादसतश्चाभावरूपादपि यत्परमनवेद्यमक्षरम् ।

अविकारं निरुत्तरं परमार्थसत्तत्त्वमतो वेदकैकस्वभावमनन्यवेद्यं परमकारणं त्वां कथं ते सिद्धा विदितवेद्याः सन्तो न नमस्येयुरिति तात्पर्यम् ॥

अथ यथानुभूतभगवद्धर्मानुदीरयति ।

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूपम् ॥ ३९ ॥

[ शां. पा. १–अनन्तरूप. ].

बहुशोऽपि व्याख्यातार्था[1] एते भगवद्विषयाः शब्दाः ॥

किंच,

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
अनादिमानप्रतिमप्रभावः
सर्वेश्वरः सर्वमहाविभूते ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ४० ॥

[ शां. पा. १–इयं ( द्वितीया ) पङ्क्तिः शां. पाठे नास्ति. ]

सर्वेभ्य ऐश्वर्यगुणयुक्तेभ्यो महती प्रकृष्टा विभूतिः शक्तिविजृम्भा यस्य तथाविधः । हे तादृश भगवन्, सर्वेश्वरोऽत एवाप्रतिमप्रभावोऽनन्यसामान्यमाहात्म्यस्तथाऽनादिमान् । आदिर्विद्यते यस्य स आदिमान्, अनादिमान्सर्वप्रथम इत्यर्थः । एवंविधस्त्वमेव वाय्वादयो दैवतविशेषाः । यथा च वाय्वादीनामीश्वरस्वरूपादभिन्नत्वं तथा सर्वमादौ व्याख्यातमेव ॥

परमेश्वरस्य सर्वाकारत्वं परामृशन्नाह ।

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
न हि त्वदन्यः कश्चिदस्तीह देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।

[ शां. पा. १–इयं ( द्वितीया ) पङ्क्तिः शां. पाठे नास्ति. ]

---

१ राना १–आख्याता°.

सर्वं स्पष्टार्थमेतत् ॥

किंच,

अनन्तवीर्योऽमितविक्रमस्त्वं
सर्वं संव्याप्नोषि ततोऽपि सर्वः ॥ ४१ ॥

[ शां. पा. १-°वीर्यामित°. २- समाप्नोषि. ३-ततोऽसि. ]

अत्रापि न किंचिद्व्याख्यातमस्ति । सर्वं स्वशक्त्या सम्यग्व्याप्नोषि, ततोऽपि सर्वो यतस्ततः सर्वात्मकस्त्वमेव । वीर्यमुत्साहशक्तिः, पराक्रमः क्रियाशक्तिः ॥

अथ विज्ञातभगवत्परमस्वभावत्वात्पूर्वं पुरुषत्वप्रतिपत्त्या भगवति व्यवहितमतिक्रमं मन्यमानस्तत्क्षान्त्यर्थं श्लोकचतुष्टयमाह ।

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखे च ।
अजानता महिमानं तवेमं
मया प्रमादात्प्रणयेन वाऽपि ॥ ४२ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४३ ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य विश्वस्य गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४४ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियस्यार्हसि देव सोढुम् ॥ ४५ ॥

[ शां. पा. १-सखेति. २-तवेदं. ३-तत्समक्षं. ४-पूज्यश्च. ५-प्रियायार्हसि. ]

सुबोधमेतत् । किंतु, सखा त्वं ममेति मत्वा यद्यदेवापशब्देनाऽऽमन्त्रितोऽसि, योऽप्यन्यो व्यतिक्रमः कृतस्तत्सर्वमिदमज्ञातवतो भगवन्माहात्म्यम् । तदिदानीमज्ञातवतो मे क्षन्तव्यमिति संबन्धः । मत्समक्षमिति सभायां वा सतां संनिधौ । लोकत्रयेऽपि तव समो नास्ति, कुतोऽन्योऽधिको भविष्यति ॥

अथ विज्ञातमहिमानमावेदयितुं श्लोकत्रयमाह ।

दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ॥ ४६ ॥
तवाद्भुतं किं नु भवेदसह्यं
किं वा शक्यं परतः कीर्तयिष्ये ।
कर्ताऽसि सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव ॥ ४७ ॥
अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं न हि विद्यते ते ।
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य नर्द्धेः ॥ ४८ ॥

[ शां. पा. १–एतच्छ्लोकत्रयं शां. पाठे नास्ति. ]

पूर्वे पुरातना अपि सर्वज्ञऋषयस्तव कर्माणि स्मरन्त्यत एव तेषामृषीणामपि तानि पूर्वाणीति जगत्सर्गप्रलयादीनां भगवत्कर्मणामनादिप्रबन्धप्रवृत्तत्वप्रतिपादनपरमेतत् । पूर्वं व्याख्यातप्रायमन्यत्सुबोधं, किंतु धाता धारयिता विधाता स्रष्टा, तव स्रष्टव्यः संसारः किमद्भुतमाश्चर्यरूपं कर्म स्वेच्छामात्रोपकारणस्यैकस्य कर्तुस्तवासह्यमत एव सहकार्यादिनिरपेक्षत्वात्परतः स्वात्मव्यतिरिक्तात् कुतश्चिच्छक्यं साध्यभूते कथयिष्यामि । इत्थं चानन्यापेक्षतया यतस्त्वं सर्वस्य वस्तुजातस्य निर्माता, ततो हेत्वन्तराभावात्त्वमेवेदं सर्वं, त्वच्छक्तिरेवेत्थं चकास्तीत्यर्थः । ततश्चात्याश्चर्यरूपमपि कर्म न ते दुष्करमित्यादि स्पष्टम् ॥

अथानुग्रहलक्षणानुरूपं भगवत्स्वरूपाव्यतिरेकसमाधेर्निष्क्रान्तस्तथाविधमत्युग्रं भगवत्स्वरूपं मनुष्यधर्मप्रत्यासत्तेश्चिरं द्रष्टुमशक्तः प्राक्तनमेव दिदृक्षमाण इदमाह ॥

---

१ राना १–वसतां.

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४९ ॥
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ५० ॥

स्पष्टार्थमेतत् ॥

अथैवंविधमुक्ते,

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५१ ॥

सुबोधमेतत् । किंत्वात्मयोगाद्दर्शितमित्येतदेवं बोद्धव्यम् । यदनुग्रहपरेण मया त्वय्यात्मनि परस्मिन्स्वभावे यः समाधिं प्रापितस्तस्मादेतद्रूपं तव प्रत्यक्षीकृतम् ॥

व्यतिरिक्तेनास्य परमेश्वरस्य स्वरूपस्य द्रष्टुमशक्यत्वादत एवाऽऽह ।

न वेदयज्ञाधिगमैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्यमहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५२ ॥
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ५३ ॥

[ शां. पा. १-°ध्ययनैर्न. २-°क्य अहं. ]

---

१ राशा २ ना १-°ग्रहेण.

वेदानां यज्ञानां बहुत्वादधिगमबहुत्वम् । अधिगमशब्देनाध्ययनश्रवणादयो गुणाः प्रतिपादिताः । दानक्रियातपःशब्दैस्तदनुष्ठानम् । क्रियाशब्दाच्चानुष्ठीयमानो ब्रह्मचर्यादिकर्मविशेषवाचको यत्नः । यतश्चैवंविधसदाचारव्यवस्थितैरपि परज्ञानशून्यत्वादशक्यदर्शनमेतत्परमं मम रूपं मदनुग्रहादेवोन्मीलितदिव्यचक्षुषा त्वया दृष्टं, ततो भयमोहादीनां कोऽवसरः । प्रत्युत मत्स्वरूपनित्यानुसंधानावहितात्मना त्वया तदेव स्मर्तव्यमित्यभिप्रायः । घोरकालपुरुषाद्याकृतियोगादुग्रं संहाराक्लिकर्मणा । शिष्टं स्पष्टम् ॥

अथैतद्धृतराष्ट्राय,

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५४ ॥

स्पष्टार्थमेतत् । किंतु महात्मा विश्वरूपः सन्सौम्यरूपः पुनः प्राक्तनरूपपुरुषविग्रहात्सुदर्शाकृतिर्भूत्वा भगवानेवमर्जुनं तथाविधाद्भुतदर्शनसंत्रस्ताचित्तं वक्ष्यमाणेन प्रत्याश्वासयदिति तात्पर्यम् ॥

एवं प्रत्यागतप्रकृतिः,

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५५ ॥

स्पष्टमेतत् ॥

अर्जुनाश्वासाय,

श्रीभगवानुवाच ।

सुदर्शनमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५६॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५७ ॥

[ शां. पा. १ सुदुर्दर्शमिदं. ]

निगदव्याख्यातप्रायमेतत् । यतः सर्गादितत्तत्स्वाधिकारव्यग्रचित्तत्वादपरामृष्टस्वभावा ब्रह्मादयो देवा अस्य रूपस्य सदा साक्षात्कारमभिकाङ्क्षन्ति, न तु लभन्ते। ततः सुतरां सर्वेण केनाचिद् दुष्करदर्शनमेतादृक्तया मत्प्रसादाविर्भूतपरज्ञानचक्षुषा द्रष्टुम् । अतो यथा मां त्वं तत्त्वतः साक्षात्कृतवांस्तथा दानादिक्रियासक्तैर्द्रष्टुमशक्योऽहम् ॥

केन तर्ह्युपायेन शक्योऽस्मीत्याह ।

भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५८ ॥

[ शां. पा. १ शक्य अहमेवं.° ]

भक्त्या मदिच्छयैव परं दैवसर्गाभिजातजनसुलभया परिचर्यया तत्प्रभावादेवाविर्भूतसम्यग्ज्ञानत्वादविद्यमानमद्व्यतिरिक्तभजनीयविषयत्वे सत्यनन्यया ज्ञातुमविसंवादिनाऽवगमेन बोद्धुं तथा सम्यग्ज्ञानलक्षणेनोपायेन द्रष्टुं गोचरीकर्तुं, तथा तादृशोपायपरिशीलनाभ्यासातिशयात्प्रवेष्टुमात्मतयाऽवगाढुमेवंविधो यथा त्वयाऽनुभूतः, तथा शक्योऽहं नान्यैरुपायैः। त्वं च परस्यास्य रूपस्य साक्षाद्दर्शनात्प्रवेशपर्यन्तां भूमिमधिरूढस्तेन दुस्तरद्वैतसागरादुत्तीर्णः समाश्वसिहि । कुतस्तवेदानीमदृष्टपरमार्थजनोचितैर्भयादिभिर्दोषैः संबन्ध इत्यर्थः ॥

एतमेवार्थं सिद्धान्तीकुर्वन्नध्यायमुपसंहरति ।

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५९ ॥

इति श्रीभगवद्गीतासूपनिषत्स्वेकादशोऽध्यायः ॥ ११ ॥

य एवंगुणविशिष्टोऽन्योऽपि कश्चिदभियुक्तः स मामेति, मदभेदलक्षणां सिद्धिमधिगच्छति । कीदृशः ? मत्कर्मकृच्च, शास्त्रचोदितानि तानि वर्णाश्रमगतानि कर्माणि करोति, किंतु मदर्थं यथोपपत्त्या मत्प्राप्तये, नतु फलान्तरसिद्धयेऽत एव मत्परमोऽहमेवोपादेयतया प्रकृष्टो यस्य । ततश्च मद्व्यतिरिक्तसमस्तदेहोपादेयवस्तुविरक्तचित्तत्वान्ममैव भक्तः, सर्वास्ववस्थासु मय्येव समर्पितान्तःकरणस्तथा स हि सर्वभूतेषु चराचरेषु भावेषु निःसङ्गो रागरहितो निर्वैरो द्वेषरहितो यो ह्यतत्त्वतया रागद्वेषविषयत्वेन सर्वसंसारिभिः परिगृहीतेषु वस्तुषु निरतिशयानन्दनिर्भरं मत्स्वरूपमेव सततमनुभवति स मामेवैति, सिद्धो मुक्त इहोच्यत इति तात्पर्यमित्योम् ॥

मुञ्चत्येष स्वभावं न तव बहुविधैरेकमेकान्तशुद्धं
प्रेङ्खन्द्भिर्भावभेदैरिति विहितपरामर्शमुक्तभ्रमाणाम् ।
स्वात्मन्येवैश्वरं वो मणिमुकुर इव व्यज्यतां वैश्वरूप्यं
स्वाध्यायस्यास्य नीतं स्फुटमभिमुखतां व्याख्ययैकादशस्य ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरण एकादशोऽध्यायः ॥ ११ ॥

## ॥ अथ द्वादशोऽध्यायः ॥

एवं परमार्थभगवद्वचनलक्षणात्समस्तप्रामाण्यहेतोः प्रमाणोत्तमात्सम्यगवगतेऽध्यायैकादशके प्रतिपादिते प्रत्यध्यायसमुच्चयानुष्ठानपर्यवसिततात्पर्ये ज्ञानविज्ञानादौ प्रकरणाभिधेये वस्तुन्युपपन्नतमत्वेनोत्पन्ननिष्कम्पप्रतिपत्तिरत एव तथा पात्रीभूतप्रज्ञत्वदर्शनप्रसन्नाद्भगवत एव परज्ञानरूपदिव्यचक्षुरुन्मेषकारणं परममनुग्रहमाप्तवान् । स्वयत्नं विनैव पारमेश्वरपरानुग्रहप्रभावमात्रादेव क्षणमात्रं साक्षात्कृतस्य परस्य तत्त्वस्येदानीं स्वातन्त्र्येणानुस्मरणे सुगमः कः पन्था मयाऽऽस्थेयोऽथवा मद्वचनासादित[1]परानुग्रहेणाभियोगिना जनेन केन मार्गेण तत्त्वमु[2]पसादितव्यमिति स्वपरार्थं गुणप्रत्यारोपाय जिज्ञासुः,

### अर्जुन उवाच ।

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

यथा विश्वातीतस्वरूप एव विश्वात्मकतया साक्षात्कृतोऽसि, एवमनेन प्रकारेण सततयुक्ताः सततं सर्वदा जागरादिषु सर्वास्ववस्थासु युक्ताः समाहिताः सन्तो भक्ताः प्रणयिनस्त्वां पर्युपासते सेवन्ते । ये च केचनाक्षरं चिन्मात्रस्वरूपासंचलनशीलमत एवाव्यक्तं व्यक्तादस्मात्सर्वेन्द्रियगोचरान्नानाभावलक्षणाद्वस्तुनोऽन्यं सर्वार्थनिषेधस[3]माधिनिष्णातधिषणास्त्वां पर्युपासते, तेषामुभयेषां योगविदां मध्ये के योगवित्तमा अतिशयेन त्वत्स्वरूपोपलब्धिफलसमाधिज्ञाः ॥

एवं विज्ञप्त एकतरपक्षप्राधान्यप्रतिपादनार्थं,

---

१ राना १–°साधित°. २ राश्ना १–उपा°. ३ राना १–'समाधि' इत्यत्र 'सामान्य°'.

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

त एवंविधा योगिनो युक्ततमा निरतिशयसमाधिभाजो मम मता अभिप्रेताः । तानहं परमयोगिनो मन्ये नान्यानित्यर्थः । के ते ? ये मयि सकलवस्तुप्रकाशकानन्यप्रकाशचित्प्रकाशैकस्वभावे मनोऽन्तःकरणमावेश्य तत्समापन्नं कृत्वा, परमया समस्तसंशयादिविकल्पविच्छेदादत्युत्कृष्टया श्रद्धया यथोक्तफलसद्भावभावनयोपेताः समन्विताः सन्तो नित्ययुक्ता नित्यस्थूलसूक्ष्मसर्वभावानुभवमयीषु तास्ववस्थासु यथोक्तसमाध्यवस्थिताः समुपासते, स्वरूपप्रत्यवमर्शलक्षणया निरुत्तरया भक्त्या सेवन्ते ॥

तदेवं कर्मयोगिनामेव योगवित्स्वतिशयेन प्रतिपादितो विशेषः । योग्यन्तरोपायानामभ्यासाभ्युपगमपूर्वं दुष्करत्वादिप्रतिपादितेनावरतरत्वमेव प्रतिपादयितुमाह ।

ये त्वक्षरमनिर्देश्यमव्यक्तं मामुपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

[ शां. पा. १-पर्युपासते. ]

ये तु ये पुनर्योगिन इन्द्रियग्रामं बाह्यानामाभ्यान्तराणां चेन्द्रियाणां समूहं संनियम्य सम्यगप्रमत्ततया नियम्य सर्वेभ्यो विषयेभ्यः प्रतिषिध्य मामुपासते । कीदृशमक्षरमव्यक्तं च प्राग्व्याख्यातस्वरूपमत एवानिर्देश्यमिदंतावसेयसमस्तसंवेद्यभावविलक्षणत्वान्निर्देष्टुमशक्यम् । वाक्पथातीतं, तथा सर्वत्रगम्, सर्वं व्याप्यावतिष्ठन्तमप्यचिन्त्यं बुद्धिगोचरातीतम् । तथा परमार्थनित्यत्वात् कूटस्थं निरुपप्लवाविनश्वरैकस्वभावनिष्ठम् । अत एवाचलं ध्रुवम् । न ह्ययं पर्वतादिकूटस्थपदार्थवच्चलनलक्षणलक्षणेनोपप्लवेनात्यन्तभावलक्षणेन वा नाशेन कदाचित्संयुज्यते । कीदृशाः सन्त एवंविधा मामुपासते ? सर्वत्र समबुद्धयः, सर्वस्मिन्वस्तुनि मत्स्वरूपैकदर्शित्वात्समा निर्विशेषा बुद्धिर्येषां ते तथोक्ताः । समबुद्धित्वादेव सर्वभूतानामेव हिते रताः सर्वस्याऽऽत्मभावेन प्रतिपत्तेर्न क्वचिद् द्वेषदोषकालुष्यमनु-

१ राना १-' च ' नास्ति. २ राना १-°नश्वरस्व°. ३ राशा १- पवनादि.

भवन्तः । अनेन विशेषणद्वयेन विनाऽस्य समाधेरनिष्पत्तिः प्रतिपादिता । न हि सर्वसाम्यदशानधिरूढो योगी निष्पन्न इत्युच्यते । एवंविधा योगिनो ये मामुपासते ते सत्यं मामेव प्राप्नुवन्ति ॥

यथोक्तेतिकर्तव्यतया निष्पन्नसमाधीनां मत्स्वरूपसमापत्तिरेव समाधिफलं तेषां नान्यत् । किंतु,

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहभृद्भिरवाप्यते ॥ ५ ॥**

[शां. पा. १–देहवद्भिर°.]

तेषां सर्वभावनिषेधसमाधिनिष्ठानां योगिनां सर्वभावनिष्ठत्वेन मदुपासनपरेभ्यो युक्ततमत्वेन प्राक्प्रतिपादितेभ्यो योगिभ्योऽधिकतरः सातिशयः क्लेशः । कीदृशानां सताम् ? अव्यक्तासक्तचेतसाम्, अव्यक्ते वाङ्मनसगोचरातिक्रान्तस्वभावे मय्यासक्तमालम्बनीयत्वेन तत्रैव निर्विण्णं चेतोऽन्तःकरणं येषां तथाविधानाम् । कथमव्यक्तासक्तचित्तत्वमधिकतरक्लेशकारणमित्युपपादयितुमाह । यस्माद्देहभृद्भिर्देहं नियतजात्याभिमानावच्छिन्नं शरीरमहमिति प्रतिपत्त्या धारयद्भिस्तैस्तादृशैर्योगिभिरव्यक्ता सर्वात्मना निराभासा गतिः समाधिप्राप्तिर्दुःखमतिक्लेशेनावाप्यतेऽधिगम्यते । अयमभिप्रायः । शरीरेऽहंतया प्रतिपाद्यमाने सर्वभावव्यतिरिक्तमत्स्वरूपसमापत्तिरनुपपन्नैव । तदभिनिवेशश्च स महान् क्लेश एव । अथास्ति काचिद्युक्तिर्यथा देह एव मद्भावेन प्रतिपत्तुं शक्यः । सर्वात्मना सर्वक्रियोपरमस्यासंभावित्वेन प्राक्प्रतिपादितत्वात् । तस्माच्छास्त्रचोदितासु क्रियास्वेव वर्तमानः पारमार्थिकमत्स्वरूपोऽसौ यथा सुखमवाप्नोति, न तथा दुष्करसकलक्रियानिषेधाभिनिविष्टः । न च तादृशो योगिनः सर्वत्र समबुद्धित्वमुपपद्यते, सर्वार्थेषु निषेध्यतया, द्वेष्याभिव्यक्तेः । यस्तु सुप्रबुद्धत्वात्सर्वदा सर्वथा मत्स्वरूपैकविश्रान्तसंवित्तस्य सर्वत्र निवृत्तहेयोपादेयविकल्पस्य सर्वत्र समबुद्धित्वमुपपन्नम् । सैषा मुख्या भगवत्स्वरूपोपासा चतुर्थी भक्त्यवस्था या तु नित्यक्रियान्तःपातिनी नानादर्शनप्रसिद्धेतिकर्तव्यताविशिष्टा ॥

साऽप्यनयैव दृष्ट्योपपन्नेति प्रतिपादयितुमाह ।

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

---

१ राना १–' सं ' नास्ति.

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

ये तु ये पुनरव्यक्तोपासकेभ्यो योगिभ्यो व्यतिरिक्ता योगिनः, सर्वकर्माणि शारीरीमानसीवाचिकीः शास्त्रीया लौकिकीश्च सकलाः क्रिया, मयि सकलकर्तृत्वेन प्रतिपादितस्वरूपे संन्यस्य, कार्यतया समर्प्य, देहाद्यहंकारात्मकक्षेत्रज्ञकर्तृत्वविनिवृत्तदेहाभिमाना मत्परा अहमेव परकर्तृत्वादिना प्रकृष्टो येषां ते तथाविधाः। अनन्येनाविद्यमानमव्यतिरिक्तत्वान्तरेण योगेन विहितकर्मानुष्ठानरूपेण समाधिना मां यथोक्तस्वरूपं ध्यायन्तोऽनुस्मरन्त उपासते, मुख्यया गौण्या वा भक्त्या सेवन्ते । तेषां तथाविधानां कर्मयोगिणां न चिरादव्यक्तोपासकापेक्षयाऽल्पीयसा कालेनाहं मृत्युसंसारसागरात्पुनः पुनर्नाशोत्पादप्रबन्धपयोधेः समुद्धर्ता सम्यगुत्तारको भवामि । कीदृशानाम् ? मयि परमकारणे परमेश्वर आवेशितचेतसामभेदभावनया समर्पितान्तःकरणानाम् ॥

अथ कथमिदमाश्चर्यमुपपद्यते यल्लोकवत्सर्वासु क्रियासु क्रियमाणास्वप्यद्वैतपरब्रह्मस्वरूपाप्रच्युतिरूपपरमसमाधिनिष्पत्तिरित्यत्र प्राक्प्रतिपादितामपि भक्तिं सूक्ष्मत्वाद् दुर्ग्रहामुपदेक्ष्य, प्रतिपत्तिस्थैर्याय पुनराह ।

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवत्स्यसि त्वं मय्येव योगमुत्तममास्थितः ॥ ८ ॥**

[ (राशा १·२(प्रान्ते)निवतर्स्यसि). शां. पाठे—निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः.]

इह सर्वक्षेत्रज्ञानां मनोबुद्धिनिबन्धनाः सर्वार्थसंविदः । तथा हि मनोवस्था द्विप्रकारा—स्वतन्त्रविकल्पात्मिका, पूर्वानुभूतस्मरणरूपविकल्पात्मिका च । सा च द्विप्रकारा——जागरस्वप्नभेदात् । एवं सर्वथैव बुद्धिवृत्तिस्तु निश्चयात्मिकत्वान्निर्विकल्पेत्येवं स्थिते मय्येकैकस्मिन्परमार्थे सति नित्योदितनिर्मलचित्प्रकाशस्वरूपे परमात्मनि यथोक्तस्वरूपं मन आधत्स्व संनिवेशय । यद्यन्मनसा विकल्पयसि तत्तन्मदात्मकत्वेन विजानीहि । तथा बुद्धिं यथोक्तस्वरूपां मय्येव यथोक्तस्वरूपे निवेशय समर्पय । यद्यद् बुद्ध्या निश्चिनुषे तत्तन्मदात्मकत्वेनैवं

१ राना १—अचिराद्. २ राशा १—द्विविधा. ३ राशा १—'वि' नास्ति. ४ राना १—'एव' नास्ति.

विजानीहि । अयमत्र तात्पर्यार्थः । यो योऽर्थो विकल्प्यमानो निश्चीयमानो वा, तेन तेन रूपेण संवेद्यते, स संवेद्यमानत्वादेव संवित्प्रकाशादभिन्नः । संविदात्मकश्च प्रकाशो ममैव पारमार्थिकस्यैकस्य संवेदितुरव्यभिचारी धर्म इति वास्तवेन रूपेण सर्वभावाः सर्वास्ववस्थासु मदात्मका एव । केवलं मायाव्यामोहितो लोकस्तानिदंतया व्यवच्छिनत्ति । त्वं तु सम्यग्ज्ञानोपदेशेन प्रथमं प्रसारितबुद्धिस्ततो योग्यतातिशयात्साक्षान्मत्स्वरूपमनुभावितः सन्सर्वास्ववस्थासु सर्वभावान्परमार्थतो मत्प्रकाशकत्वेनैव परिमृष, इत्येवंविधमिममुत्तमं योगान्तरापेक्षया प्रकृष्टं योगं समाधिमास्थितः समाश्रितः सन्मय्येव परमात्मनि निवत्स्यसि, स्थितिं लप्स्यसे, मदभेदमवाप्स्यसीत्यर्थः । अस्य हि कर्मयोगस्य यथोक्तज्ञानसंस्कृतविहितकर्मानुष्ठानमात्रसाधनत्वात् सर्वथा सर्वदा सर्वत्र सुसंपूर्णरूपत्वेनानुभूयमानत्वाद्दीर्घकालनैरन्तर्यादासेव्यमानक्रमसूक्ष्मबहुविधानुष्ठाननिष्णाततायां शांशिकया कदाचित्कथंचिदनुभवनीयस्वरूपादभ्यासयोगादुत्तमत्वम् ॥

एवं मुख्यं भगवत्स्वरूपोपासाक्रमं प्रतिपाद्य सर्वस्य कस्यचित्तत्पात्रतामर्जुनवदसंभावयन्नर्जुनोपदेशेनैवोपायान्तराभ्यनुज्ञामाह ।

**अथाऽऽवेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**
**अभ्यासेऽप्यसमर्थः सन्मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**
**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमास्थितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

[ शां. पा. १–अथ चित्तं समाधातुं. २–°समर्थोऽसि. ३–आश्रितः.]

अथेति प्रकारोपन्यासार्थम् । यदि यथाप्रतिपादितेन प्रकारेण यथोक्तस्वरूपे मयि चित्तं मनोबुद्धिवृत्त्यात्मकमन्तःकरणं स्थिरं सर्वास्ववस्थास्वविचलावधानतया दृढमावेशयितुं समर्पयितुं मत्स्वरूपाभेदेन भावयितुं न शक्नोषि, न प्रभवसि ततोऽभ्यासयोगेन कर्मयोगांशतया षष्ठाध्यायसंसूचितसंविधानेन तत्तद्योगशास्त्रप्रणीतेतिकर्तव्यताविशिष्टेन वा चित्तवृत्तिनिरोधप्रयत्नात्मकाभ्यासप्रधानेन समाधिना मां यथोक्तस्वरूपमवाप्तुमभेदेन प्रतिपत्तुमिच्छाभिवाञ्छ । आत्मस्वरूपप्राप्त्यभिसंध्य-

---

१ राशा १–°वत्स्यसि.

परित्यागेनाभ्यासयोगमपि कर्मयोगमपि कर्मयोग्यताहेतुभूतमनुभूतमनुतिष्ठेत्यर्थः। एवंविधेऽप्यभ्यासेऽभ्यासयोगेऽसमर्थोऽशक्तः सन्मत्कर्मपरमोऽत एव मदर्थं कर्माणि मत्कर्माणि तान्येव परमाण्यभीष्टसाधनतया प्रकृष्टानि यस्य स तथाविधो भव, कर्मयोगाङ्गतयाऽभ्युपगतस्येश्वरस्येश्वरप्रणिधानाख्यस्य क्रियायोगस्यानुष्ठानमाचरेत्यर्थः। ततोऽपि हि मत्स्वरूपावाप्तिलक्षणसमाधिफलसिद्धिर्भवत्यत एवाऽऽह—'मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि' इति। अथैतदपि यथोक्तं कर्तुं निष्पादयितुमशक्तोऽस्यसमर्थस्त्वं भवसि तन्मद्योगं मद्विषयं समाधिमास्थितः फलत्वे समाश्रितः सन्सर्वेषां पूर्वोक्तानां कर्मणामनुष्ठीयमानानां यत्फलं तैल्लोकान्तरोपभोग्यनानाभोगात्मकसिद्धिरूपं तस्य त्यागमनभिसंधिना संन्यासं यतात्मवान्हेयान्विषयान्निगृहीतान्तःकरणेन युक्तः सन्कुरु निष्पादय। मयि मनः समाधाय शास्त्रविहितानि सर्वाणि कर्माणि यथोक्तज्ञानप्रसादनतया फलान्तराभिसंधानं विनाऽनुतिष्ठेत्यर्थः॥

एवमुपदिष्टानां भगवदुपासाभेदानां क्रमेण पूर्वस्य पूर्वस्यानुष्ठानसामर्थ्ये सत्युत्तरस्योत्तरस्यानुष्ठानं यदुपदिष्टं तत्रावरत्वापेक्षया किं त्वधिकारिविषयस्य सुकरत्वमेव बोद्धव्यमिति प्रतिपादयितुमाह।

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा॥ १२॥**

[ शां. पा. १–अनन्तरम्.]

हिशब्दो हेतौ। यस्मादेवंविधो व्याख्याक्रम इह विवक्षितः, तस्मान्मत्प्राप्तये सर्वकर्मफलत्यागं योग्यतातिशयवशात्सुकरतरं त्वं कुर्विति पूर्वापरयोर्वाक्ययोः संबन्धः। कीदृशः क्रमः। इह ज्ञानं यथोक्तोपपत्त्या सर्वभावानां परब्रह्मरूपतावगमः। तदभ्यासादभ्यासयोगात्पूर्वोक्ताच्छ्रेयः सुकरत्वात्प्रशस्यतरम्। अभ्यासयोगो हि सर्वविषयप्रतिषेधक्रमेण चित्तवृत्तीनां निरोधे यत्नः। स च यथोक्तज्ञानलब्धप्रतिष्ठबुद्ध्यधिकारिविषयः। ततः प्रतिष्ठितबुद्ध्यधिकारविषयं ज्ञानं तदपेक्षया सुकरत्वाच्छ्रेय उक्तम्। अत एवाभ्यासयोगिनामव्यक्तासक्तचेतसामधिकतरः क्लेश इति प्रागुक्तम्। एवंविधाच्च ज्ञानाद्ध्यानं ज्ञाननिश्चितोपाये वस्तुचिन्तनं विशिष्यते सुकरत्वादतिरिच्यते। तस्य हि ज्ञानापेक्षया तत्त्वसाक्षा-

---

१ राना १–तद्योगान्तरोप°.

त्कारप्रवृत्तेर्विशिष्टोऽधिकारी तद्विषयत्वेनैव तस्य सुकरत्वम् । एवंविधाच्च ध्यानात्कर्मफलत्यागो विशिष्यते । यतो घटमानावस्थोऽसौ तादृग्ध्यानलक्षणे हि कर्मणि व्यतिरेकबुद्धिः स्फुरत्येव । तदधिकार्यपेक्षया त्यागः सिद्धावस्थाधिकारिविषयस्तादृशस्यैव सुकर इति ध्यानात्कर्मफलत्यागी विशिष्यत इत्युक्तम् । यस्मान्नेहैवंविधस्त्यागो विवक्षितो यस्य नाहं कर्ता, न मे कर्मफलेन संबन्ध इति प्रलापमात्रेण निष्पत्तिः । किंतु व्यतिक्रान्ताभ्यासादिपूर्वावस्थासिद्धयोगिविषयं सर्वभावानां परं ब्रह्म स्वरूपे नित्यमनुभवाद्व्यतिरिक्तस्य फलस्यादर्शनमेव त्याग उच्यते । अत एवाऽऽह—त्यागाच्छान्तिरनन्तरेति । शान्तिः सकलविकल्पक्षोभप्रक्षयादद्वयचिन्मात्रस्वरूपं परमात्मन्येव भगवत्यहमित्यभेदेन निरुपप्लवा संविदो विश्रान्तिः । तस्यास्त्यागस्य च नास्त्यन्तरं व्यवधानम् । य एव त्यागः सैव शान्तिरीश्वरसमापत्तिलक्षणसिद्धिरिति त्यागाच्छान्तिर्निरन्तरेत्युक्तम् । अनन्तरमिति पाठे क्रियाविशेषणत्वेनैष एवार्थो बोद्धव्यः ॥

अथेदृशस्य त्यागिनः परमसाम्यसमापन्नसंविदात्मभूतस्य भक्तस्य लक्षणमाह ।

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**
**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

परब्रह्मात्मकमत्स्वरूपसमापत्तिसूचकैवंविधगुणविशिष्टो यः स मद्भक्तः । स एव च मे प्रिय आत्मभूतत्वाद्दयितः । कीदृशः । सर्वसाम्यसमापन्नत्वाच्चराचरेष्वखिलभूतेष्वद्वेष्टा द्वेषलक्षणदोषरहितः । स्वात्मतया सर्वं भावजातं पश्यतस्तस्य हेयाभावाद् द्वेषाभाव इत्यर्थः । अनेन भावनिषेधात्मके समाधौ द्वेषदोषानुबन्धच्छेदः प्रागुक्तेनोदितः । अत एव मैत्रः सर्वसौहार्दवान् । तथा करुणो दयावान् । यतो निर्ममो ममेदमेतदर्थक्रियाकारितया त्वमिति परिग्रहबुद्धेर्निष्क्रान्तः । तथा देहाद्यनित्यवस्तुनिष्ठादहंकारप्रत्ययान्निष्क्रान्तो निरहंकारस्तथा ममैव वेद्यत्वमात्रेण प्रतिभासमानत्वादनन्तराविष्कृतद्वेषरागात्मकविकारत्वात्तुल्ये

१—अत्र 'अनन्तरा' इति पाठस्य 'निरन्तरा' इति पाठेन भेदः प्रतीयते. श्रा. पाठस्तु 'निरन्तरा' इत्येव, तथाऽपि कोशेषु 'अनन्तरा' इति श्लोकपाठो दृश्यते । तेनास्माभिरपि स एव पाठः स्वीकृतः. २ राशा १—बन्धानुच्छेदः.

सुखदुःखे यस्य । तथा क्षमी क्रोधादिविकारहेतुषु तितिक्षावान् । तथा स्वीकृतज्ञानपरामृतत्वान्नित्यतुष्टः सदा हि निरभिकाङ्क्षः । तथा यतात्मा यतः स्वात्मन्येवास्थापित आत्मा येन स तथा । सर्वे ह्यप्रबुद्धा अनात्मनि धनादौ नियमितात्मप्रत्ययाः । तथा दृढनिश्चयः केनचिद्विकल्पेन प्रकम्पयितुमशक्यत्वाद् दृढः सुस्थिरोऽध्यवसायो यस्य स तादृशः । तथा पूर्वाख्यातक्रमेण मयि परमात्मन्यर्पिते निवेशिते मनोबुद्धी येन स एवंविधगुणविशिष्टो मद्भक्त उच्यते । एवंविधसामग्री मदाराधनोपकरणसंपदित्यत्र तात्पर्यम् ॥

इदानीमुत्तरेषु श्लोकेषु प्रकृष्टभाक्तिविशेषणत्वेनोपात्तानि पदानि बहुशो व्याख्यातप्रायार्थत्वात्पठचन्त एव ।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षमन्युभयक्रोधैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भफलत्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभफलत्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

[शां. पा. १–हर्षामर्षभयोद्वेगैर २–°परित्यागी. ३–°परित्यागी. ४–मानापमा°.]

गतार्थान्येतानि विशेषणानि । किंतु कृतकृत्यताव्यक्तिहेतुभिः परमयोगिसंबद्धैरेवंविधैर्गुणैर्युक्तो यः स मद्भक्तो भवतीत्येतावदत्र तात्पर्यं प्रागेवोक्तम् ॥

अथाध्यायमुपसंहरन्नाह ।

ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

इति श्रीभगवद्गीतासूपनिषत्सु द्वादशोऽध्यायः ॥ १२ ॥

[शां. पा. १–धर्म्यामृतम्.]

---

१ राशा १–पूर्वव्याख्यात°. २ राना १–°प्रायत्वात्.

ये भक्ता मत्सपर्यापरा इदं यथाप्रतिपादितं धर्मामृतं मत्स्वरूपोपासनात्मकं सदाचारमयममृतमविनाशित्वकारणं वस्तूपासते नित्यानुशीलनेनोपसेवन्ते तेऽतीव सुतरां मम प्रिया वल्लभाः । न ते मत्तो व्यतिरिक्ता इत्यर्थः । कीदृशाः सन्त उपासते ? श्रद्दधानाः समस्तसिद्धिबीज[1]भूतां श्रद्धां भजन्तेऽत एव च मत्परमाः । अहमेव च यथोक्तस्वरूपः परमेश्वरः परमात्मा सर्वोपायैरुपेयतया पर[2]मः प्रकृष्टो येषां ते तथा श्रद्धामूलमत्समापत्तिफलां परां सिद्धिमुपागता इत्योम् ॥

सर्वार्थप्रार्थनेहारहितमपि सतां मानसं लोभयन्ती

लक्ष्म्या यत्र स्वयैषा विकसति भगवद्भक्तिकल्पद्रुमश्रीः ।

तां नित्यं नन्दनोर्वीविहरणविरसाः कौतुकात्कामपीमा-

मेकां विश्रान्तिभूमिं श्रयत कृतधियो द्वादशाध्यायवृत्तिम् ॥

इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभ-

द्रनाम्नि भगवद्गीताविवरणे द्वादशोऽध्यायः ॥ १२ ॥

## ॥ अथ त्रयोदशोऽध्यायः ॥

ॐ अध्यायद्वादशकेन प्रक्रान्तप्रयोजनविषयमेकमभिधेयतत्त्वमभिहितं, प्रायशो न कश्चिद्वक्तव्यशेषो विद्यते । केवलमुक्त ए[3]वार्थो विशिष्टेनाध्यायपञ्चकेन निर्मलीकरणायेदानीं प्रवक्ष्यते । तथा च प्रस्तावनाप्रदर्शितप्रक्रियाक्रमेण पारमार्थिकयथोक्तैकस्वरूपव्यवस्थितोऽपि परमेश्वरो निरुपमनिजक्रीडामात्रप्रयोजनतयैकमेव स्वस्वभावं वेद्यवेदकविभागपरिकल्पनया शाखाद्वयेन प्रसृतमवभास्य यामिमां मायामयीं महा[4]वागुरामग्रथयत् सा विषयिविषयभावेन शरीरशरीरिभावेन चावभासमाना समस्तं संसारिचक्रमध्यवस्थिता । तस्याः स्वेच्छयाऽनुग्राह्यत्वेन परिगृहीतजनप्रत्युद्ग्रथनोपायभूते सकले प्रकरणे तत्र तत्र प्रतिपादितस्वरूपं ज्ञानलक्षणमर्थं परमेश्वर एवोपदिष्टवान् । तत्र विषयविषे[5]यिविभागेनावस्थितायास्तस्या उद्वेष्टनाय समो ज्ञानलक्षणोऽर्थः प्रपञ्चितः । तथा हि—तत्र परस्यैव तत्त्वस्य जडचेतनविभागेन स्थूलसूक्ष्मप्रकृतिप्रपञ्चविवेकपुरःसरतया तस्यार्थस्याहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेत्यादिना प्रतिपादितया ब्रह्मतत्त्वलक्षणया परतरया

---

१ राना १–' बीज ' नास्ति. २ राना १–परः. १ राना ३–' एव ' नास्ति. ४ राना १–' महा '–नास्ति. ५ राना १–°विषयिभावेन.

प्रकृत्या परापरयोः प्रकृत्योरभेदपरमार्थतामतिपादनेन निर्णयः कृतः। इदानीं शरीरशरीरिभावेन व्यवस्थितायास्तस्या उद्वेष्टनोपायभूतत्वेन ज्ञानस्य निर्णयार्थं समनन्तरमध्यायमारभते। तत्र तावत्तयोः शरीरशरीरिणोर्वितत्य व्याख्यास्यमानप्रतिपादकसंज्ञानिर्देशेन सामान्यलक्षणं प्रतिपादयन् संक्षेपतो विवक्षितस्य ज्ञानस्य स्वरूपमपि,

श्रीभगवानुवाच।

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।**
**एतद्यो वेद तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ १॥**

[शां. पा. १–वेत्ति. २–°ज्ञ इति.]

इदं सर्वप्रमातृप्रसिद्धतया व्यवस्थितं शरीरं देहः क्षेत्रसाधर्म्यात्क्षेत्रमित्युच्यते, क्षेत्रसंज्ञया कथ्यते। यथा कुसूलादिसंभृतानां धान्यादिबीजानां मूलस्तम्भशाखाशिलादिविशेषप्रसवाभिव्यक्त्यधिकरणः पृथिव्युद्देशः क्षेत्रमित्युच्यते, तथा कर्माशयसंभृतानां कर्मणां जात्यायुर्भोगविपाकविशेषाभिव्यक्त्यधिकरणभूतं शरीरमपीदं क्षेत्रमित्युच्यते। तेन तत्कर्मविपाकास्पदत्वेन यदनुभूयते तच्छरीरमिति वेदितव्यम्। एतच्चैवंविधं क्षेत्रं यो वेद जानाति तं तद्विदः क्षेत्रज्ञस्य रूपज्ञाः क्षेत्रज्ञमिति विदुर्जानते। किमनेनोक्तं भवति। अस्मिञ्शरीरे द्विप्रकारा प्रतिपत्तिरेव स्थिता सर्वदेहिनामहंतयेदंतया च। तथा चाहं ब्राह्मणो यज्ञदत्त इत्यादिना देहमहंतया व्यवस्यन्ति। कदाचिन्ममेदं शरीरमितीदंतया व्यवस्यन्त्यतो व्यवसायिता प्रमाता तावत्कश्चिदत्र विद्यत एव। यश्चांशः प्रमातृतया प्रतीयते, स क्षेत्रज्ञो जीवश्चेतन इति प्रतिपत्तव्यः। एवमस्मिञ्शरीरे यद्वेद्यतया वेदकसंबन्धमात्रात्प्रतीयते तत्क्षेत्रांशतया वेदितव्यम्। योऽसौ वेदकतया प्रतीयते, स क्षेत्रज्ञ आत्मेत्यवगन्तव्यः। एतावत्येव नित्यावहितत्वं शरीरशरीरिणोर्विवेकज्ञानकारणम्। तच्च वेद्यवेदकसंबन्धमात्रनिबन्धनसकलपरापरव्यवहाराणामपि सर्वदेहिनां मायानिमीलिततत्त्वदृशां स्वप्नेऽपि नोन्मिषति। यावदीश्वरानुग्रहशक्त्यैव सा तत्त्वदृक्केषां नोन्मीलिता तेनानुगृहीत एव विषयोऽस्य ज्ञानस्येति तात्पर्यम्।

यत उक्तम्—तद्विदः केचनैव योगिनस्तं विदुरिति न परमार्थत एक एव प्रमाता प्रतिपादितः। प्रतिक्षेत्रं च पृथक्पृथग्वेदकप्रतीतिरबाधिता व्यवस्थितिरिति स्वसिद्धान्तविरोधभ्रान्तिं परिहर्तुमाह।

---

१ राना १–°तया प्रतीयते एतावद्वेदक°. २ राना १–' एकः ' नास्ति.

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

इह वेदकत्वमात्रमेकमव्यभिचार्यसाधारणमात्मनोपलक्षणमुक्तम् । अतः परस्परभिन्नानां क्षणिकनानावस्थाजुषां वेद्यानां शरीराणामेव भिन्नरूपत्वं व्यवस्थितम् । न तु वेदकत्वमात्रतयैव तदधिष्ठायकत्वेन व्यवस्थितस्य पारमार्थिकस्यैकस्य वेदकस्याऽऽत्मनो नानात्वमस्ति । सर्वदेहगतत्वेऽपि वेदकैकलक्षणाव्यभिचारात् । या तु प्रतिशरीरं जात्यवच्छेदेन पृथक्प्रतिपत्तिस्तदचिन्त्येश्वरमायाशक्तिविलसितम् । अतस्तद्व्युदासार्थमेव चायमुपदेशः प्रबुद्धान्प्रत्यर्जुनमुखेनोच्यते । सर्वक्षेत्रेषु चतुर्दशविधभूतसर्गभेदेनावस्थितेष्वपरिसंख्येयेषु शरीरेष्वेकमेव मां क्षेत्रज्ञं परमात्मानं जानीहि । यथैकक्षेत्रगतनानावयववेदकत्वेनैकक्षेत्रज्ञप्रतीतिर्मायादशायामवस्थिता तथा समस्तशरीरवेदकत्वेनैकः पारमार्थिकोऽहमेव क्षेत्रज्ञः । ततश्चैवंविधयोः क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं सम्यक्प्रतिपत्तिस्तदेव मम ज्ञानत्वेनाभिप्रेतम् । न तु सांख्यादिप्रतिपादितयोः शरीरशरीरिणोर्विवेकज्ञानमात्रं सात्त्विकज्ञानमिति तात्पर्यम् ॥

इदानीं नानादर्शनभेदेन व्यवस्थापितनानारूपस्यापि क्षेत्रस्य वेद्यत्वमात्रसामान्यलक्षणभेदात्कांचिदेव दर्शनप्रक्रियामाश्रित्य तत्स्वरूपे प्रतिपादितव्ये वेदाद्यागमप्रसिद्धसांख्यप्रक्रियासमाश्रयणेन प्रतिपादयिष्यमाणक्षेत्रस्य स्वरूपमुपक्षेप्तुमाह,

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥ ४ ॥

[ शां. पा. १–निश्चितैः. ]

तत्क्षेत्रज्ञज्ञेयतयोपक्रान्तं क्षेत्रम् । यद्यदभिधानमित्यर्थः । तथा यादृक्, यादृशेन प्रकारभेदेन स्थितं तत्संक्षेपेणावधारय । तस्मिंश्च क्षेत्रे यद्वस्तु विकारि विशिष्टकार्यकारणत्वाद्विकारवद्विकारसंयुक्तं, तदपि शृणु । तथा यतश्च विकारिणो यद्विकारभूतं वस्तूपपद्यते तदपि शृणु । तथा च क्षेत्रक्षेत्रज्ञ एवमेव यो यत्पर्यायो यत्स्वभावो यादृशश्च तत्सर्वं संग्रहेणोच्यमानमवधारय । अस्य

---

१ राशा १–°लसितमेव.

वस्तुनः श्रुतिस्मृतिप्रसिद्धत्वप्रतिपादनार्थमाह—ऋषिभिः स्मृतिभिर्बहुधा बहुप्रकारं तत्र तत्र स्मृतिशास्त्रेषु गीतम् । यथा छन्दोभिर्विविधैर्वेदशाखाभेदेन नानारूपैरत एव पृथक्पृथक्प्रकरणभेदेन गीतम् । ब्रह्मसूत्रशब्देन रहस्यभागो वेदस्य वेदान्तसंज्ञ उच्यते । तस्य यानि पदान्यवान्तरवाक्यानि तैर्हेतुमद्भिरुपपत्तिसंयुक्तैर्विनिश्चितम् , विशेषेण कृतनिश्चयम् । एवं वेदवेदान्तस्मृतिप्रसिद्धम् । अनेन वक्ष्यमाणस्य क्षेत्रादिस्वप्रतिपादितस्यार्थस्य प्रोक्तम् । तत्र यत्क्षेत्रं यच्च क्षेत्रज्ञ इति यदुक्तम्, तत्र क्षेत्रं शरीरं, क्षेत्रज्ञ[आत्मा] इति प्रागेवोक्तम् ॥

स्वरूपमेनयोर्मन्यमानो यादृगित्यादिना शिष्टं वक्तुमाह,

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

एतन्महाभूतादिवस्तुसमुदायात्मकं क्षेत्रं विकारसंयुक्तं, विकारग्रहणात्प्रकृतिभूतसंयुक्तमपि संक्षेपेण कथितम् । तत्र महाभूतशब्देन व्यापकत्वादिमहत्त्वे सति तन्मात्राण्येवोक्तानि वेदितव्यानि । यतः श्लोकार्धेन कारणभूतं पदार्थचतुष्टयं संगृहीतम् । तत्राहंकारोऽस्मीति प्रत्ययोऽस्मिताशब्देन क्वचिदुक्तो बुद्धिनिश्चयात्मकं ज्ञानं महत्तत्त्वमिति प्रसिद्धम् । तथाऽव्यक्तं गुणत्रयात्मिका प्रकृतिरेतानि चत्वारि कारणभूतानि स्थूलादिक्रमेण निर्दिष्टानि । तानि च पृथिव्यादिभूतानां तन्मात्राणि कारणम् । अहंकारस्तैजसवैकारभूतात्मकभेदेन त्रिविधः । तत्र तैजसत्वेन मनसः कारणम्, वैकारिकत्वेनेन्द्रियाणाम्, भूतात्मत्वेन तन्मात्राणामित्यहंकारस्य त्रिविधगुणात्मकस्य कारणत्वम् । केचित्त्वहंकारतन्मात्रलक्षणस्य षट्कस्य महत्तत्त्वं कारणमाहुः । केचिदहंकारस्यैवेति बुद्धेः कारणत्वम् । बुद्धेश्च गुणत्रयरूपा प्रकृतिरव्यक्तशब्देनोक्ता । कारणमिति कारणभूतवस्तुचतुष्टयप्रतिपादनेन यद्विकारीति प्रक्रान्तोऽर्थो निर्णीतः । अत्र ह्यव्यक्तं स्वाधिकारापेक्षया मूलकारणम् । अहंकारश्च बुद्धिकार्यः सन्निन्द्रियादिकारणम् । तन्मात्राणामहंकारकार्याणि बुद्धिकार्याणि वा पृथिव्यादिकारजमिति चतुर्णामपि कारणत्वाद्विकारित्वम् ।

---

१ राशा १-°रूपं तयोः. २ राना १-संप्रकाशात्मकं. ३ राना १-करण°. ४ राशा १-°त्वात्. ५ राना १-°कारणः.

अथ कार्यवर्गं प्रतिपादयितुमाह । इन्द्रियाणि पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि प्रसिद्धानि । पञ्च वागादीनि कर्मेन्द्रियाण्यपि तत्त्वं मनश्चैकादशं संकल्पविकल्पात्मकम् । पञ्चेन्द्रियगोचरा इतीन्द्रियगोचरशब्देन यद्यपि शब्दादयो भूतगुणा उच्यन्ते, तथाऽपि महाभूतानां स्वगुणोपलब्धिद्वारेण स्वरूपोपलब्धेरिन्द्रियगोचरशब्देन स्थूलान्येव भूतान्युक्तानि । यतः षोडशः कोऽसौ ? विकारवर्ग एव च कार्यमेव न कारणम् । एवं सांख्यदर्शनप्रसिद्धा तत्त्वचतुर्विंशतिरेषा शरीरभावेन व्यवस्थिता । क्षेत्रज्ञज्ञेयत्वात्क्षेत्रमित्युक्तम् । इदानीं तु दर्शनान्तरेषु तत्तत्प्रक्रियाविशेषसमाश्रयणे यथा यथा पदार्थसंग्रहः कृतो भवति तस्य सर्वस्य प्रमेयत्वानतिक्रमादस्मत्पक्षे क्षेत्रत्वमेवेति प्रतिपादयितुमाह—इच्छेत्यादि । कैश्चिदिच्छाद्वेषसुखदुःखादय आत्मधर्मत्वेनाभ्युपगतास्ते वेद्यत्वात्क्षेत्रमेव । तथा शरीरेन्द्रियादिसमुदायसंघातः । चेतना, चेत्यतेऽनयेति कृत्वा, ज्ञानं बुद्धिवृत्तिः, धृतिः प्राणादिधारणानिबन्धनमहंप्रत्ययः । एतत्सर्वं वेद्यत्वानतिक्रमात्क्षेत्रमेवेत्यस्य श्लोकार्धस्य तात्पर्यम् । अत्र तु प्रमात्रैकस्वभावस्याऽऽत्मनः कथं प्रमेयत्वं, कथं च सर्वव्यवहारानुपपत्तिसिद्धानुसंधातृलक्षणस्वरूपस्य तस्य[1] सद्भावः, कथं वा देशकालाद्यनवच्छिन्नमहिम्नो यावज्जिविभावित्वमित्यादिनानाप्रवादप्रतिक्षेपाय बहवोऽपि विपश्चितः कृतपरिश्रमाः । सा च तत्त्वस्य साध्यमानावस्था संदिग्धबुद्धिदशानुत्तीर्णपुरुषविशेषविषयतयाऽस्यां सिद्धान्तकथायामीश्वरानुग्रहाविर्भूतविशुद्धश्रद्धादिगुणपिशुनितसंशयादिदोषाभावनिर्मलप्रज्ञोपदेश्यपुरुषविशेषविषयायामुपन्यस्तायामतिकालुष्यादृते न कंचित्प्रयोजनम् । न हि स्वसिद्धं सुरसमाहारविशेषमास्वादयन्तं पुरुषं प्रति तत्साधनावस्थाप्रतिपादनेन प्रस्तुताहारवैरस्य जननमात्रातिरिक्तः कश्चिदुपकारः संभवतीत्यकाण्डपाण्डित्यप्रकटनताण्डवाडम्बरविडम्बितात्मनां मार्गोऽनुमन्तव्यः । तदेवं यथोपक्रान्तक्षेत्रलक्षणं तावन्निर्णीतम् । इदानीं स च यो यत्स्वभावश्चेत्युपक्रान्तक्षेत्रज्ञलक्षणं निर्णेतव्यतया विशिष्यते । स च 'क्षेत्रज्ञं चापि मां विद्धि' इति मुख्य एवैकः क्षेत्रज्ञो विवक्षितः । तस्य ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना वितत्य लक्षणं वक्ष्यति ॥

संप्रति तु तादृशस्य क्षेत्रज्ञस्योक्तस्य च क्षेत्रस्य च यज्ज्ञानं सम्यक्संवेदनं मु-

१ राशा १–उक्ता. २ राशा १–कथं वा. ३ राशा १–तस्यासंभवः.

ख्यज्ञानतया प्राक्प्रतिपादितं, यादृग्गुणद्वारेणाभिव्यज्यते सोऽभिव्यक्तिहेतुर्गुणगण एव ज्ञानमिति प्रतिपादयितुमाह ।

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

[शां. पा. १-[१]नित्यत्वं.]

संघर्षादिदोषप्रयुक्तस्य[१] प्रसिद्धपुरुषान्तरानुष्ठीयमानसदाचारानुकरणे संकल्पो मान इत्युच्यते । स चानुष्ठितस्यापि सदाचारमात्रस्य संसारश्वभ्रपातफलतामावहन्नासुरसर्गभाग्जनविषयो[२] महान्दोषः । तथा चोक्तम् ।

मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ।
चत्वार्येतान्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ॥ इति ।

चत्वार्यग्निहोत्रादीनि वस्तून्याश्रमधर्मरूपाणि शास्त्रचोदितत्वादनुष्ठीयमानान्यभयं तावत्कुर्वन्ति । मानादिदोषदूषितचित्तत्वेन कृतानि प्रत्युत महद्भयमनुष्ठातुः फलन्त्यपीति ह्यस्य श्लोकस्यार्थः । एवंविधो मानो विद्यते यस्य स मानी, तस्य भावो मानित्वम् । तदभावोऽमानित्वम् । शुद्धसंकल्पत्वं नाम गुणो ज्ञानादिव्यक्तिहेतुत्वाज्ज्ञानमित्युक्तम् । एवमेवादम्भित्वम् । दम्भो हि मानादिदोषदूषितसंकल्पत्वे सति दृष्टमात्रफलतया सदाचारानुष्ठानम् । व्याजेन धर्माचरणमित्यर्थः । स विद्यते यस्यासौ दम्भी मिथ्याचारस्तस्य भावो दम्भित्वम् । तदभावोऽदम्भित्वम् । सम्यक्क्रियानुष्ठानमित्यर्थः। तदपि पूर्ववज्ज्ञानमेव । तथा हिंसा नाम शास्त्रीयनियमनैरपेक्ष्येण द्वेषलौल्यादियुक्तस्य प्राणिनां जिघांसा । तदभावोऽहिं-

१ राशा १-°प्रसक्तस्य. २ राना १-°मार्गभाग्.

सा, निसर्गतः सर्वभूतेषु करुणार्द्रचित्तत्वादनभिद्रोहः, तदपि ज्ञानम् । तथा क्षान्तिः, परैरभिद्रुह्यमानस्य, सत्यपि प्रतीकारसामर्थ्ये, स्वभावतः प्रशान्तचित्तत्वाद्वाङ्मनःकर्मभिरविकारित्वम् । सोऽपि ज्ञानम् । नन्वहिंसाक्षान्त्योर्यदि ज्ञानत्वं तत्कथं तत्त्वज्ञानोपदेशविषयत्वेन परिगृहीतस्यार्जुनस्य यज्ञसंग्रामादिक्रियानुष्ठाने नियुज्यमानस्य तद्गता हिंसाऽक्षान्तिश्चानुष्ठेयत्वेनोपादिष्टा ? उच्यते । यथोक्तज्ञाननिष्ठस्यावश्यानुष्ठेयस्वकर्मभावेनावस्थिता हिंसाऽक्षान्तिश्च हिंसैव न भवति, न चाक्षान्तिरित्युक्तमेव प्राक् । आर्जवमृजुत्वं, यथा हृदयं वाङ्मनःप्रवृत्तिहेतुरकुटिलता । यदेवं प्रशंसन्ति, सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदमिति, तदपि ज्ञानम् । एवं पञ्चैते धर्माः परमेश्वरानुग्रहसूचकदैवसर्गभाजो नान्यस्य प्रक्षीयमाणसदसत्कर्मसंतानस्य संसारस्वरूपप्रत्यवेक्षायोग्यप्रज्ञस्य सहसैव जायन्ते । ते च तद्धृदयकृतप्रतिष्ठस्य ज्ञानतरोर्मूलसंततिस्थापनीयाः । तद्युक्तस्य पुरुषस्यानुग्रहशक्त्या कल्याणमित्रसंस्तवादिना प्रेर्यमाणस्याऽऽचार्योपासनं, सद्गुर्वाराधनं नाम धर्मो य उत्पद्यते स ज्ञानं, ज्ञानतरोः किलासौ स्कन्दः स्थापनीयः । अस्य धर्मस्य षडान्तरीयकाः शाखाः प्रतानकल्पाः । अमी धर्माः प्रादुर्भवन्ति । तद्यथाशास्त्रादिधर्मपुरःसरः संस्कारविशेषस्तथा हेयोपादेयवस्तुविषयो विवेको विज्ञाततत्त्वरूपस्य हेयापवर्जनपूर्वमुपादेयानुष्ठानोन्मुखत्वम् । आचार्योपासनादेवंविधधर्मोदये सति पल्लवपुष्पस्थानीयाः शौचादयो जन्मादिदोषदर्शनपर्यन्ता धर्मविशेषाः समुन्मिषन्ति । तत्र विशिष्टक्रियानुष्ठाने प्राप्ताधिकारस्य कल्याणहेतुषु तासु तासु क्रियास्वासक्तचित्तस्य तद्गुणैः संबध्यमानस्य प्रथमः शौचं नाम गुणः सर्वक्रियाणां तत्पूर्वकत्वाच्च । तच्च द्विप्रकारं बाह्यमाभ्यन्तरं च । तत्र बाह्यमधिकारिदेशकालाद्यवस्थापेक्षया नियतेतिकर्तव्यतया मृज्जलादिना दृष्टद्रव्यगन्धलेपाद्युपासनपर्यन्ता मृजा । आभ्यन्तरं बाह्यनिवृत्तौ सत्यां शुद्धोऽस्मीति निर्विप्लवा प्रतिपत्तिः । यां भावशुद्धिमित्याहुः । एतच्च शौचं वाङ्मनोनिर्वर्त्यानां तपःस्वाध्यायध्यानादीनां गुणान्तराणामुपलक्षणं वेदितव्यम् । अथ स्थैर्यं संशयादिदोषनिवृत्त्यानुष्ठेयेष्वर्थेष्वचञ्चलता । तस्मिंश्च सत्यात्मविनिग्रहः । आत्मनोऽन्तःकरणस्य निषिद्धाद्विषयाद्विनिग्रहो नियमनम् । ततश्चेन्द्रियार्थेषु विषयेषु दृष्टानुश्रविकेषु क्षयातिशयादिदोषदर्शनाद्वैराग्यं रागदोषरहितत्वम् । तत्प्रकर्षमासादयन्सत्त्वान्तरेषु गुणेष्वपि पर्यवस्यति । तस्मिंश्च तादृशे

---

१ राशा १–साऽपि हि. २ राशा १–°र्षसमासादनात्.

गुणे सत्यनहंकार ईदृशोऽस्मीति दुरभिमानाभावः। यदि वा शरीरादावहमस्मीति प्रत्ययनिवृत्तिः। ततश्च जन्मादिदोषप्रभवस्यैव दुःखस्य महादोषस्यानुदर्शनं पृष्ठतोऽनुरूपणम्। तद्यथा–गर्भवासादिनिरतिशयक्लेशानुभवादिकं जन्मनो दुःखं प्राप्तशरीरग्रहस्यावश्यभावि मरणदुःखम्। तथा सति शरीरे रोगादिदुःखमिति शरीरत्वं नामाऽऽदिमध्यान्तावस्थासु दुःखमयमेवेति विवेकहर्म्याधिरूढः स्वपरविषयत्वेन विवेक्तुं क्षमः। यथोक्तं, 'प्रज्ञाप्रासादमारुह्य अशोच्यः शोच्यते जनान्। भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति'॥ इति। तथाविधस्य च स्वर्गादिफलेषु क्रियाविशेषेष्वसक्तिरसङ्ग औदासीन्यम्। तथा दृष्टसुखहेतुषु सुतकलत्रभवनादिष्वनभिष्वंगः सर्वस्वग्रहपरित्यागः। एतां च दशां प्राप्तस्येष्टानिष्टोपपत्तिषु प्रियाप्रियपदार्थप्राप्तिषु सतीषु समचित्तत्वं हर्षशोकादिविकाररहितान्तःकरणत्वमेव। तस्याज्ञानतरोर्नानाविधपल्लवपुष्पस्थानीयायां गुणसामग्र्यां निवृत्तायां फलस्थानीया मयि भक्तिरूपा। सा कीदृशी? अव्यभिचारिणी, निरपाया। केन हेतुना? अनन्येन योगेनान्येन यथा प्रतिपादितमत्स्वरूपव्यतिरिक्तेन वस्तुना योगः संबन्धोऽन्ययोगस्तदभावोऽनन्ययोगस्तेन। किमुक्तं भवति। सर्वभावानां मत्स्वरूपाव्यतिरिक्तं तत्त्वदर्शनं ज्ञानतरोः फलभूता मुख्या मद्भक्तिः। सा हि चतुर्थी ज्ञानिस्वरूपा भक्त्यवस्था। यथोक्तं प्राक्–'ज्ञानी त्वात्मैव मे मतम्' इति। तस्यां च सत्यां विविक्तदेशसेवित्वम्। विविक्तदेशस्य तादृशनिरुत्तरभक्तिरसामृतास्वादविघ्नकारिचेतनाचेतनवस्तुराहितस्य गिरिगुहापुण्यसरित्पुलिनगुप्तगृहादिदेशसेवित्वं भजनशीलता। तद्विपरीतायां जनसंसदि चित्तव्युत्थानहेतुलोकसभायामरतिरुद्वेगः। तत्परिहरणमित्यर्थः। तथाऽध्यात्मज्ञाननित्यत्वम्, अध्यात्ममात्मनि यज्ज्ञानं परमात्मस्वभावसंवेदनं तन्नित्यमव्यभिचारि यस्य स तथा, तस्य भावस्तत्त्वम्। तस्मिंश्च सति तत्त्वज्ञानार्थदर्शनम्, तत्त्वस्य परमात्मस्वरूपलक्षणस्य परस्य भावस्य ज्ञानं बोधः, स्वसंवेदनानुभवः। पूर्वेण पदेन ज्ञानस्य सिद्धिं कल्पते, उत्तरेण सिद्धित्वमेव प्रतिपादितम्। स एवार्थः प्रयोजनं फलं यस्य दर्शनं साक्षात्कारो निरुत्तरसिद्धिरित्यर्थः। एते विविक्तदेशसेवित्वादयस्तत्त्वज्ञानार्थदर्शनान्ता धर्माः फलभूताया भक्ते रसस्थानीयाः। इत्येतावती गुणसामग्री ज्ञानमित्यर्थः। स्पष्टोऽर्थः। अथोक्ताद् गुणसमूहादन्यथा विपरीतेन प्रकारेण मानित्वदम्भित्वादिना यत्स्थितं तत्सर्वम-

ज्ञानं ज्ञानविपरीतं वेदितव्यम् । एतच्च पुरस्ताद्दैवासुरसर्गकथने प्रसङ्गेन पुनरपि ज्ञानाज्ञानलक्षणं वक्ष्यन्ति ॥

एवंविधेन च ज्ञानेन,

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**

ज्ञेयं ज्ञातव्यम् । यथोक्तेन ज्ञानेन फलतयाऽवासितं परमात्मलक्षणं वस्तु । तदिदानीं प्रवक्ष्यामि, तत्स्वरूपेण प्रकर्षेण कथयिष्यामि। यद् बुद्ध्वाऽमृतमविनाशि स्वरूपमश्नुते व्याप्नोति। नन्वन्यसंवेद्यस्य सर्वस्य वेदकस्वभावस्य कथमिदंतावसेयवस्त्वन्तरवज्ज्ञेयत्वेन व्यपदेशः कृतः । सत्यम् । न तस्य वस्तुनः परमार्थतो ज्ञेयता संभवति । किंत्वारुरुक्षावस्थायां ज्ञातृज्ञानज्ञेयविभागात्मकत्वादुपचारेण ज्ञेयशब्दस्तत्र प्रवर्तते, न तु वास्तवेन रूपेण तस्य ज्ञेयता विवक्षिता । यतः सोऽयमहमिति स्वात्मत्वेन प्रत्यवमर्श एव तस्य ज्ञानम् । तद्वदहमिदं वेद्मीति व्यतिरेकेण तस्यैकस्यानुभवितृमात्रलक्षणस्य तत्त्वस्यावगमः संभवति ॥

तथाविधान्येव तद्विशेषणान्याह ।

**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**
**सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**
**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**
**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥**
**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**
**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥**

[ ( राशा १–न सन्नासत्तदुच्यते ). शां. पा. २–°पादं तत्. ३–धिष्ठितम्. ]

किं तज्ज्ञेयसंज्ञमिति निर्दिशति—परं ब्रह्मेति । परमार्थतः सर्वस्य वस्तुनो ब्रह्मरूपत्वे स्थिते यज्ज्ञेयतया संप्रत्याभासते तदपरं यत्तज्ज्ञातृमात्रस्वरूपं तत्प-

रब्रह्मेत्युक्तम् । कीदृशं तदनादिमत् । इदं वेद्यं वस्तु सर्वक्षेत्रज्ञसाधारणं पृथिव्यादिरूपं विषयतया व्यवस्थितम् । तथा प्रतिक्षेत्रज्ञं शरीरतया व्यवस्थितमुभयरूपतया प्राक्प्रतिपादितम् । कारणापेक्षतया सर्वमादिमदागमापायधर्मकत्वादादिकोटचवच्छिन्नं तच्चान्तकोटचवच्छिन्नमपि तद्विपरीतं, तत्तत्कारणान्तरनिरपेक्षसद्भावमनादिमत्परं ब्रह्मेत्युक्तम् । अन्यच्च कीदृशम्? सदिह हि यदिन्द्रियैर्बाह्याभ्यन्तरैरिदमिति गृह्यते तन्मायीयैः प्रमातृभिः सदिति प्रतिपद्यते । ब्रह्मत्वमात्रैकस्वभावत्वात्सर्वेन्द्रियगोचरभूतं तथा सन्न भवति । न चैवमसत्तदुच्यते । यत एवमपि सत्त्वेन प्रतिपन्नस्य सर्वस्य वस्तुनस्तथावभासकत्वात्तदेव सद्भावकारणं कथमसदिति वक्तुं शक्यम् । अत एव तस्य परमार्थसदेकप्रमातृरूपस्य विश्वरूपत्वं प्रतिपादयितुमाह—सर्वतःपाणिपादान्तमिति । आदिना सर्वेषां क्षेत्रज्ञानां यानि पदादीनि कर्मेन्द्रियाणि, चक्षुःश्रोत्रादीनि बुद्धीन्द्रियाणि तत्तत्क्रियासाधनत्वेन व्यवस्थितानि, तान्यसाधारणकर्तृज्ञातृशक्तेरेकस्यैव तस्यैव विश्वात्मनः शक्तिभेद इति तात्पर्यम् । यत आह—सर्वमावृत्य तिष्ठतीति । एकमेव तत्त्वं सर्वमिदं जगत्कर्तृज्ञातृतया व्याप्यतया वर्तत इत्यत एवाऽऽह—सर्वेन्द्रियगुणाभासमिति । यानि नानाक्षेत्रसंबद्धत्वेनावभासमानानि सर्वाणि बाह्याभ्यन्तराणीन्द्रियाणि, तेषां शब्दादिविषयावभासत्वादयो ये गुणधर्मास्तानवभासयति प्रकाशयति । यत्तु तथोक्तं स्वयं तु सर्वेन्द्रियविवर्जितम् । न हि तस्य मायावभासितावच्छिन्नस्वरूपक्षेत्रज्ञवान्नियतेन्द्रियाधीनं ज्ञानमित्यर्थः । तथाऽसक्तं विशुद्धचिन्मात्रैकस्वभावव्यवस्थितत्वाद्वेद्यरूपेण प्राकृतेन प्रपञ्चेन मिश्रीभूतम् । अथ च सर्वत्रभृत्, सर्वं बिभर्ति धारयति यत्तत्र हि तत्त्ववेद्यव्यतिरिक्तस्वभावेऽपि सर्वमिदमवस्थितम् । तद्विना कस्यचिदपि स्वरूपलाभाभावात् । अत एव निर्गुणं, गुणेभ्यः सत्त्वादिभ्यः प्रकाशप्रवृत्तिनियमात्मकेभ्यः सुखदुःखमोहवृत्तिभ्यो निष्क्रान्तम्, तेभ्योऽत्यन्तव्यतिरिक्तस्वरूपम् । न हि ब्रह्मानित्यसुखाद्यात्मकं भवति । केवलमाकाशमिव सूर्यातपरजस्तिमिरादिभिस्तैस्तैर्गुणैरत्यन्तासंस्पृष्टस्वरूपमपि तत्त्वविचारशून्यैः प्रमातृभिस्तद्वत्तया गृह्यते । वस्तुतस्तु गुणभोक्तृत्वाद्गुणाननुभवितृतया भुङ्क्ते, न तु तैस्तत्तत्स्वरूपमाश्रीयते । अत एवानवच्छिन्ननिजमाहात्म्यविश्वत्वाकाशमिव घटादीनां सर्वभूतानां चराचराणां बहिर्ज्ञेयभावेनान्तर्ज्ञातृभावेन चावभासमानमपि परमार्थतः सामान्यसंवित्स्वभावमेवैकं

१ राना १—°रूपं प्रति°—. २ राशा २—आध्रियते. ना १—°द्रि°.

तत्तत्त्वं व्यवस्थितम् । देहादिप्रत्ययव्यवधानमात्रकृतो बाह्याभ्यन्तरव्यपदेशः । अत एवाऽऽह, नित्यनिश्चलस्वभावमात्रप्रतिष्ठितत्वादचरं गतिधर्मविवर्जितम् । सर्ववस्तुवेदकतया नित्यप्रसृतिशक्तित्वाच्चरं गमनशीलमिव । तथेदंतावसेयसर्ववस्तुविलक्षणस्वरूपत्वात्परमसूक्ष्मम् । तत्तस्माच्च सौक्ष्म्यात्कारणाद् विज्ञेयमिदमित्यनवधार्यस्वरूपम् । अत एव सर्वप्रमातॄणां ज्ञेयत्वाभावाद् दूरस्थमतिविप्रकृष्टम् । अथ च तद्विना कस्यचिदपि ज्ञानस्य कर्मणो वाऽप्यनुपपत्तेः सर्वेषामन्तिकेऽभ्याशे स्थितम् । तथा विभक्तेषु देवमनुष्यतिर्यगादिषु यत्परस्परभिन्नेषु वस्तुषु सामान्यसंविदात्मकत्वेनाविभक्तमभिन्नैकस्वरूपम् । अथ च विभक्तवच्च स्थितम् । भेदेनावभासमानत्वात् । तथा तत्तत्त्वं भूतभर्तृ सर्वभूतानां तस्य रूपस्यावस्थित्येकहेतुत्वाद्धारकम् । तथा ग्रसिष्णु संहारशक्तियुक्तत्वाद् ग्रसनशीलम् । तथा प्रभविष्णूत्पादनहेतुत्वात् । स्थितिप्रलयसर्गकारणमित्यर्थः । तथा ज्योतिषां सात्त्विकसौरादीनां प्रकाशकानां प्रकाशहेतुत्वाज्ज्योतिः प्रकाशकम् । तानि हि जगद्भावप्रकाशकान्यपि संवित्प्रकाशप्रकाश्यानि । अत एव तमसः परमुच्यते । यद्यत्परप्रकाश्यं तत्तत्स्वयमप्रकाशात्मकत्वात्तमोरूपम् । तस्मात्तत्त्वं परं सर्वप्रकाशैकरूपत्वात्प्रकृष्टं व्यतिरिक्तं वा । तथा ज्ञानज्ञेयं ज्ञानेन यथाप्रतिपादितस्वरूपेणोपायेन ज्ञेयमात्मतया प्रत्यभिज्ञेयमित्यर्थः । यतो ज्ञानगम्यं ज्ञानं विना तथा विषयीकर्तुमशक्यम् । परमार्थतस्तु सर्वस्य कस्यचित्प्रमातुर्हृदि हृदये संवेद्यतया विशेषेण स्थितम् ॥

सिद्ध्यवस्थायां तथा स्वसंवेदनसंवेद्यत्वादुपसंहरति,

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

इत्येतावता ग्रन्थेन क्षेत्रं महाभूतानीत्यादिना कृतभावमयं शरीरं, तथाऽमानित्वादितत्त्वदर्शनान्तरूपं धर्मज्ञानं, तथा क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेष्वित्यादिना मुख्यक्षेत्रज्ञरूपं ज्ञेयं तत्तत्त्वमिति प्रधानम् । पदार्थत्रयमेतदुक्तम् । यतो मद्भक्तो मदनुग्रहादेव मत्सपर्यापर एतत्त्रितयं ज्ञात्वा मद्भावाय मत्स्वरूपाय मत्स्वरूपसमापत्तय उपपद्यते, उपपन्नः समर्थो भवति ।

---

१ राशा २ (प्रान्ते) ना–°निर्मल°. २ राना १–' अभ्याशे ' इत्यत्र ' त्यागे '. ३ राशा १–' सात्त्विक ' नास्ति. ४ राशा १–संवेद्य°.

अथ यदेतदत्र ज्ञानमुपादिष्टं तेन प्रकृतिक्षेत्रज्ञपरमात्मलक्षणं पदार्थत्रयं निर्णीतमिति संग्रहेण क्रमेण प्रदर्शयितुमाह ।

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥**

येषा प्रकृतिः सप्तमे विषयभावेन संप्रति शरीरभावेन विभज्य प्रतिपादितस्वरूपा, तथैव यः पुरुषो विषयत्वेन शरीरित्वेन प्रतिपादित एतावेवान्योन्यसंबन्धत्वेनानादी विद्धि जानीहि । न ह्येतयोरेव संबन्धस्य पूर्वकोटिरुपलभ्यते । ज्ञानात्तु यथोक्तस्वरूपादन्तकोटिरस्त्येव । अनयोरेवमनादित्वं संबन्धस्येत्यत्र तात्पर्यम् । न तु समशीर्षिकया नित्यत्वप्रतिपादनम् । यतः प्रकृतेर्वेद्यत्वादुदयव्ययधर्मयोगित्वे सति प्रवाहनित्यत्वम् । पुरुषस्य तु परमार्थतः संविद्रूपत्वात्कूटस्थनित्यत्वम् । अत एवाऽऽह—विकारान्महदादीन्गुणांश्च सत्त्वादीन्वेद्यैकस्वभावान्प्रकृतिस्वभावान्प्रधानकारणाञ्जानीहि ॥

एवं सामान्येन प्रकृतिपुरुषयोः स्वरूपं प्रतिपाद्येदानीं यथा प्रकृतिः पुरुषं नानाशरीरभावेन संबद्धा, पुरुषश्च प्रकृतिशरीरं क्षेत्रज्ञभावेन यथा संबद्धस्तथा प्रतिपादयितुमाह,

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

कार्यं महाभूताद्यात्मकं, करणानि बाह्याभ्यन्तराणीन्द्रियाणीति शरीराद्यात्मकः समूहः कार्यकारणशब्देनोच्यते । तस्य कर्तृत्वे तावन्मात्रे निविष्टाहंप्रत्ययरूपे प्रकृतिरव्यक्तं हेतुः कारणम् । सा हि शरीरात्मना व्यवस्थिता सती तन्निविष्टाहंप्रत्ययनिमित्तम् । तथा सुखादीनां वेद्यत्वाद्भोग्यानामात्मनो यो भोक्तृत्वाभिमानस्तत्र वेदकस्वभावत्त्वात्पुरुष एव कारणम् । सति पुरुषप्रत्यये सुखदुःखात्मनो भोग्यस्य विषयत्वम्, पुरुषस्य च विषयित्वव्यपदेशः ॥

कुतः,

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

यस्मात्प्रकृतौ नानाकार्यकारणात्मकशरीरभावेन परिणते प्रधाने स्थितो माया-

---

१ राना १–परमार्थल°. २ राना १–सप्तमी. ३ राशा १–°संवेत्तृ°. ४ राना १–°रुपा°. ५ राना १–' यथा ' नास्ति. ६ राना १–वेयक°.

ात्तावन्मात्राहंकारावष्टम्भो वर्तमानः प्रकृतेः समुद्भूतान् गुणान्सत्त्वादीन् वाद्यात्मना परिणतान्भुङ्क्ते, वेदकत्वेन विषयीकरोति । यतः महाभूतगुणाः श-दयः सुखाद्यात्मना वेद्यत्वमापन्नाः पुरुषस्य विषयत्वव्यपदेशहेतवः । एवं शरीर-रीरिभावेन विषयविषयिभावेन च प्रकृतिपुरुषयोरविवेकजः संबन्धः । ततश्चास्य ुषस्य गुणेषु शरीरात्मना विषयात्मना च यः सङ्गोऽहंकारममकारात्मको दृढः न्धः । तत्सतीषु सत्त्वगुणप्रधानास्वसतीषु च रजस्तमःप्रधानासु योनिषूत्पत्ति-रणं हेतुः प्रकृतिपुरुषविवेकाभावमात्रनिमित्ता संसारिता पुरुषस्येत्यर्थः ॥

यतः परस्य तत्त्वस्य देहेऽस्मिन्नानापुरुषसंबन्धिनि द्विधास्थितिरित्यर्थ इत्याह,

**उपद्र्ष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥**

[ श्रा. दृष्टेषु रामकोशेषु. १–उपदेष्टा. २–कर्ता. ]

महेश्वरः सर्वपुरुषैश्वर्यापेक्षया महानत्युत्कृष्ट ईश्वरः प्रभुः परब्रह्मशब्दापरप-ायः, स्वमायोद्भावितपुरुषव्यपेक्षया देहेऽस्मिन्नुपद्रष्टा, भर्ता, अनुमन्ता, भोक्ता ति व्यवस्थितः । यतः प्रकृत्यादिमहदहंकारात्मना दृश्यत्वेनोपस्थापितमर्थं ्थः पश्यतीत्युपद्रष्टाऽसावित्युच्यते । तथा दृश्यमेव शरीराद्यहंतया परामृशन्भर्ता ार्यकरणस्याहंतया धारकः स एव व्यपदिश्यते । तथा प्रकृत्या मतं ज्ञानं वेद्य-न प्रतिपन्नं सुखादिविषयभूतं वस्तु पृष्ठतः पुरुषो मन्यत इत्यनुमन्ता स उच्यते । ाथ तस्यैव भोक्तृव्यदेशः । इत्थं सांख्यप्रक्रियया पुरुषस्य शरीरित्वविषय-ारोपो य उच्यते, तत्र विवेकाभावः कारणम् । स च मायानिबन्धनः । यदा तु ाद्योदयविवेकजज्ञानाविर्भावस्तदाऽसावेव पुरुषः परमात्मेत्यभिधीयते । प्रबन्धतो था प्रतिपादिताद्वयाचिदेकस्वभावब्रह्मस्वरूपतयोच्यते ॥

एवं प्रकृतिपुरुषेश्वरविवेकलक्षणस्य ज्ञानस्य फलमाह,

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

[ राश्रा१·२–स यथा वर्त.°–टीकायां तु 'सर्वेणापि प्रकारेण' इति वर्तमानत्वात् सर्वथा' इत्येव पाठः प्रतीयते. ]

यो योग्येवमुक्तेन प्रकारेण पुरुषं नानाक्षेत्रज्ञरूपतयाऽवस्थितं, प्रकृतिं च णैः सुखाद्यात्मकविषयभावेनावस्थितैः सह वेत्ति, स तत्त्वत्रयपरमार्थवेदि-

---

१ राशा १–°ष्टम्भेन. २ राशा २ ना १–°प्रक्रमो यथा पु°.

त्वात्सर्वेणापि प्रकारेण तत्तद्वर्णधर्मात्मकेन तत्तदाश्रमधर्मात्मकेन वा वर्तमानस्तद-नुष्ठातृतया तिष्ठन्नपि भूयः पुनर्न जायते, न संसारी भवति । यथोक्तेन ज्ञाना-ग्निना संसारप्रसवहेतूनां बीजस्थानीयानां कर्मणां दाहात् ॥

अत्र चाऽऽत्मनो दर्शने यथोक्तं ज्ञानमेव यद्यपि प्रमुखतयोपायः, तथाऽप्युपा-यान्तरैर्गौणैरप्यसौ कथंचिद्गम्यत इत्याह,

**ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**
**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

[ १–राना १–पश्यन्ति केचिदात्मना. २–राशा १·२–चैवम् . ]

केचित्सहजसिद्धितत्त्वज्ञाननिरुत्तरपरमेश्वरानुग्रहभाजो ध्यानेनाऽऽत्मानं पश्यन्ति, यथोक्तब्रह्मस्वरूपतानुस्मरणेन साक्षात्कुर्वन्ति । अत एव के क्व पश्यन्तीत्यभे-दप्रतिपादनार्थमाह–आत्मनाऽऽत्मानं पश्यन्तीति। किमुक्तं भवति । यत्राधिकरणे हृदयादौ ध्यानं कुर्वन्ति, येन चान्तःकरणेन कुर्वन्ति, यच्च तेन ध्यानेनोपलभन्ते, तत्सर्वं ब्रह्मरूपतयैव प्रत्यवमृशन्तीति तात्पर्यम् । तथा च परां काष्ठामात्म-ज्ञानस्य संप्रत्येतावतीं योग्यतामप्राप्ताः । अन्ये च सांख्येन प्रकृतिपुरुषविवेक-रूपेण ज्ञानेनाऽऽत्मानं पश्यन्ति । अन्ये योगेन पातञ्जलादिप्रणीतविधिना समा-धिना। अन्ये तु कर्मयोगेण यथोक्तनिष्ठतया स्वकर्मानुष्ठानसमाधिनाऽऽत्मानं पश्य-न्तीत्यात्मज्ञानस्य परापरभेदेन प्रकारद्वयमुपन्यस्तम् । तत्र ध्यानेनेत्यादिना शुद्ध-ज्ञानमात्रस्वरूपतयोक्तः । सा च कर्मयोगिनामारूढावस्था । यथोक्तं ' योगारू-ढस्य तस्यैव शमः कारणमुच्यते ' इति । कर्मयोगेणेति समुच्चयात्मकत्वेऽपि कर्म-प्रधाना कर्मयोगिनामारुरुक्षावस्था–आरुरुक्षोर्मुनेर्योगमित्यादिना प्राक्प्रतिपादि-तेति द्विप्रकारः, पर उपायः सांख्येन, योगेन चेत्यपरः । स्थूलप्रतिपत्तेरेवानुमा-नात् । अन्ये पुनर्द्विप्रकारेऽप्युपाये संप्रति योग्यताभावादेवं यथोक्तेन प्रकारेणाऽऽ-त्मानमजानन्तस्तावन्मात्रशुद्धादिगुणयोगादन्येभ्यो दृष्टानुमतिं तत आप्तेभ्यः श्रुत्वाऽ-वधार्याऽऽगममार्गशरणास्तमुपासते भजन्ते । तेऽपि तथाविधश्रद्धालक्षणस्य सि-

१ राना १ ( प्रान्ते )–' बीजान्यग्न्युपदग्धानि नाऽऽरोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैरात्मा संपाद्यते पुनः । स्पष्टोऽर्थः ' इत्यधिकम्. । २ राशा २ ना १–अप्राप्तो. ३ राशा १–°मानावस्थानात्.

द्विबीजस्य क्षेत्रीभूताः सन्तो मृत्युमतितरन्त्येव। अविनाशिनमात्मानं क्रमेण प्रतिपद्यन्ते। सत्यार्थाभिनिवेशित्वात्। यतः सत्यं चासत्यं द्वयमपि संभवति। विद्यानुगृहीताः सत्यमभिनिविशन्ति[1], मायामोहितास्त्वसत्यम्। ते च तादृशमेव फलं प्राप्नुवन्ति। यथा चोक्तम्,

अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्।
मृत्युमापद्यते मोहात्सत्यत्वेऽमृतमाहितम्॥ इति॥

उक्तमेवार्थं स्फुटतरं प्रतिपादयितुमध्यायपरिसमाप्तेराह,

**यावत्किंचित्संभवति सत्त्वं स्थावरजङ्गमम्।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ॥ २६॥**

[शां. पा. १–यावत्संजायते किंचित् सत्त्वं. अस्माभिरुद्धृतः पाठः राशा १·२ (प्रान्ते) दृश्यते। राना १ श्रा. नास्ति। तथाऽप्युभयटीकयोः 'संभवति' पदस्य वर्तमानत्वात्, अभि. टीकायां च 'यावत्किंचित् इति' प्रतीकदर्शनादयमेव काश्मीरीयः पाठ इति निर्णीतम्.।]

यावत्परिमाणमपरिसंख्येयं किंचित्सत्त्वं केनचिद्भेदेन युक्तं प्राणिजातं संभवति विद्यते, तत्सर्वं क्षेत्रस्य शरीरभावेन परिणतायाः प्रकृतेस्तथा क्षेत्रज्ञस्य नानाशरीरित्वाभिमानेन व्यवस्थितस्याऽऽत्मनः संयोगादनादिप्रबन्धप्रवृत्तादन्योन्यसंबन्धाद्धेतोर्विजानीहि। किमुक्तं भवति। अस्य पर्यवसानस्य नानाचराचरभावरूपस्य प्रपञ्चस्याविवेचितस्वरूपतया प्रकृतिपुरुषयोः शरीरशरीरिभावेनैकतया संबन्धो निमित्तम्॥

अतः शरीरशरीरिणोर्विवेके[2] आद्यः प्रकारो यथाप्रतिपादितस्य ज्ञानस्य। तेन शरीरभावपरिणत[3]प्रकृतिविविक्तस्वरूपे सुविज्ञात आत्मनिवेदकत्वमात्रैकलक्षणाव्यभिचारात्सर्वक्षेत्रज्ञप्रातिपत्तिभ्रमनिवृत्तेर्योगी परमात्मनः स्वा[4]भाविकैक्यदर्शनात्सम्यग्दर्शी भवतीत्याह,

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥ २७॥**

सर्वेषु जङ्गमेषु स्थावरेषु च द्विप्रकारेष्वप्यवान्तरभेदादनन्तभेदेष्वपि भूतेषु

---

१ राना १–°विशन्ते. २ राना १–विवेके. ३ राना १–°परिणति°. ४ राशा २ ना १–स्वभावैक्यैक°.

समं जन्मादिविकाररहितत्वान्निर्विशेषं कृत्वा तिष्ठन्तं परमार्थनित्यत्वात्सदा वर्तमानमीश्वरं स्वतन्त्रं परमात्मानं यो योगी पश्यति, आत्मत्वेन प्रत्यवमर्शात्साक्षात्कुरुते स पश्यति । तस्यैव सत्यार्थदर्शित्वात्पारमार्थिकं द्रष्टृत्वम् । तद्व्यतिरिक्तात्मनो नानात्वदर्शिनः सर्वे मिथ्यार्थदर्शिन इत्यर्थः । कीदृशेषु भूतेषु कीदृशं पश्यति ? विनश्यत्सु विनाशान्तजन्मादिविकारभोगिष्वविनश्यन्तम् । वेदकत्वमात्रादेकस्मात्स्वभावादप्रच्यवमानम् । स हि तथाविधो योगी समुन्मिषत्वेन यथोपवर्णितेन ज्ञानमयेन चक्षुषा प्रादुर्भावतिरोभावधर्मकर्मसकलवेद्यांशविविक्तस्वरूपं वेदकैकलक्षणं परमात्मानं सर्वावस्थास्वेकं तत्त्वमात्मत्वेन साक्षात्कुर्वन्सम्यग्दर्शन उच्यते । अन्ये तु विपरीतदर्शना इत्यर्थः ॥

स एव चाऽऽत्मवानिति तत्र हेतुत्वमाह,

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २८ ॥**

[ १–राना १–पश्यति. ]

यस्माद्यथोक्तेन प्रकारेण सर्वत्र प्राकृतभावमयवेद्यवर्गे समं सामान्यसंविद्रूपतया तुल्यं कृत्वा समवस्थितं स्वभावत एव सम्यक्कृतप्रतिष्ठमीश्वरं प्रभुं परमात्मानं पश्यन्प्रत्यभिजानन्कश्चिदेवाऽऽत्मना स्वयमेवाऽऽत्मानं सत्यस्वभावं न हिनस्ति, अप्रत्यभिज्ञानेन सन्तमेवाभावं न प्रापयति । किमुक्तं भवति । य एवं प्रतिपादितेन ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञं विविक्तं परमात्मानं न पश्यति स आत्मघातयुक्तो मुख्यया वृत्त्या । यथोक्तम्,

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा ॥ इति ॥

कश्चैवंविधं परमात्मस्वरूपं पश्यतीत्याह,

**प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २९ ॥**

[ शां. पा. १–°त्यैव च. ]

प्रकृतिश्चेतनाचेतनविभागेन परापररूपा प्राक्प्रतिपादिता द्विप्रकारा परमेश्वरेच्छावशादेव क्षेत्रक्षेत्रज्ञभावेनानादिना संबन्धेन संबद्धा सती सर्वमिदं जग-

---

१ राशा २ ना १–'विनाशान्त' नास्ति. २–राना, सामान्यनास्ति°.

च्चित्रं विरचयति । यथा च सप्तमे द्विप्रकारायाः प्रकृतेः स्वरूपं प्रतिपाद्योक्तम्—'एतद्योनीनि भूतानि सर्वाणीत्युपधारय' इत्यस्मिन्नध्याये, यावत्किंचित्संभवतीत्यादिना श्लोकेनैवैषोऽर्थोऽभिहितः। तदेवंरूपतया प्रकृत्यैव केवलया क्रियमाणानि निर्वर्त्यमानानि नानाशरीरसंबद्धत्वेनावभासमानानि कृत्स्नानि कर्माणि विविधाः क्रिया य आत्मतत्त्वदर्शी पश्यति सम्यङ् निरूपयति, स तादृशो योगी तथा तेन प्रकारेणाऽऽत्मानं ब्रह्मस्वरूपं सत्यस्वभावं सर्वदा विशुद्धचिन्मास्वत्ररूपे स्वात्मन्येव सुप्रतिष्ठं सन्तमकर्तारं परमार्थतः सर्वक्रियासु व्यापृतत्वात्स्वरूपव्यतिरिक्तकार्यनिवृत्तिप्रयत्नरहितं पश्यति । किमुक्तं भवति । यथा क्षेत्रज्ञस्य प्रकृत्यभिमानेन कर्तृत्वं, न तथा परमात्मनः । तस्य हि स्वरूपप्रत्यवमर्शमात्रे मुख्या कर्तृता । क्षेत्रज्ञकर्तृतोद्भावनेन गौणीति, योऽयं कर्तृकार्यव्यपदेशः सर्वभेदनिबन्धनो भेदश्च मायामात्रविलेसितो[1] न वस्तुसत्तामवलम्बते । तत एकस्य तत्त्वस्य व्यतिरिक्तकार्यनिबन्धनं कर्तृत्वं न वास्तवमिति तात्पर्यम् ॥

इत्थं[2] व्यवस्थिते प्रकृतिपुरुषविवेकज्ञानानन्तरं वास्तवब्रह्मलक्षणैकतत्त्वविषयं परं ज्ञानमाविर्भवतीति प्रतिपादयितुमाह ।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

तदा तस्मिन्काले योगी ब्रह्म संपद्यते, यथोक्तपरमात्मनि परमार्थसत्येकस्मिंस्तत्त्वे समापत्तिमाप्नोति । कदा ? यदा यस्मिन्काले विवेकज्ञाननैर्मल्यात्सम्यक्प्रकाशमानसर्वगतैकक्षेत्रज्ञस्वरूपो योगी भूतानां चराचराणामनन्तभेदानां पृथग्भावमन्योन्यव्यतिरिक्तत्वमेकस्थं पश्यत्येकस्मिन्परमात्मन्यभिन्नसंवित्प्रकाशमात्रे स्थितं तदात्मकत्वेनैव वर्तमानं साक्षात्करोति । किमनेनोक्तं भवति । प्रकाशपदवीजुषां सर्वभावानां प्रकाशमानतामात्राधीनात्मलाभानां[3] वास्तवीं परप्रकाशैकरूपतां तदाऽ[4]नुभवति योगी योगामित्यर्थः । यथा च सर्वमेकस्थं पश्यति तथैव यदा तत एवैकस्मात्तत्त्वाद्विस्तारं नानाभावमयं विभूतिवैतत्यं[5] पश्यति तदा ब्रह्म संपद्यते । अनेनापि किमुक्तं भवति । विवेकजज्ञाननिष्णातनिर्मलमतिर्योगी

१ राना १–°लसितं. २ राशा २–इत्थं च स्थिते. ३ राना १–लाभभावानां. ४ राशा १–यदा. ५ राना १–°भूतिचैतन्यं.

यथैकस्मिंस्तत्त्वे लीनं सर्वभेदजातं तदभिन्नं पश्यतीत्यर्थः । तथैव तदेवैकं तत्त्वं विश्वभावभेदात्मना प्रसृतं, तस्य सर्वात्मना भावनानानात्वप्रतीपत्तिभ्रमो विगलतीत्यर्थः । तथा चायमेवार्थः केनचिद्विपश्चिताऽनूदितः । यद्यत्पृथक्त्वमसंदिग्धं तत्पृथक्त्वान्न भिद्यत इति ॥

तदेवंविधस्य परमात्मनो बहुशोऽप्युक्तलक्षणं प्रसङ्गात्पुनराह,

**अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

[ १–राशा२श्रा.–निर्मलत्वात्. ]

अयं भगवान्परमात्मा परं तत्त्वं स्वभावत एव सर्वत्र सर्वदा चाव्याहतसद्भावस्ततश्च सर्वस्मिन्शरीरे तस्य स्थितिरबाधितैव । तथाऽपि च तत्रस्थोऽपि प्रतिपादितैकस्वरूपमात्रमुक्तितत्त्वान्न करोति, न भिन्नकार्यनिबन्धनं कर्तृत्वमनुभवति । ततश्च का कथा कर्मफलानुभवस्येति न लिप्यते । यस्मादनादित्वात्सर्वकारणत्वादत एव निर्गुणत्वात् । गुणेभ्य उदयव्ययधर्मकेभ्यो निष्क्रान्तत्वात्तद्विभक्तस्वभावत्वादव्ययोऽगुणवद्व्ययेन विनाशेन रहितः । यद्यप्यनादित्वमव्ययत्वं च क्षेत्रज्ञस्याप्युक्तं, तथाऽपि च तस्य गुणमय्या प्रकृत्या संबद्धस्य तत्स्वरूपानुविधायित्वात्तद्वदुदयधर्मकत्वमुपचर्यत आविद्योदयात् । परमात्मनस्तूपचारोऽपि नास्ति । अतः क्षेत्रज्ञवन्न तस्य कर्तृत्वम्, न कर्मफलसंयोगः ॥

यथा चैतस्य सर्वशरीरस्थत्वेऽपि कर्मफलसंयोगलक्षणकलङ्कसंपर्काभावस्तथोपमानेन दर्शयितुमाह,

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३२ ॥**

यथा सौक्ष्म्यादणीयस्त्वात्सर्वगतं समस्तवस्तुव्यापकदेशकालाद्यनवच्छिन्नमाहात्म्यमाकाशमविच्छिन्नैर्व्याप्यैर्भावैर्न लिप्यते, स्वधर्मेण न संयुज्यते, तथैव सर्वत्र सर्वस्मिन्सुरनरतिर्यगाद्यनन्तभेदेऽपि देहे शरीरे व्यापकतयाऽवस्थितो नित्यसंनिहितोऽप्ययं परमात्मा तद्धर्मैः सुखदुःखादिभिरुत्पत्तिविनाशादिभिर्वा कर्मफल-

१ राना १–तत्स्थोऽपि. २ राना १–°स्थस्यापि. ३ राना १–°भावतयोप°.

संबन्धित्वाभिमानजन्मभिर्नोपलिप्यते न संस्पृश्यते । तथा चोक्तं ब्रह्मविदा केनचित् ।

यथैकस्मिन्घटाकाशे रजोधूमादिभिर्वृते ।
संयुज्यते न सर्वाणि तथा जीवः सुखादिभिः ॥ इति ॥

एवं सर्वात्मना कर्मफलसंपर्काभावेऽप्यनन्यसाधारणप्रकाशकत्वधर्मयोगात्स एवैकः क्षेत्रक्षेत्रज्ञव्यवहारप्रकाशक इत्युपमानान्तरेण दर्शयितुमाह,

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

यथा येन प्रकारेणायं सर्वलोकप्रत्यक्षपरिदृश्यस्वभावो भगवान्भास्करः कृत्स्नमखिलं लोकं नानाभावमयं विश्वमेक एवासहायः प्रकाशयति स्वस्वरूपं लम्भयति, तेनैव प्रकारेणायं क्षेत्री क्षेत्रव्यापक एकः प्रकाशयतीति । किमुक्तं भवति । प्रकाशवस्तुनानात्वात्प्रकाशस्य परमात्मधर्मस्य यदि परं नानात्वोपचारः परमार्थतस्त्वेक एव सकलवस्तुप्रकाश्यवस्तुप्रकाशकः प्रकाशकत्वमात्रे चोपमानोपमेयभावो रविक्षेत्रिणोर्यथा हि रविर्भावानां प्रकाशको न[1] तथा च क्षेत्री । तथा हि—कुतश्चित्कारणाल्लब्धात्मनां घटपटादीनामर्थानामभिव्यञ्जकत्वमात्रेण रविः प्रकाशको न जनकत्वेन । क्षेत्री तु प्रकाश्यत्वापादनेनैव ताञ्जनयत्यतो जनकत्वं तस्येति प्राक्प्रतिपादितमेव ॥

तदित्थंरूपमध्यायेन क्षेत्रक्षेत्रज्ञपरमात्मलक्षणं तत्त्वत्रयनिर्णयमुपसंहरन्नाह,

**क्षेत्रक्षेत्रयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

## इति श्रीभगवद्गीतासूपनिषत्सु त्रयोदशोऽध्यायः ॥ १३ ॥

ये योगिन एवमुक्तप्रकारेण क्षेत्रस्य शरीरभावेन परिणताया अपरायाः प्रकृतेस्तथा क्षेत्रज्ञस्य नानाक्षेत्राहंकारावष्टम्भेनावस्थिताया जीवरूपायाः परायाः प्रकृतेरनन्तरं विशेषं परस्परविविक्तं स्वरूपं विदुर्जानते । केन ? अमानित्वादिना तत्त्वदर्शनपर्यन्तेन ज्ञानेनैव चक्षुषा । न केवलं तयोरन्तरं जानते, यावद्भूतप्रकृतिमोक्षं च ये जानते । भूतात्मिका चेयं प्रकृतिः स्थूलादिनिर्दिष्टा ।

---

१ राना_१–' न ' नास्ति.

ततो मोक्षं पुनस्तत्र प्रवेशाभावादात्यन्तिकं बन्धत्यागं ये विदन्ति। किमुक्तं भवति। क्षेत्रक्षेत्रज्ञयोः परस्परविविक्तस्वरूपावगममात्रमागमोपपत्तिपरिशीलनद्वारेण कदाचित्संभवति न तु तावता प्रकृतेर्मोक्षः प्रभवति। स हि तद्विभक्तात्मस्वरूपनित्यावहितत्वेनैव भवति। ततः पृथगुक्तं, भूतप्रकृतिमोक्षं चेति। त एवंविधाः परं निरुत्तरं तत्त्वं सप्तमे परतरप्रकृतित्वेन प्रतिपादितपरमात्मानं यान्ति प्रपद्यन्ते, तदभेदलक्षणां परां सिद्धिमधिगच्छन्तीत्योम्॥

भविभिरखिलैर्नित्यं तापत्रयीपरिशोषिता-
त्परमविरसात्क्षेत्राद्भोगी यतः किल भुज्यते।
चिदमृतघनात्तद्वोऽध्यायात्त्रयोदशतः स्रुते-
र्वचनपृषतैः सिक्तं सुतां विमुक्तिफलश्रियम्॥

इति श्रीमद्राजनकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि गीताविवरणे त्रयोदशोऽध्यायः॥ १३॥

## ॥ अथ चतुर्दशोऽध्यायः॥

त्रयोदशाध्यायपरिसमाप्तौ भूतप्रकृतिमोक्षं च ये विदुरिति यदुक्तं तत्र भूतादिविकारभावमापन्ना प्रकृतिः किल भूतप्रकृतिशब्देनोक्ता। ततश्च तस्याः कारणभूतं प्रकृत्यात्मकं तत्त्वमस्तीत्युपगतं भवति। तदभ्युपगमे च परब्रह्माद्वैतसिद्धान्तता शास्त्रस्य विरुध्यते। इह हि नित्यैकचित्प्रकाशात्मकस्वभावपरामर्शप्रभवपरानन्दलक्षणं तत्तादृक्स्वभावसुव्यवस्थितमात्मतत्त्वं परब्रह्मशब्दाभिधेयमेकमेव परामार्थसत्त्वेनाऽऽगमोपपत्त्युपलब्ध्यविसंवादि सिद्धं प्रबन्धतः प्रतिपादितम्, यस्यानादिमत्परं ब्रह्मेत्यादिना लक्षणं कृतम्। ततश्च प्रकृतिर्नाम द्वितीयं तत्त्वमस्ति तेन कथं सिध्यति, किंवा तस्य स्वरूपं, कीदृशो वा परब्रह्मस्वरूपेण तत्त्वेन तस्य संबन्ध इति येन ज्ञायते तथाभूतप्रकृतिर्द्विविधोक्ता, शरीरात्मना विषयात्मना च। ततः कथमात्मनो मोक्षः? किमत्यन्त—परिहरेणान्यथा वा। तत्राऽऽद्यपरिहारस्तावदिह नाभ्युपगतः। तथा चोक्तम्,

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥

तथा—इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥ इत्यादि ।

अनेन शरीरभावपरिणतायाः प्रकृतेरत्यन्तपरिहारेण मोक्षोऽभ्युपगतः । तथा विषयभावेन परिणताया अपि नात्यन्तपरिहारोऽभिमतः । यदुक्तम्,

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥

तथा— सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥

इत्यादि च । एवं कथं विषयरूपायाः प्रकृतेर्मोक्ष इति येन ज्ञायते तमुभयार्थविषयज्ञानं सूक्ष्मत्वात्प्रकृष्टम् । तत्र तत्र प्रागुक्तमपि पुनर्वक्तुं प्रतिजानंस्तथा प्रशंसापूर्वम् ।

श्रीभगवानुवाच ।

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

उक्तेन रूपेण परं प्रकृष्टं भूयः पुनर्बहुतरं वा ज्ञानानां क्षेत्रज्ञादिविषयाणां मध्य उत्तमं प्रधानं ज्ञानं प्रकर्षेण कथयिष्यामि । वक्ष्यमाणेन ज्ञानेन पूर्वोक्तानां ज्ञानानां सम्यक्प्रतिपत्तिर्भविष्यतीति तेषां मध्ये तस्योत्तमत्वम् । अत एवाऽऽह—यद्विदित्वा पूर्वे मुनयः संयमिनः सर्व एव परां सिद्धिं परमाप्तिलक्षणां प्रकृष्टां फलनिष्पत्तिमितः संसारात्प्राप्ताः ॥

यतोऽस्य ज्ञानस्यायं प्रभावः ।

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

इदं वक्ष्यमाणं[1] ज्ञानमुपाश्रित्य[2] सुगृहीतं कृत्वाऽन्येऽपि योगिनो मम साधर्म्यं मद्भावाभेदं प्राप्ताः सन्त एतज्ज्ञानशून्यक्षेत्रज्ञान्तरवत्सर्गप्रलययोरपि नोत्पादविनाशव्यपदेश[3]भाजो भवन्ति, पारमार्थिकनित्यत्वाभिव्यक्तेः ॥

अथैतज्ज्ञानं वक्तुमाह,

---

१ राना १–' वक्ष्यमाणं ' नास्ति. २–१ राशा १–ज्ञानमाश्रित्य. ३ राना १–' व्यपदेश ' नास्ति.

**मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

[ १–राशा १·२ ना १ काश्मीरपुस्तकेषु 'धा' स्थाने 'दा' इत्येव दृश्यते ].

यदेतद्भूतप्रकृतिकारणभावेन व्यवस्थितं तत्त्वं परब्रह्मणो भिन्नत्वेनाऽऽशङ्कितं, तत्तस्मात्परमार्थतो न भिन्नम् । ब्रह्मैव तत् । किंतु महत् , तदपेक्षया स्थूलम् । यतो वेद्यतया परामृश्यमानं मम परब्रह्मस्वरूपस्य जगद्भावक्रीडनकोत्पादनाधिकरणाद्योनिः । तत्तस्मिन्परमार्थतो हि योनिभूते महति ब्रह्मण्यहं गर्भं दधामि संविल्लक्षणस्ववीर्यसंक्रान्तिं करोमीत्यर्थः । किमनेनोक्तं भवति । यथोक्तलक्षणपरब्रह्मस्वरूपं परामृशन्प्रकृतिलक्षणं तत्त्वमवभासयामि । तस्येदंतयाऽपि चित्प्रकाशानुप्रवेशं विना प्रकाशमानत्वाभावाद् ब्रह्मस्वरूपत्वं व्यवच्छिन्नवेद्यस्वरूपत्वात्तत्स्थूलत्वमिति सकलजगद्भावभेदकहेतुभूतेदंतात्मकं महद् ब्रह्म मम जगत्सिसृक्षासिकस्य योनिस्थानीयम् । अत एवाऽऽह, सर्वभूतानां चराचराणां समस्तानां प्राणभृतां ततस्तस्मादिदंतया परामृश्यमानात्स्वभावादेवं संभव उत्पत्तिः । तदेतदत्यद्भुतं रूपत्वं पारमैश्वर्यमायाशक्तेः सुप्रबुद्धावसेयपरमार्थमनेन प्रतिपादितं यन्मनागपि स्वरूपप्रच्युताभावे सतीत्थं नानाजगद्भावप्रपञ्चरूपतयाऽवभासमानत्वम् । एतच्चैवंविधमाश्चर्यरूपत्वं गर्भीकृत्य स्वरूपं प्राक्प्रतिपादितम् ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति ॥

अथ लौकिकार्थरूपेण गर्भीकरणयोन्यादिशब्दप्रयोगोऽत्र यः कृतस्तमेव स्फुटीकर्तुमाह,

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

सर्वयोनिषु समस्तेषु भावाभिव्यक्त्यधिकरणभूतेषु क्षेत्रेषु स्त्र्याद्याश्रितेषु या मूर्तयो जरायुजत्वादिचतुरुत्पत्तिप्रकारैश्चतुर्विधसंस्थानभेदेनाऽऽकृतयो भूतानां संभवन्त्युत्पद्यन्ते, तासां सर्वासां यथाप्रतिपादितस्वरूपं महद् ब्रह्म, इदंतासामान्यलक्षणं प्रकृत्यात्मकं, योनिर्मुख्यमभिव्यक्त्यधिकरणम् । तस्यां च योनौ संविल्लक्षणस्य बीजस्य स्ववीर्यप्रदानादहं पिता । यथा कश्चिद् ब्राह्मणादिपुरुषो भार्यात्वेन परिगृहीते वनिताक्षेत्रे संतानोत्पादनाय वीर्यमवसृजन्गर्भमाधत्ते, न च

---

१ राशा १–°नादिकारणत्वाद्योनिः.° २ राना १–' एव ' नास्ति. ३ राना १–' अति ' स्थाने ' एतां '. ४ राना १–यतः. ५ राना १–' च ' नास्ति.

रूपान्तरमासादयति । एवमहं स्वरूपादप्रच्युत एव यथोक्ते महति ब्रह्मणि जगद्भावहेतुं संविल्लक्षणं बीजमवसृजामीति स्वरूपाप्रच्युतिमात्रे पितृत्वेनाऽऽत्मनोऽधिकरणमात्रत्वेन योनित्वेन स्थूलस्य ब्रह्मणो निरूपणम् । नानाभावहेतुत्वे बीजेन चिदंशस्य निरूपणमिति । यथा ह्यधिकरणभूतां योनिमन्तरेण संतानाभिव्यक्त्यभावः पुरुषवीर्यस्य, एवमिदंतापरामर्शमात्रस्वरूपस्थूलब्रह्मात्मकप्रकृतिमन्तरेण सिसृक्षोः परमेश्वरस्य जगद्भावनक्रीडनोद्भावश्चिल्लक्षणस्य वीर्यस्येत्यर्थः । एवमिदमिति परामृश्यमानं स्वरूपमेव प्रकृतिर्न वस्त्वन्तरं किंचित्तस्याः । परस्य ब्रह्मणः प्रकाश्यप्रकाशकभावलक्षणः संबन्धः । स च प्रकाशाद्वैतं विना न घटते । प्रकाश्यस्य प्रकाशरूपतामन्तरेण तथास्वरूपलाभाभावात् । इति प्रकृतिविषयं तावज्ज्ञानमुक्तम् ॥

इदानीमेवं लब्धजन्मनस्तस्याः शरीरादिभावेन व्यवस्थितभूतादिविकाररूपायाः कथं निर्मोक्ष इत्यभेदार्थविषयं ज्ञानं निर्णीयते । यत्र यैषा प्रतिपादितस्वरूपा प्रकृतिः, सा शरीरविषयभावेनाऽऽभासमानैः स्वविकारैः प्रकृत्यादिभिश्च देहिनं प्रतिबध्नाति, येन तत्परिहारादेव ततो निर्मोक्षः स्यात् । किंतु यैर्विकारैस्ते संवेद्यतामापद्यन्ते ते प्रकारा देहिनमहंकारममकाराभ्यां निबध्नन्ति । ततस्तेभ्यो निर्मोक्षो भूतप्रकृतिनिर्मोक्षो भवतीति क्रमेण प्रतिपादयितुमाह,

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

परमार्थतो नित्यत्वादव्ययं विनाशरहितमतश्च जन्मरहितमपि देहिनमात्मानं यथोक्तप्रकृतिसमुत्था गुणाः सत्त्वाद्यभिधाना वक्ष्यमाणस्वरूपा वक्ष्यमाणेन प्रकारेण निबध्नन्ति विनाशोत्पादकदेहाहंकारारोपणतद्धर्मानुविधायित्वादस्वतन्त्री कुर्वन्ति ॥

कथमिति तेषां बन्धकत्वेन विभागमाह,

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

तत्र तेषां मध्ये सत्त्वं नाम गुणो ज्ञानसङ्गेन बध्नाति । नियतविषयं नियतकरणाधीनं यज्ज्ञानं तत्र यः सङ्गः, इदमहं जानामीत्यभिमानेनाऽऽसक्तिस्तल्लीनत्वं तेन परतन्त्रीकरोति । तथा सुखसङ्गेन बध्नाति । सुखं तत्तदभीष्टविष-

यप्राप्त्या विषयान्तराकाङ्क्षानिर्वृतिपर्यवसायिनी निवृत्तिः। तत्र सङ्गः। सुखितोऽहं, सुखं ममास्तीति वाऽहंकारममकारावष्टम्भेन तल्लीनत्वम्। तेन परतन्त्री करोति। कुतः? यत एवंस्वभावं सत्त्वं तन्निर्मलत्वादावारकतमोलक्षणमलविविक्तस्वरूपत्वात्प्रकाशकं विषयप्रथाकरणमतो ज्ञानसङ्गेन बध्नाति। अनामयं रजोविविक्तत्वात्प्रवृत्तिदुःखात्मकेनाऽऽमयेन रहितमतः सुखसङ्गेन बध्नाति। सूक्ष्मत्वात्। ज्ञानसङ्गः पूर्वं व्याख्यातः॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनाम्॥ ७॥**

[शां. पा. १-देहिनम्]

रजःसंज्ञं गुणं रागात्मकं सुखाभिलाषस्वरूपं जानीहि। अत एव तृष्णासङ्गसमुद्भवम्। अनादिप्रबन्धप्रवृत्तत्वात्तृष्णाविषयरसपिपासा, तत्र सङ्गस्तत्र लीनत्वम्। ततः समुद्भवो जन्म यस्य तादृशं जानीहि। तदेवंस्वभावं रजः कर्मसङ्गेन क्षेत्रज्ञं बध्नाति। कर्मरागप्रवृत्तस्येष्टविषयाहरणादनिष्टविषयपरिहारेण प्रवृत्तिस्तत्र सङ्गस्तत्परत्वम्। तेन नियतकार्यकर्तृताभिमानरूपेण परवशीकरोति॥

तथा,

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥ ८॥**

तमोलक्षणं पुनर्गुणमज्ञानजं प्रकाशस्वभावसत्त्वगुणप्रविविक्तत्वाज्ज्ञानाभावप्रभवम्। ततश्च सर्वशरीरिणां मोहनं ज्ञेयविषयाप्रतिपत्तिजननं जानीहि। तत्तथाविधं तमः प्रमादेनोपायोपेयविवेकनिरपेक्षत्वेन, तथाऽऽलस्येन प्रवृत्त्यात्मकरजोविविक्तरूपत्वात्कार्येष्वनुद्योगेन, तथा निद्रया मोहनरूपेण सर्वेन्द्रियशक्तिविरामेण देहिनं बध्नाति, नियच्छतीति गुणत्रयस्य स्वरूपं बन्धप्रकारश्च प्रतिपादितः॥

इदानीं यस्मिन्स्वकार्ये सति यस्य गुणस्योत्कर्षो भवति तथा तत्स्वरूपं प्रतिपादयितुमाह,

**सत्त्वं सुखे संजयति रजः कर्मणि भारत।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥ ९॥**

सुखलक्षणे सत्त्वगुणकार्ये सति सत्त्वं संजयति सम्यगतिशयं लभते। एवं

१ राना· १-' सत्त्वं ' नास्ति.

रजोगुणकार्ये कर्मणि[1] रजः संजयति[2] । तथा प्रमादे पूर्वोक्तलक्षणे सति तमः संजयति[3] । किं कृत्वा? ज्ञानं विषयावगममावृत्य तिरस्कृत्य ॥

अथैषामन्योन्याभिभवनिवृत्तित्वं प्रतिपादयितुमाह,

**रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

[ शां. पा. १–भवति भारत ]

रजस्तमसी अभिभूय न्यक्कृत्य सत्त्वगुणो वर्धते। किमुक्तं भवति । यदा सत्त्वं वि[4]वृद्धं बलवद्भवति, न तदा तदितरो गुणः स्वकार्यमारभते । एवं तमःसत्त्वे अभिभूय रजोगुणो वर्धते । तथा रजःसत्त्वे अभिभूय तमोगुणो वर्धते ॥

अथैषां गुणानां विवृद्धत्वव्यञ्जनानि लिङ्गान्याह,

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥**
**लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च तृट् ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**
**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

[ शां. पा. १–°शमः स्पृहा. २–कुरुनन्दन ]

अस्मिञ्शरीरे यदा यस्मिन् क्षणे सर्वद्वारेषु श्रोत्रादिषु प्रकाशः स्फुटमसंदिग्धं कृत्वा ज्ञानं शब्दादिविषयसंवेदनमुत्पद्यते तदा सत्त्वगुणमभिभूतरजस्तमस्कत्वाद्विवृद्धमुपचितमिति जानीयात् । तथा रजसि प्रवृद्धेऽभिभूतसत्त्वतमस्कत्वादुपचित एतानि लिङ्गान्युत्पद्यन्ते । तद्यथा, लोभ इष्टविषये प्राप्तेऽपि नैव निवृत्तिः, तदाहरणार्थं प्रवृत्तिरुन्मुखीभावः । ततश्चानन्तरमारम्भः क्रिया तदाहरणव्यापार इत्यर्थः । तथा प्राप्तेऽपि कस्मिंश्चिद्विषये विषयान्तरविषयाणां क्रियाणामशमः शान्त्यभावः । तथा क्षुत्तृट् तृष्णाभिलाषो राग इत्यर्थः । तथा तमसि विवृद्धे सत्त्वरजोभिभवाल्लब्धबले सत्येतानि लिङ्गानि जायन्ते । तद्यथा—प्रकाशः सत्त्वगुणाभिभवात्प्रकाशाभावो विषयासंवेदनं तथा रजोगुणाभिभवादप्रवृत्तिः क्रियाभावः । ततश्च स्वयं विवृद्धत्वात्प्रमादमोहावुक्तलक्षणाविति ॥

---

१ राना–' कर्मणि ' नास्ति. २ राना १–सृजति. ३ राना १–' संजयति' नास्ति. ४ राशा २ ना १–' वि ' नास्ति. ५ राना १–तथा. ५ राना १ ' तथा ' स्थाने ' यदा.'

अथैषां वृद्धौ सत्यां प्राणप्रयाणे सति विशिष्टलोकान्तरप्राप्तिनिर्देशेन बन्धहेतुत्वेन हेतुत्वमेव प्रतिपादयितुमाह,

**यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**
**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५॥**

[ शां. पा. १–प्रवृद्धे ]

यदा यस्मिन्काले सत्त्वगुणे विवृद्धे बलवति सति देहभृच्छरीरी प्रलयं याति विनाशव्यपदेशं लभते। तत्तदोत्तमविदां प्रकृष्टज्ञानानां देवादीनां संबन्धिनो लोकान्भवनानि सत्त्वगुणमयत्वादमलान्विशुद्धान्प्राप्नोति, तत्र जातव्यपदेशं लभते । तथा रजसि प्रवृद्धे प्रलीनः सन्कर्मसङ्गिषु रजोगुणप्रधानत्वात्तत्क्रियाविशेषपरेषु मर्त्येषु जायते । तथैव तमसि प्रवृद्धे प्रलीनः सन्मूढयोनिषु तिर्यक्स्थावरादिषु तमःप्रधानेषु जायत इति ॥

प्रयाणसमये सत्त्वादिगुणविवृद्धौ फलनिर्देशार्थमाह,

**कर्मणः सुकृतस्याऽऽहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

सुकृतस्य सत्त्वविवृद्धौ सत्यां यथाशास्त्रं सम्यगनुष्ठितस्य कर्मणो यज्ञादेः क्रियाविशेषस्य सात्त्विकं सत्त्वगुणादागतं निर्मलं विशुद्धं विशिष्टज्ञानसुखरूपं फलं भवतीति शेषः । रजसस्तु रजोविवृद्धौ सत्यां यथाशास्त्रं कर्मण इत्यर्थः । दुःखं फलं संशयादिदुष्टचित्तत्वात् । श्रद्धादिगुणविशुद्धाभावे यत्कर्म क्रियते तत्प्रवृत्तिलक्षणं दुःखमेव फलतीत्यर्थः । एवमेव तमसो विवृद्धौ सत्यां कृतस्य कर्मणो मोहादिदुष्टचित्तत्वात् । शास्त्रविधिवैपरीत्येन प्रयुक्तस्याज्ञानं मोह एव फलम् ॥

संग्रहेणैतदेवाऽऽह ।

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ जायेते तमसोऽज्ञानमेव च ॥ १७ ॥**

[ शां. पा. १–°मोहौ तमसो भवतो.]

स्पष्टार्थः श्लोकः । एतस्य सत्त्वादीनां गुणानां पृथक्स्वरूपसमुदायाचारफ-

त्वादिभेदप्रपञ्चप्रतिपादनस्य सर्वास्ववस्थासु तेषां वेद्यैकस्वरूपताप्रतिपादनतात्पर्यं वेदितव्यम् ॥

अस्य च प्रयोजनमाह,

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ १८॥**
**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति॥ १९॥**

स्पष्टार्थौ श्लोकौ ॥

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान्।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते॥ २०॥**

शरीरविषयादिभावेन परिणताः सर्वे प्रकृतिविकाररूपा भावा देहसमुद्भवाः॥ सति हि देहे शरीरविषयात्मकत्वेन समुद्भवन्तीति। तथाऽऽत्मनैवोपलभ्यतामभिप्रपद्यन्ते। तानेतान्प्रतिपादितस्वरूपांस्त्रीन्सत्त्वादिगुणानतीत्य वेदकैकस्वभावात्स्वात्मनो व्यतिरेचनेन निस्तीर्य देही क्षेत्रज्ञस्तद्व्यतिरेचनादेव शरीरादितो निवृत्ताहंकारममकाराभिमानत्वात् शुद्धचिन्मात्रस्वभाव एव प्रतिष्ठितसात्त्विकाहंकारो गुणमयशरीरादिभावप्रतिबद्धैर्जन्ममृत्युजरादुःखैरुत्पादविनाशपरिणामक्लेशैर्विमुक्तो विवर्जितः सन्नमृतं परं ब्रह्म परमात्मानमश्नुते प्राप्नोति। तदभेदं गच्छतीत्यर्थः। किमनेनोक्तं भवति। गुणेभ्यः प्रतिपादितस्वरूपेभ्य आत्मनः स्वाभाविकविविक्तभावनाभूतप्रकृतेर्मोक्षो न तु शरीरविषयादिरूपायास्तस्याः परिहारमात्रं मोक्ष इति॥

अथ गुणातीतस्वरूपं विशेषतो जिज्ञासुः,

अर्जुन उवाच।

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते॥ २१॥**

कैर्लिङ्गैरभिव्यञ्जकैर्लक्षणैरेतानुक्तरूपान्गुणानतीतो भवति, तेभ्यो विमुक्तः संपद्यते। यश्च गुणातीतः स किमाचारः किं तस्य चेष्टितमित्यर्थः। केन च प्रकारेणैतानतिवर्तते व्यतिक्रामति। गुणातीतप्राप्तिहेतुः को विधिरिति॥

प्रश्नत्रयनिर्णयार्थमुत्तरम्—

श्रीभगवानुवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव यो ज्ञस्तिष्ठति नेङ्गते ॥ २३ ॥
समदुःखसुखस्वप्रः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥

[ शां. पा. १–योऽवतिष्ठति. २–°सुखः स्वस्थः. ३–मानाप°. ४–°परित्यागी. ]

स एवंविधश्लोकचतुष्टयप्रतिपाद्यविशेषणविशिष्टो गुणातीत उच्यत इति संबन्धः । कोऽसौ ? य एतानि वस्तूनि संप्रवृत्तानि सम्यगभिव्यक्तानि सन्ति न द्वेष्टि, समाधिविपर्ययत्वात्तेषु प्रीतिं न भजत इत्यर्थः । तथा निवृत्तान्यलब्धवृत्तय एवैते भवन्त्विति न प्रार्थयन्त इत्यर्थः । कानि तानीत्याह । प्रकाशं सत्त्वगुणस्य विवृद्ध्यभिव्यञ्जकं ज्ञानादिरूपं लिङ्गम् । तथा प्रवृत्तिं रजोगुणस्य तथाविधं क्रियात्मकं लिङ्गम् । तथा मोहं तमोगुणस्य[1] तादृशमेवाज्ञानात्मकं लिङ्गम् । इत्येतेषु सत्त्वादिगुणवृद्धिचिह्नभूतेषु वस्तुषु प्रवृत्तिहेतुषु निवृत्तिहेतुषु[2] वा नित्यनिर्विकारस्वरूपं प्रतिष्ठत्वाद्यो रागद्वेषाभ्यां मनागपि नाऽऽध्रियते, स गुणातीत उच्यते । इत्येतन्मुख्यं गुणातीतसत्तालिङ्गम् । एतच्च गुणातीतलक्षणमुक्तम् । वक्ष्यमाणं च द्वितीये स्थिरप्रज्ञत्वलक्षणकथन-[3]प्रसङ्गेन प्रतिपादितमिहाप्यनुवर्तनीयम् । ननु प्रवृत्तिमोहौ प्रवृत्तौ सन्तौ रजस्तमौ विवृद्धालिङ्गभूतौ द्वेष्यौ भवतां नाम योगिनः प्रकाशस्तु सत्त्वाविवृद्धिलिङ्गम् । स च प्रवृत्तः सन्कस्य द्वेष्यो भवेत् । येनोक्तं प्रकाशं प्रवृत्तं यो न द्वेष्टि स गुणातीत इत्युच्यते । इहाभ्यासयोगिनो रजस्तमोलिङ्गवत्सत्त्वलिङ्गमपि प्रकाशात्मकं प्रवृत्तं निषेध्यत्वाद् द्वेष्यं भवति । तथा च पातञ्जले चितिशक्तिस्वरूपमुक्त्वा सत्त्वगुणात्मिका चेयमतो विवेक[4]विपरीतख्यातिरित्यतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धीत्युक्तम् । कर्मयोगिनस्तु गुणा-

१ राना १–' तमोगुणस्य ' नास्ति. २ राना १–निवृत्तेषु. ३ राना १–स्थिर°. ४ राशा २ ना १–विवेकविपरीत°.

तीतदशाधिरूढस्य विशेषोऽयमुक्तः, यत्प्रकाशमपि प्रवृत्तं न द्वेष्टि, न च तस्य निवृत्तिमभिकाङ्क्षति। तथा हि सति द्वेषरागानुषङ्गाद् गुणातीतता न घटते। तेन विशुद्धस्वभावामच्युतसंविदः प्रकाशादीनि प्रवृत्तानि निवृत्तानि वा हेयतयोपादेयतया वा यस्य वा द्वेषरागौ नोद्भावयतः स गुणातीत उच्यते॥ तदेतद् गुणातीतलिङ्गमित्यर्थः। तस्य लिङ्गान्तरमाह—उदासीनवदासीन इत्यादि। यो गुणैः प्रवृत्तैर्निवृत्तैर्वा न विचाल्यते स्वरूपान्न प्रच्याव्यते, स गुणातीतस्वरूपः।[1] कुतो न विचाल्यत इति हेतुगर्भं विशेषणमाह—उदासीनवदासीन इति। यः[2] परस्य सुखं दुःखं वा प्रवर्तमानं तेनामिश्रीभूतचित्तत्वात्स्वस्थो निर्विकारस्तटस्थ एव पश्यति स उदासीन इत्युच्यते। तेन तुल्यं स एव प्रकाशादिप्रवृत्तिनिवृत्त्योः परकीययोरेव निर्विकार एवाऽऽसीनः स्वरूपविश्रान्तोऽत एव ये गुणा वर्तन्ते प्रवृत्तिमनुभवन्तीति। एतावति ज्ञो बोद्धा संस्तिष्ठति, स्वस्थितिं भजतेऽत एव नेङ्गते न स्वरूपाच्चलति, स गुणातीत उच्यते। तदस्य लिङ्गमित्यर्थः॥ एतेन कैर्लिङ्गैर्गुणातीतो भवतीत्यत्रोत्तरमुक्तम्। किमाचार इत्यत्रोत्तरमाह—समदुःखसुख इत्यादि। सुखदुःखस्वप्न इति रजःसत्त्वतमोवृत्तय उक्ताः। समाश्च विशेषेण निरूप्यमाणत्वात्तुल्यास्ते यस्य स तथोक्तेन प्रीयते, न दुःखं द्वेष्टि, न स्वप्ने मुह्यतीत्येवंविधस्तस्य समाचारः। तुल्यो मित्रारिपक्षयोरित्येतदन्तम्। अनयैव दिशा किमाचार इत्यस्योत्तरमेतत्। कथं चैतान्गुणानतिवर्तत इत्यत्रोत्तरमाह—सर्वेत्यादि। सर्वेषामारम्भाणां यज्ञतपोदानादिक्रियाविषयाणामुद्यमानां निरतिशयनिजानन्दस्वात्मोपासाप्रवणत्वात्फलस्य स्वर्गादिभोगप्राप्तिलक्षणस्य त्यागो निरभिसंधानाद्वर्जयिता ज्ञाननिष्ठत्वेन फलाभिसंधिशून्यतया शास्त्रोक्तस्वकर्मानुष्ठानलक्षणो विधिर्गुणातीतत्वप्राप्तिहेतुरित्यर्थः॥

गुणातीतत्त्वप्राप्तिहेतुं परं विधिमाह,

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते॥ २६॥**

यश्च यथोक्तस्वरूपं मामव्यभिचारेण मद्व्यतिरिक्तविषयान्तरालम्बनव्यभिचाररहितेन भक्तियोगेन प्राक्प्रतिपादितचतुष्प्रकारेण भक्तिरूपेण समाधिना सेवते आर्तत्वादिज्ञानित्वपर्यन्तावस्थासमुदितविधिपूर्वमुपास्ते, स परां काष्ठां

१ राशा° १—'स्वरूपः' स्थाने 'इति संबन्धः'. २ राना १—यः यस्य.

प्राप्तः सन्यथोक्तान्गुणानतीत्यातिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते, यथोक्तस्वरूपं ब्रह्मैव संपद्यत इति। इदानीमेवोपायान्तरदुस्तराद् द्वैतमोहमहासागरादुत्तीर्णो भवतीत्यर्थः। यतो यथोक्तेन क्रमेण प्रत्यभिज्ञाताद्वयचिन्मात्रस्वरूपपरब्रह्मरूपे मयि परमात्मनि स्वविश्रान्तसंविदो योगिनोऽनन्तगुणरूपं किंचिद् व्यतिरिक्तं पदार्थान्तरमवशिष्यते। यस्माद्यथाप्रतिपादितं तात्त्विकं मत्स्वरूपमेवाचिन्त्यमन्मायामहिम्नैवेदंतया परामृश्यमानं यथा प्रकृत्याख्यभावस्वरूपतामापद्यते, तथैव तात्त्विकाः सद्धर्मा अमी परामृश्यमानाः सत्त्वादिगुणव्यपदेशभाजो भवन्ति। तथा च प्रकाशो नाम सद्धर्मो व्यतिरिक्तप्रकाश्यानपेक्षनित्योदितचिदात्मकज्योतीरूपः। स व्यतिरिक्तपरिमितप्रकाश्यनिष्ठतया तत्स्वरूपानुविधायित्वात्परिमिततत्त्वमिवाऽऽपन्नः सत्त्वगुणव्यपदेशं लभते। तथा देशकालाद्यनवच्छिन्नमहिम्नि स्वाभाविकी नित्या या स्थितिः सैव भिन्नाश्रयानिष्ठतया नियमात्मकतमोगुणव्यपदेशं लभते। एवं परामर्शवैचित्र्याद्भावनामात्रव्यापारो मायाशक्तिः प्रकृतिगुणात्माधिभावविकल्पात्मकमत्यद्भुतमिदं त्रैलोक्यालेख्यमुल्लिखन्ती सर्वदेहिनो मोहयति। सैव यदा भक्तिरूपेण विजृम्भमाणया मायाशक्त्या तिरस्कृता भवति, तदा पारमार्थिकं ब्रह्मैवैकं तत्त्वमवशिष्यते। तत उक्तेन भक्तियोगेन मां सेवते स ब्रह्मभूयाय कल्पत इति ॥

अत्र हेतुमाह,

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

॥ इति श्रीभगवद्गीतासूपनिषत्सु चतुर्दशोऽध्यायः ॥ १४ ॥

यस्माद् ब्रह्मणो यथोक्तस्य च परस्य तत्त्वस्याहं प्रतिष्ठा, मयि तदव्यभिचारतया तत्त्वस्वरूपानुविधायि प्रतिष्ठितम्। यतः क्षेत्रज्ञक्षेत्रादिभावेनावस्थितं ब्रह्मैव यदप्युक्तम्, तथाऽपि तदवच्छिन्नवस्तुनिष्ठतया तत्स्वरूपानुविधायि सन्न सर्वत्र प्रतिष्ठितम्। कीदृशस्य ब्रह्मणोऽहं प्रतिष्ठा? अमृतस्याव्ययस्य च। न व्ययोऽपक्षयलक्षणो विकारस्तेन रहितस्य, अत एवामृतस्य नित्यसद्भावस्य। न केवलं ब्रह्मणोऽहं प्रतिष्ठा, यावत्तद्धर्मस्य शाश्वतिकस्य चित्प्रकाशात्मनोऽहं

---

१ राशा २ ना १–°र्माव्यति°. २ राशा २ ना १–‘सर्वत्र’ नास्ति. ३ राना–१–प्रतिष्ठम्.

प्रतिष्ठा । अनपेक्षितव्यतिरिक्तकारणः सहज आनन्द ऐकान्तिकं सुखं तस्याहं प्रतिष्ठा । किमुक्तं भवति । प्रकाशानन्दाक्षरत्वरूपं यत्परं ब्रह्म सोऽहं भक्तिलक्षणेनैकेनोपायेन प्राप्य इत्योम् ॥

यैस्तुच्छैस्त्रपुसीमता प्रमलिनैः सत्त्वादिभी रूपकै-
दौर्गत्यं भजते जनो व्यवहरन्संसारदीर्घापणे ।
सिद्धे चास्य रसे चतुर्दशमहाध्यायाभिधेयात्मके
नीतास्ते परमार्थतां ददतु वो लक्ष्मीं क्षणादक्षयाम् ॥

इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे चतुर्दशोऽध्यायः ॥ १४ ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

एवं त्रयोदशाध्याये स्थूलदृष्ट्या भूतप्रकृतेः मोक्षः परप्राप्तिहेतुत्वेन प्रतिपादितः । चतुर्दशेन सूक्ष्मया दृष्ट्या गुणपरमार्थायास्तस्यास्तदतिक्रमक्रमेण विशेषतो ब्रह्मभावप्राप्तिरुपदिष्टा । इदानीं भुवनसंतानभावेन परिणतायास्तस्या निर्मोक्षप्रतिपादनक्रमेणापुनरावृत्तिपदप्राप्तिं प्रतिपादयितुम् ,

श्रीभगवानुवाच ।

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

प्रतिपाद्यमानविशेषणसाधर्म्यादश्वत्थवृक्षाध्यवसायेन नानाभुवनसंतानरूपः संसारप्रपञ्चो विवक्षितः । तमश्वत्थमेवंविधमाहुः परावरद्रष्टारः कथयन्ति । कीदृशम् ? ऊर्ध्वमूलं बहुलप्रपञ्चस्यापि भुवनसंतानस्य केवलभोगभूमिकर्मभूमिभेदेन संग्रहाद् द्विप्रकारत्वे सति भोगभूमिरूपो भाग ऊर्ध्वशब्देनोक्तः । भोगस्य फलत्वात्फलस्य च प्राधान्यान्मूलशब्दे चाविद्यादिक्लेशजालमुक्तम् । सति हि तस्मिन् भोगभूम्यात्मना क्षेत्रज्ञान्प्रति प्रकृतिर्विपरिणमति । अन्यच्च कीदृशं तमधःशाखम् । अधःशब्देन कर्मभूम्यात्मको भाग उच्यते । तेन पुनरावृत्त्यधिकरणत्वादधोविपर्यत्वेनोक्तः । कर्मभूमय एव शाखा इत्थमधःशाखाः

१ सना १—रूपणैः. २ राना १—यस्य. ३ राना १—'भूत' नास्ति. ४ राना १—'भाव' नास्ति. ५ राशा २ ना. १—°प्रकारे. ६ राशा २ ना १—°येनोक्तः.

यस्य तं तथाविधम् । यतः सत्सु क्लेशेषु शुभाशुभभोगादिकरणभूतेभ्यो भुवनेभ्यः क्षेत्रज्ञानां पुनः कर्मभूमौ निपतनमवश्यमेव स्थितम्। यदुक्तम्,

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । इति ।

अन्यच्च कीदृशम् । अव्ययम् । अनन्तत्वात्परमेश्वरमायावासितानां क्षेत्रज्ञानां गमागमान्निवृत्तेरतान्प्रति तथाऽस्य परिणमतः प्रवाहनित्यत्वेनाविद्यमानव्ययत्वम् । अन्यच्च कीदृशम्? यस्य छन्दांसि वेदाः पर्णानि पत्राणि । किमुक्तं भवति। वेदसमुद्भवत्वात्तानि तानि कर्माणि छन्दःशब्देनोक्तानि । तान्येव तादृक्परिणामावधिभूतत्वात्पर्णत्वेनास्याध्यवसितानि । तदेवंविधमेनं क्लेशप्रभवत्रयीनियमितकर्मफलभूतभोगाधिकरणात्मकं भुवनसंतानरूपमूर्ध्वमूलत्वादिना सादृश्यादश्वत्थत्वं यो वेद वेद्यत्वेन वेदकात्स्वरूपाद् व्यतिरिक्तं जानाति स वेदार्थवित् । न तु यस्तस्मिन्ममत्वादिग्रहेण निमग्न[1] इत्यर्थः ॥

ननु किमयमश्वत्थ ऊर्ध्वमूल एवाधःशाख एव च स्यादुत रूपान्तरमप्यस्तीत्याशङ्कायां तत्प्रतिपादनार्थमाह ।

**अधश्चोर्ध्वं प्रसृता यस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

[ शां. पा. १–°तास्तस्य. ]

यस्य चाश्वत्थस्योक्तेन क्रमेणाधः शाखाः प्रसृता ऊर्ध्वं च प्रसृताः । कुतश्चशब्दो हेतौ । यस्मादधो मर्त्यलोके शब्देनोक्तायां कर्मभूमौ मूलान्यनुसंततानि क्लेशा एव प्रसृता इत्यर्थः । कर्माण्यपि हि क्लेशमूलान्यत एव तादृशि मूलानि कर्मानुबन्धीनि, कर्माणि शुभाशुभाः क्रिया अनुबन्धं गमयितुं शीलं येषां तानि तथोक्तानि । भोगभूमिषु हि[2] भोगत्वेन क्लेशा एव यथा विजृम्भन्ते तथा कर्मभूमिष्वत एव कर्मत्वेन विजृम्भन्ते । ततश्च कर्मप्रभवा एव भोगभूमय ऊर्ध्वप्रसृतशाखात्वेनाध्यवसिताः । तथोभयरूपा अप्यस्य शाखाः कीदृशा इत्याह गुणप्रवृद्धा इति । गुणैः सत्त्वादिभिः सुखाद्यात्मना परिणमद्भिः प्रवृद्धा उपचयं प्राप्ता यावान्हि[3] प्रसरस्तासाम् । सर्वे गुणानुविद्धा एवं भोगात्मना वा कर्मात्मना

१ राशा १–निमज्जमानः. २ राना २–हि भोगा । भोग्यत्वेन. ३ राना १–यावन्ति प्रसरा.

वा विजृम्भन्ते । तेन यथा रसेन शाखा वृक्षस्य प्रवर्धन्त एवं गुणैः कर्मभूमयः फलभूमयश्च प्रवर्धन्ते । तदात्मका एव ता इत्यर्थः । तथा विषयप्रवालाः । विषयाः शब्दादयो बुद्धिप्रधानासु भूमिष्वध्यवस्थिताः प्रवालस्थानीयाः पल्लवतुल्या यासामुपरितनीष्वधस्तनीषु सर्वास्वेव हि भूमिषु शुभाशुभविषयत्वेन परिणता गुणा एव पर्यायेण गमागमहेतुत्वमापद्यमानाः क्षेत्रज्ञान्निबध्नन्तीति तात्पर्यम् ॥

तदेवंविधस्योक्तस्य वक्ष्यमाणज्ञानाभावादाह ।

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चाऽऽदिर्न च संप्रतिष्ठा ।**

अस्य यथाप्रतिपादितस्याश्वत्थस्य तथा तेन प्रकारेण रूपं स्वभावो नोपलभ्यते, तत्त्वतो नैव प्रतिपद्यते । अन्यथैव ह्ययमचिन्त्येश्वरमायामात्रनिबन्धनतया तत्त्वनिःसाररूपत्वेन स्थितो ज्ञानशून्यत्वाच्चान्यथैव परमार्थसत्त्वेनावभासमानो ममकारग्रहेण प्राणिनः [2]प्रतिबध्नाति [3]यथाऽस्य स्वरूपं नोपलभ्यते । न च संप्रतिष्ठा, अभ्यन्तरालवर्तिनी सम्यक्स्थित्यवस्थाऽपि न लभ्यते । यतो यतो येन येन रूपेणास्य स्थितिस्तत्सर्वं परिणामित्वादस्थिरम् ॥

अत एवंविधस्यास्य स्वभावाप्रकाशस्य व्यवधायकस्य छेदोपायमाह ।

**अश्वत्थमेनं सुविरूढमूल-**
**मसंगशस्त्रेण शितेन छित्त्वा ॥ ३ ॥**
**ततः परं तत्पदं मार्गितव्यं**
**यस्मिन्गतो न निवर्तेत भूयः ।**

[ शां. पा. १–दृढेन. २–ततः पदं तत्परिमा°. ३–गता न निवर्तन्ति. ]

एवं यथाप्रतिपादितस्वरूपं क्षेत्रज्ञानां क्लेशनिमित्तकर्मानुरूपपरिपाकानुभवाधिकरणभूतभुवनसं[4]तानात्मकमश्वत्थं, तत्साधर्म्यादश्वत्थेन निरूपितम् । एवं सुविरूढमूलं सुष्ठु दाढर्येन विविधं कृत्वा रूढानि प्ररोहं प्राप्तानि, क्लेशत एव मूलानि यस्य तं तादृशमसङ्गशस्त्रेण छित्त्वा ममतानुग्रहरूपगाढाश्लेषत्यागात्मना विवेकपाषाणकषण[5]वशाच्छितेन सुतीक्ष्णेन कुठारेण छित्त्वा मूलतो द्विधा कृत्वा ततोऽ-

---

१ राना १–' आह ' नास्ति. २ राशा १–' प्रति ' स्थाने ' नि '. ३ राशा २ ना १–तथा. ४ राशा १–°सत्तात्मकम्. ५ राना १–' कषणं ' नास्ति.

नन्तरं पुनः पुनः प्रतिपादितस्वरूपं पदं निरुत्तरं धाम मार्गमन्वेषणीयम् । कीदृशम्? यस्मिन्प्राप्ते योगी भूयो न निवर्तेत, पुनः संसारवर्त्मनि नाऽऽविर्भवेत् । अक्त्रि-मस्वभावविश्रान्तिलक्षणं मोक्षमवाप्नुयात् ॥

यस्मादेतस्मिन्नेव परप्रकाशावरणहेतौ महति विघ्ने यथोक्तेन रूपेण निवृत्ते सति योगी,

**तमेव चाऽऽद्यं पुरुषं प्रपद्ये-**
**यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

[ शां. पा. १-°पद्ये यतः ]

यदेतदुक्तव्यवधानविच्छेदाद्योगी प्राप्नुयात् । स एव परमः पुरुषः परमकारणं परमात्मा । ततस्तस्मिन्पदे प्राप्ते परं पुरुषं प्रपद्येत । तत्समापन्नो भवेद्योगीत्यर्थः । कं तं परं पुरुषं प्रपद्येत ? यतो यस्मादेकस्मात्सर्वकारणभूतात् पुराणी प्रवहमा-नत्वाच्चिरंतनी प्रवृत्तिर्यथाप्रतिपादितजगत्क्रीडनकनिर्माणात्मिका क्रिया प्रसृता । इत्थमवभास(समा)मानत्वात्प्रकर्षेण सृता गता व्यापिनी संवृत्तेत्यर्थः । किमुक्तं भवति । यदैव परप्राप्तिलक्षणपरमात्मस्वभावविश्रान्तिरुपजायते, तदैव तदिच्छामा-त्रैककारणत्वं जगद्वैचित्र्याभासस्य योगिनः प्रतिपद्यते ॥

अत एव,

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

तदव्ययं नित्यत्वादपक्षयादिदोषरहितं पदं स्वाभाविकात्मलक्षणं स्थानममूढाः प्रत्युदितविद्याशक्तित्वात्प्रबुद्धा गच्छन्ति, प्राप्नुवन्ति, तादात्म्यं लभन्त इत्यर्थः । कीदृशाः सन्तः । निर्मानमोहा अनात्मादिष्वात्मादिप्रत्ययलक्षणाभिमानमयान्मो-हान्निष्क्रान्ताः। यतो जितसङ्गदोषाः, सङ्ग आसक्तिः। अनात्मादौ वस्तुन्यात्मा-भिमानेन गाढनिमग्नचित्तत्वम् । स एव दोषः संसारहेतुत्वान्महदगम्यम् । जित-स्तिरस्कृतो यैस्ते तथाविधाः । कथंभूतैः । स जेय इति हेतुगर्भविशेषणमाह-अध्यात्मनित्या इति । अध्यात्ममात्मनि पारमार्थिके स्वभावे नित्याः सदा तदे-

१ राशा २ ना १-प्रोत्प्रादित°. २ राशा १-अवद्यम् . ३ राना १-'भूतैः' नास्ति.

कनिष्ठा इत्यर्थः । कथमध्यात्मनित्यत्वं स्यादिति पूर्ववद्विशेषणम्—विनिवृत्तकामा इति । काम्यन्त इति कामाः । ऐहिकामुष्मिका इष्टाः शब्दादयो भोगा विनिवृत्तास्तत्त्वज्ञानाभ्यासाद्विच्छिन्नास्ते येषां ते तथाविधाः । कामा हि बाह्यान्विषयान्प्रति चित्तमाकर्षयन्तोऽध्यात्मनिष्ठतां विघ्नन्त्यतो विनिवृत्तकामा अध्यात्मनित्या इत्युक्तम् । विनिवृत्तकामत्वं च कथं स्यादिति पूर्ववद्विशेषणमाह—द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैरिति । द्वंद्वैः क्षुत्तृष्णाशीतोष्णजरामरणादिभिस्तथा तथा तद्विपरीतैस्तृप्तिहृलादादिभिरनित्यशरीराद्यहंकारनिबन्धनैः क्लेशैः सर्वैरेव सुखदुःखात्मकत्वाद्यभिधानैर्विमुक्ताः परिवर्जिताः । ते हि तथाविधा निवृत्तकामा भवन्ति । तदयमत्र क्रमो विवक्षितः । भगवदनुग्रहाविर्भूतविवेकजज्ञानत्वात्प्रबुद्धयोगिनो हेयोपादेयविवेकक्षमबुद्धयो जायन्ते । ते सुखाद्यात्मकत्वेन संवेद्यत्वमापन्नाः सर्वान्प्राकृतान्भावान्हेयत्वेनाऽऽत्मतत्त्वं च यथाप्रतिपादितस्वरूपमुपादेयत्वेन निश्चिन्वन्तो द्वंद्वात्मकैः क्लेशैर्विमुच्यन्ते । तेभ्यो निवृत्ताश्च तद्विधधर्मिणि सहजनित्यानन्दमये स्वात्मन्येव नित्यावहिता भवन्ति । ततश्च बाह्येषु भावेषु प्रतिपादितोपपत्त्या शास्त्रीयकर्मापरित्यागे सति स्पृश्यमानेष्वपि शरज्जलदपटलेष्विव वायवो निःसङ्गा भवन्ति । ततश्च निःसङ्गत्वान्निर्मलाविच्छिन्नाविपर्ययप्रत्ययाः सन्तः परमात्मन्येव परमार्थसत्ये सुप्रतिष्ठाहंप्रतीतयः परमं पदं प्राप्नुवन्ति ॥

कीदृशं तत् ।

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

तत्पदं सूर्यादयो न भासयन्ति । तेषां हि प्रकाशं कारणान्तरलब्धजन्मकं चेतनाचेतनाभिव्यञ्जकत्वेन प्रकाशकमनन्यप्रकाशसंवित्प्रकाशात्मना परमशब्दप्रतिपादितेन स्वस्वभावेन परमात्मेच्छामात्रेण भावयन्प्रकाशयत्यतः सूर्यादीनां कथं तत्पदं प्रकाश्यं स्यात् । अथ तदेव मम यथोक्तस्वस्वरूपस्य परमकारणस्य परमेश्वरस्य धाम स्थानं, यत्प्राप्य यत्समापद्य योगिनो न निवर्तन्ते, न पुनः संसारभूमिं नानाजीववदवतरन्ति ॥

---

१ राना १–' च ' नास्ति. २ राशा १–अन्यजीव°.

ननु स्वेच्छामात्रेण सर्वभावप्रकाशकेऽनन्यप्रकाश्यचित्प्रकाशैकस्वभावे परमात्मन्येवैकस्मिंस्तत्त्वे परमार्थसत्त्वेन व्यवस्थिते प्रतिशरीरं ज्ञत्वादिधर्मयोगिनोऽन्योन्यभिन्नाः क एव इमे जीवा नाम यथेच्छमिन्द्रियवर्गं स्वविषये प्रवृत्तिनिवृत्ती लम्बयन्तीति संशयानान्प्रति जीवविवेकार्थमाह ।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

य एष जीवो नाम पदार्थः प्रकृतिस्थानि शब्दादिभावेन परिणतायां यथोक्तस्वरूपायां प्रकृतौ स्थितानि, तदेकालम्बनत्वात्तदाश्रितानि, प्राधान्याच्छ्रोत्रादिबुद्धीन्द्रियविवक्षया पञ्चेन्द्रियाणि, मनसा प्रवृत्तिनिवृत्तिसाधनभूतेनान्तःकरणेन षष्ठेन सहितानि कर्षति, उपादेये स्वविषये युञ्जानो हेयाच्च ततो निवर्तयन्नाऽऽक्षिपति च, स जीवलोके जगति ममैवांशः । स च प्रतिपादितस्वरूपस्य परमकारणस्यांशो भाग एव, सनातनो नित्यो जीवभूतो मदिच्छावशादन्योन्यजीवरूपतां प्राप्तः । किमुक्तं भवति । जीवपरमात्मनोर्नास्ति मनागपि वास्तवो भेदः । एवकारेण जीवस्य चिन्मात्रस्वरूपातिरिक्तवस्त्वन्तरासंपर्कसंभावनाभावोऽवधारितः । तेन परमार्थतः परमकारणाभिन्नस्यापि प्रतिक्षेत्रं विभक्तेन्द्रियवर्गापकर्षत्वादिना नानात्वप्रतीतिरचिन्त्यमन्मायाशक्तिजनिताऽस्य न वास्तवी । सा हि मायाशक्तिस्तत्त्वज्ञानावसराविभाव्यनिःसारस्वरूपा संप्रति सार्वभावविभ्रमोद्भावनेनेत्थं व्यामोहयतीति दैवी ह्येषा गुणमयीत्यादिना प्रागेव प्रतिपादिताऽद्भुतस्वरूपा । ततश्चाऽऽकाशस्य नित्यानिर्मलाविभागानन्तमहिम्नोऽपि घटाद्यवच्छेदकवशाद्यथांऽशत्वपरिकल्पना, तथा परमात्मनोऽपि शरीराद्यवच्छेदकवस्तुवशाज्जीवरूपांशवत्त्वपरिकल्पनेयम् । न तु तस्योक्तस्वरूपस्य वस्तुतो भागाः संभवन्ति । योऽपि प्रदीप्तहुताशराशिस्फुलिङ्गनिचयोपमानप्रतिपादनव्यवहारः परमात्मजीवात्मनोरागमे श्रूयते, सोऽप्यौपचारिक एव, न वास्तवः । यतो ब्रह्मविद एक एव तत्त्वं परमार्थसद्ब्रह्मसंज्ञायामनेकमिव चकास्तीत्याचक्षते । तथा च कश्चिदीश्वरो व्याकृतप्राणाविर्भूतेन्द्रियोर्मिभिः प्रनृत्यन्निवाऽऽभाति । “ तस्मै ब्रह्माब्धये नमः ” इत्याह ॥

---

१ राशा १-सर्वभावभेदवि-. २ राशा १-°प्राणो विराट् भूते°.

ननु[1] शरीरान्तोपात्तशुभाशुभकर्मणोपचितवासनाधिवासित एव जीवः शरीरान्तरं प्रतिपद्यमानः संसारपरम्परापरिवर्तनमनुभवन्कथं न वस्तुतोऽन्यो भिन्नो भवेदिति भेदभ्रान्तिमपाकर्तुमाह,

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥ ८ ॥**

एवं मदंशत्वाद्वस्तुतो मदभिन्नो जीवपदार्थो यच्छरीरमवाप्नोति, केनचिन्नवीनशरीरेण संबध्यमानत्वाज्जातव्यपदेशं लभत इत्यर्थः। तथा यच्चाप्युत्क्रामति, तत्कर्मपरिपाकप्रक्षये केनचिच्छरीरेण वियुज्यमानत्वादुत्क्रामंस्तद्व्यपदेशं लभते । तदयमीश्वरः स्वतन्त्रस्वरूपमात्रप्रतिष्ठः परमात्मैव सन्नेतानि सूक्ष्मरूपाणीन्द्रियाणि गृहीत्वाऽधिष्ठीयत्वेन स्वीकृत्य संयाति, देहाद्देहान्तरगर्भ[2]व्यपदेशभाग्भवति । न पुनर्नित्यानिर्विभागव्यापकचि[3]न्मात्रैकस्वरूपस्यास्य देहाद्देहान्तरगमनलक्षणं संयानं जन्ममरणशब्दवाच्यं वस्तुतः संभवति । इदमत्र तात्पर्यम् । पारमार्थिकस्वरूपप्रत्यवमर्शाभावमात्राल्लब्धजन्मनो निजमायाशक्त्युद्भावितावच्छेदहेतुविविधशरीरसंबन्धाज्जीवनानात्वमिवाऽऽभासयत्ययमीश्वरः । तेन यथा घटकु[4]सूलगृहाद्यवच्छेदकवस्तुसंबन्धादेकमेव निर्विभागमाकाशं घटाकाशं कुसूलाकाशमित्यादिभेदव्यपदेशतत्त्वविदः प्रतिपद्यन्ते, तथैवायमीश्वरः स्वरूपप्रतिष्ठ एव सन्नानाकार्यकारणसंबन्धान्नानात्व[5]मेव प्रतिपद्यते । तत्संबन्धेऽपि[6] सति यथैव विशुद्धसंविन्मयस्वरूपमात्रप्रतिष्ठ एव यथोपमानेन प्रकटयति कुताश्चिदाशयात्कमलाकरादेर्यथा स्प[7]र्शमात्रस्वभावो वायुर्गन्धान्कमलकुवलयादिमकरन्दामोदान्सूक्ष्मरूपान्स्वीकृत्य कुमुदाकरादिकमाशयान्तरं संयाति, तथैवायमिन्द्रियादीनि गृहीत्वा देहाद्देहान्तरं चिन्मात्रस्वरूपप्रतिष्ठ एव संयातीव । किमनेनोक्तं भवति । यथा त[8]त्तदाशयगतं गन्धपरमाणुपरिग्रहेऽपि स्पर्शमात्रगुणान्स्वरूपादप्रच्यवमानो गन्धवत्तां नावपद्यते पवनोऽथ तत्संबन्धात्कमलसुरभिः कुमुदमकरन्दसुरभि[9]रिति विभि[10]न्नव्यपदेशभाग्भवति, तथाऽयमात्मा निरावरणानन्तनिर्विभागविदेकस्वभावोऽपि

---

१ राशा १–ननु ततस्ततः श°. २ राशा १–' गर्भ ' स्थाने ' गन्तृत्व '. ३ राना १–°चिन्मात्रस्व:°. ४ राना १–' कुसुल ' स्थाने ' स्थूल '. ५ राशा १–°त्वमिव. ६ राना १–' अपि ' नास्ति. ७ राना १–°स्पन्दमात्र–. ८ राना १–तत्तदाकाशगतं. ९ राशा १–सुगन्धिरिति. १०–' वि ' नास्ति.

मायोद्भावितदेहादिपदार्थसंबन्धान्नानाव्यपदेशं भजते, न तु वस्तुतोऽस्य भेदः संभवति चायमुपमानोपमेयभावो विवक्षितो यद्वस्त्वन्तरसंबन्धेऽपि स्वरूपाप्रच्युतिरस्य ॥

इति जात्यायुर्भोगलक्षणविपाकाभिव्यञ्जकजन्ममरणधर्मयोगिशरीरादिसंबन्धेऽपि वास्तवीं स्वरूपमात्रप्रतिष्ठितामस्याऽऽत्मनः प्रतिपाद्य, इदानीं तदन्तरालवर्तिभागलक्षणविपाकाभिव्यञ्जकदशासंबन्धेऽप्यस्य तां प्रतिपादयितुमाह,

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्यादिना प्रदर्शितन्यायेनायमेक एवाऽऽत्मा नानाक्षेत्रवर्तिविभिन्नविषयाधिष्ठातृमात्रेण नानात्वमिव प्रतिपद्यमानो विषयान् शब्दादीन् सुखादिहेतूनुपसेवते । ततोऽनुपलब्धत्वमात्रैकस्वभावाव्यभिचारादेक एव सन्भजते, भोक्तृत्वावस्थायामपि तैरनावृतस्वरूप एवासावित्यर्थः ॥

**तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**

[ शां पा. १–उत्क्रामन्तं स्थितं वाऽपि. ]

तिष्ठन्तं लब्धव्यपदेशत्वात्कस्मिंश्चिच्छरीरे तेन तेन जात्यादिना व्यपदेशेनाविच्छिन्नतया स्थितिमनुभवन्तं, तथोत्क्रामन्तं तस्मात्तादृशाच्छरीराच्छरीरान्तराश्रयणायोद्गच्छन्तम् । जन्ममरणव्यपदेशं भजन्तमित्यर्थः । तथा तदन्तरालगुणान्वितम् , सत्त्वादिगुणसंयुक्तं शब्दादिविषयजं सुखाद्यात्मकं भोगमुपभुञ्जानं, वेदकत्वमात्रेण तद्भोक्तृत्वव्यपदेशमात्रभाजम् । इति जन्ममरणस्थित्यवस्थास्वप्येकस्मिन्नेव स्वाभाविके सर्वक्षेत्राधिष्ठातरि स्वरूपे प्रागुक्तेन रूपेण वर्तमानं, विमूढा मायाशक्तिमहिम्ना मनागपि स्वरूपप्रत्यवमर्शादुन्मेषलक्षणेन विशेषेण मूढा विचेतसः । सम्यग्ज्ञानरहिता नानुपश्यन्ति, पारमार्थिकेन रूपेण स्थितमपि तथा प्रत्यवमर्शाभावान्न साक्षात्कुर्वन्ति । के तर्हि तं पश्यन्तीत्याह—ज्ञानचक्षुषः, यथावस्थितवस्तुसंवेदनमेव चक्षुर्लोचनं येषां ते पश्यन्त्यात्मतया साक्षात्कुर्वन्ति ।

---

१ राशा २ ना १–°कादभि°. २ राशा १–उपलब्धृत्व°. ३–राशा १–'मात्र' नास्ति; राना १–°भाजं भजन्तं. ४ राशा १–°मर्शानु°.

न ह्यसौ रूपात्मकविषयसाधनभूतेन चक्षुरात्मनेन्द्रियेण सा दृश्यते । तद्दर्शने सम्यग्ज्ञानमेव साधनमतस्तच्चक्षुष्ट्वेन निरूपितम् ॥

किंच,

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**

येऽपि ज्ञानचक्षुषो योगिनः समाहितास्तेऽप्येनं परमात्मानं यथोक्तेन क्रमेण यतमाना नित्याविलुप्तोत्साहतया यत्नपराः सन्त आत्मन्यवस्थितं, सदा स्वभावत एवापरोक्षतया वर्तमानमेव पश्यन्ति । यथावत्प्रत्यभिजानन्तीत्यर्थः । अकृतात्मानस्तु यतात्मानोऽप्येनं न पश्यन्ति । किमुक्तं भवति । परमेश्वरानुग्रहं विनाऽनुन्मिषितसम्यग्ज्ञानत्वादकृतस्तद्दर्शनायासंपादित आत्माऽन्तःकरणं यैस्ते तादृशा आसुरसर्गभाजो यतमाना अपि तेन तेन केनचित्प्रकारेणोद्युक्ता अपि न पश्यन्ति । सम्यग्ज्ञानलक्षणस्य मुख्यस्य तद्दर्शनसाधनस्याभावात् ॥

यश्चायमेवमद्भुतशक्तिः परमात्मा सोऽहमेवेत्यात्मनिष्ठत्वेन तत्स्वरूपं प्रतिपादयितुमाह,

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

यदेतदादित्यगतं सूर्यसंनिविष्टं तेजो ज्योतिः समस्तं भुवनमभिव्यञ्जकतया प्रकाशयति, यच्चन्द्रमसि सोमे संनिविष्टमखिलं जगदाप्याययति, यच्चाग्नौ जातवेदसि स्थितं पाकादि स्वकार्यं निर्वर्तयति, तत्त्रिधाऽवभासमानमपि ममैवैकस्य संबन्ध्येकमेव प्रकारं संविदात्मकं जानीहि । न ह्यसंविदात्मकत्वे कस्यचित्स्वकार्यस्य संपादनपर्यवसायितोपपद्यते । संविच्चैकैवैकस्य पारमार्थिकस्य संवेदितुर्ममैवासाधारणो धर्मः ॥

ततोऽहमेव सर्वमित्येतत्परमेतदत एवाऽऽह,

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**
**अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

[ शां. पा. १—आश्रितः ]

---

१ राशा १—' सा ' नास्ति. २ राना १—°चक्षुस्त्वेन. ३ राशा १—°त्यान्तर्गतं.

गां पृथिवीमाविश्य स्वशक्त्या व्याप्य, भूतानि चराचरान्प्राणिनोऽहमोजसा स्वबलेन धारयामि बिभर्मि। पृथिवीगता धारणशक्तिर्ममैव स्वाभाविकं बलमित्यर्थः। तथा रसात्मकोऽमृतमयः सोमो भूत्वा चन्द्रात्मतयाऽऽत्मानमेवाऽऽमास्य सर्वा ओषधीः समस्तप्राणिप्राणनहेतुभूता द्रव्यजातीरहमेव पुष्णाम्युपचिताः संपादयामि। आप्यायनरूपा ममैव शक्तिरित्यर्थः। तथा वैश्वानरो जातवेदो भूत्वा तदात्मकः सन्नहमेव प्राणभृतां शरीरमाविष्टः प्राणापानाभ्यां बहिः सूर्येन्दुभावेन व्यवस्थिताभ्यां स्वशक्तिभेदाभ्यां समायुक्तः सहितो भक्ष्यादिभेदाच्चतुर्विधमन्नं क्रमेणाभ्यवहार्यं द्रव्यं पचामि, परिणामं प्रापयामि। जाठरस्याग्नेः सकलशरीरविभक्तात्मतया वर्तमानस्य समस्तान्नरसपाचिका सर्वप्राणिजीवनहेतुर्या शक्तिः सा ममैवैकस्य शक्तिमतः संबन्धिनीति सप्तमाध्यायादावुक्तन्यायेन प्रतिपादितैवात्रोपपत्तिः॥

किंच बहुना,

> सर्वस्य चाहं हृदि संनिविष्टो
> मत्तः स्मृतिर्ज्ञानमपोहनं च।
> वेदैश्च सर्वैरहमेव वेद्यो
> वेदान्तकृद्वेदकृदेव चाहम्॥ १५॥

[ शां. पा. १–वेदविदेव. ]

सर्वस्य कस्यचित्प्राणभृतोऽहमेकः परमात्मा हृदि सर्ववस्तुसंवेदनादिकरणभूते शरीरैकदेशे संनिविष्टः, सर्वार्थसंवेदितृतया कृतास्थितिः। अतो मत्तो मत्सकाशादेव नान्यतः कुतश्चित्सर्वक्षेत्रज्ञानां स्मृतिर्ज्ञानमपोहनलक्षणः शक्तिप्रसरः। किमनेनोक्तं भवति। इह सर्वक्षेत्रज्ञानां क्षेत्रविषयादिविभागविभक्तभावसंवेदकस्वभावानां संवेदनशक्तिस्तत्तत्पदार्थभावाभावपरिच्छेदकत्वाद् द्विधा प्रवर्तते। तथा हि–कदाचित्कस्यचिदपोहनरूपतया प्रसरति। भावकत्वेन च प्रसरो द्विप्रकारः- ज्ञानात्मकः स्मृत्यात्मकश्च। यद् भूतपूर्वस्य प्रकाशनं तज्ज्ञानम्। यदनुभूतपूर्वस्य प्रत्यवमर्शनं सा स्मृतिः। उभयथाऽपि प्रकाशनाभावस्त्वपोहनमिति त्रिप्रकारोऽप्ययं क्षेत्रज्ञशक्तिप्रसरः, संवेदकात्मकत्वात्परमार्थसंवेदितुरेकस्मान्मत्त एव प्रसरन्मायाशक्तिवशान्न क्षेत्रतया संबन्धतया प्रतीयत इत्यर्थः। अथ चैवं प्रसरो

---

१ राशा १·२–स्मृतिज्ञानापोहने°—. २ राशा १–‘ शक्ति ’ नास्ति.

मत्तः प्रसरतीति। यथा सकलजगत्प्रक्रियाप्रपञ्चप्रथनप्रथमकारणभूतः परापरतत्त्वरूपः शब्दराशिरपि मत्त एव । तेन चानन्तप्रपञ्चप्रसृतेनाप्यहमेवैको वेद्य इत्याह—वेदैश्च सर्वैरित्यादि। वेदा वर्णाश्रमविभागव्यवस्थितविविधक्रियानियामकशब्दराशिः, तस्यान्ते निष्ठो वेदान्तः, आत्मैव परमेश्वर एकं तत्त्वमित्यादिज्ञानव्यवस्थात्मको वचनप्रपञ्चः । तस्योभयरूपस्याप्यहमेवैकः कर्ता । इत्यनेन वेदवेदान्तात्मकशब्दस्य स्वतःसिद्धत्वं द्वैतवादव्यवस्थापितेश्वरप्रणीतत्वं च पराकर्तुमभिप्रेतम् । यतोऽयमत्राऽऽशयः । इहाहमद्वयचित्प्रकाशैकस्वभाव एकः पदार्थः परमार्थसन्नित्ययं तावत्सिद्धान्तो व्यवस्थापितः । स चैवंविधोऽहं येनाव्यभिचारिणा प्रत्यवमर्शात्मकेन धर्मेण तथाविधं स्वरूपं व्यवस्थापयामि तत्परं शब्दतत्त्वम् । तदस्य परमार्थतो मत्स्वरूपाभिन्नस्यापि मदिच्छोद्भावितेदंताभासमाननानाजगद्भावभेदव्यवस्थापकत्वेन विजृम्भमाणस्य तद्वदनन्तविकल्पात्मकं स्वरूपमपरं शब्दतत्त्वम् । तस्य चैवंविधस्य ज्ञानधर्मस्यैव विकल्पात्मकस्य श्रोत्रग्राह्यध्वनिविशेषात्मकतयाऽवभासितः पदार्थः संकेततया मयैव सत्यसंकल्पेन परमगुरुणा पूर्वेषामपि पूर्वेण परेण पुरुषेण मुख्यकार्यज्ञेयार्थविषयतया वेदवेदान्तरूपवाचकत्वेन प्रतिनियमितः । तादृगर्थवाचकत्वेन चावभासमानमेव वेदवेदान्तयोर्मत्कार्यत्वम् । तदनेनानन्तप्रपञ्चेनापि वेदवेदान्तप्राधान्यप्रतिपादितेन शब्दात्मकेन स्वशक्तिप्रसरेण नानावाच्यनिष्ठतयाऽवस्थितेनापि परमार्थतश्चिदात्मकमत्स्वरूपव्यतिरिक्तपदार्थान्तराभावादहमेवैको बोद्धव्य इति वेदैश्च सर्वैरहमेव वेद्य इत्यनेनोक्तम् ॥

तदित्थं स्थिते त्रिप्रकारः प्रमातृव्यवहारो व्यवस्थितः । तथा च भौतिकशरीरनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः स स्थूलः प्रमाता । यस्य च तादृक्शरीरभेदकतव्यतिरिक्तजीवनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः स सूक्ष्मः प्रमाता । द्वावेतौ भेदस्फुरणान्मायीयौ प्रमातारौ । यस्य पुनरशेषक्षेत्रव्यापकपरमार्थसंवित्प्रकाशैकस्वभावपरमार्थनिष्ठाहंनिबन्धनो भेदप्रतीतिकल्पनामात्रसंस्पर्शशून्यस्वरूपप्रत्यवमर्शमात्रात्मको व्यवहारः स परमार्थसत्यः परमपुरुषः । तत्स्वरूपसमापत्तिश्च परा सिद्धिरिति क्रमेण प्रतिपादयन्शास्त्रसिद्धान्तसंग्रहं प्रदर्शयितुमाह,

---

१ राना १—परा । इत्यादि ' अपि ' इत्यन्तं नास्ति. २ राशा १—तस्यान्तो. ३ राशा १—' अहं ' नास्ति. ४ राशा २ ना १—' ज्ञान ' नास्ति.

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात्क्षरमतीतोऽहमक्षरस्यापि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

[ शां. पा. १-अक्षरादपि. ]

यद्यप्यापातनिकयैव श्लोकचतुष्टयमेतद्व्याख्यातप्रायम्, तथाऽपि विस्पष्टार्थं व्याख्यायते । इह हि लोके परमेश्वरमायाशक्त्युद्भावितक्रीडामात्रपरमार्थे समस्ते जगति द्वावेव पुरुषौ । द्विप्रकारैव भेदनिबन्धव्यवहारा पुरुषजातिरित्यर्थः । अत एव तावन्योन्यभिन्नतया सर्वप्रमातृसंवेद्यस्वरूपत्वे सतीमाविति प्रत्यक्षनिर्देश-विषयेणेदंशब्देन निर्दिष्टौ । कौ तौ द्वाविति तयोः संज्ञामाह—क्षरश्चाक्षर एव चेति । तयोर्लक्षणमाह । एकस्तावत्क्षरः प्रतिक्षणविनश्वरजन्मादिविकारयोगिभौतिक-शरीरनिष्ठाहंकारात्मकत्वात्स्वरूपसंवलनशीलः । तथा हि शरीरगता जन्मादयो विकारास्तद्धर्मानुविधायिनि तद्व्यतिरिक्तस्वभावेऽपि तस्मिन्नुपचर्यन्ते । ततः सर्वाणि भूतानि क्षर इत्युक्तम् । तथा निर्विकारसंविन्मात्रनिष्ठत्वात्कूटस्थ-वत्पर्वतशिखरादिवन्निष्प्रकम्पतया स्थितः कूटस्थोऽत एव क्षरस्वरूपविपरीतत्वा-दक्षर इत्युच्यते । अनेन मध्यमा सूक्ष्मा दशा पुरुषस्य प्रतिपादिता । यस्यां ज्ञातृमात्रस्वरूपनिष्ठत्वात्क्षरस्वरूपज्ञेयशरीरधर्मानुविधायित्वं च नास्ति । पर-स्परभेदेन व्यवस्थिता नानाक्षेत्रज्ञप्रतीतिश्च न तावदुच्छिन्ना । एवं मायोद्भा-वितं पुरुषजातिद्वैविध्यं प्रतिपाद्य पारमार्थिकं परपुरुषस्वरूपं प्रतिपादयितुमाह, उत्तमः पुरुष इत्यादि । एताभ्यां क्षराक्षरशब्दप्रतिपादिताभ्यां पुरुषाभ्यामन्यः सत्यस्वरूपमात्रप्रतिष्ठितत्वाद्विलक्षणोऽत एवोत्तमः सर्वपुरुषातिशायिधर्मोऽत एव परमात्मा मायाहेतुकागमापायानित्यधर्मसामान्याधिकरण्याभावात्परमो निरु-त्तरः सत्य आत्मा चेतनोऽसावित्युक्तः । कोऽसौ ? यो निष्प्रतीघातस्वच्छ-न्देच्छापरिस्पन्दत्वादीश्वरः सन्निदं चराचरमनन्तभावमात्रं संततं लोकत्रयं

सकलं जीवलोकमाविश्य तथा प्रकाशकतया व्याप्य बिभर्ति धारयति । इत्थं स्थितिमनुभावयति । सामान्यसंवित्प्रकाशमात्रप्रकाश्यमानतामन्तरेण न कश्चित्पदार्थो न केनचित्पदार्थेनावस्थातुमलमित्यसकृदुक्तमेव । एतत्प्रकारेण लोकत्रयस्य चाव्ययमिति विशेषणं प्रवाहनित्यत्वादक्षयत्वविवक्षया बोद्धव्यम् । अत एव मायीयपुरुषवैलक्षण्यं प्रतिपादयितुमाह—यस्मादित्यादि । यतो हेतोर्यथाप्रतिपादितं स्वरूपं क्षरं स्थूलं पुरुषमतिक्रान्तोऽक्षरस्य सूक्ष्मस्य च यथाप्रतिपादितस्वरूपस्यासत्यभेदप्रत्ययाभावादुत्तम उत्कृष्टस्ततोऽन्वर्थया संज्ञया लोकशास्त्रयोः पुरुषोत्तम इत्यहं प्रतीतः । एवं च यथोक्तेन प्रकारेण यो योगी मामसंमूढः संदेहादिमोहरहितः सन्पुरुषोत्तमतया स जानात्यात्मत्वेन प्रत्यवमृशति, स विशेषितज्ञेयतत्त्वत्वात्सर्वभावेन सर्वात्मकत्वेन वास्तवेन भजति, सेवते । स एको मुख्यया वृत्त्या मद्भक्त इत्यर्थः । सर्वभावसंवित्स्रोतसां सामान्यसंवित्प्रकाशसागरसामरस्यानुभवलक्षणं विज्ञानं मद्भक्तेः परं रूपमुक्तम् । यदुक्तं स्तोत्रे केनचित्—

चित्प्रकाशपरामर्शशक्तिमूर्त्याऽवशिष्यते ।
अप्यद्वयदशोन्मेषे भव्यानां भक्तिरेव ते ॥ इति ॥

यथोक्तज्ञानफलनिर्देशेनाध्यायमुपसंहरन्नाह,

**इति गुह्यतमं शास्त्रं मया प्रोक्तं तवानघ ।**
**एतद् बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत× ॥२०॥**

**इति श्रीभगद्गीतासूपनिषत्सु पञ्चदशोऽध्यायः ॥ १५ ॥**

[शां. पा. १–इदमुक्तं मयाऽनघ. ]

[× २० तमश्लोकात्परं–' तावद्भ्रमति वै जन्तुर्यावत्तत्त्वं न विन्दति । जा(ज्ञा)ते तत्त्वे तु वै तस्य ज्ञातव्यं नावशिष्यते ' । इत्यधिकं कुत्रचित्. ]

इति यथोक्तेन प्रकारेण गुह्यतमं सर्वरहस्यातिशायि शास्त्रमिदं भवता प्रत्यक्षानुभूतफलं मयाऽभिहितम् । नातःपरं वक्तव्यमस्तीत्यर्थः । अत एवाऽऽह, एतद् बुद्ध्वा च बुद्धिमन्तः प्रमातारः शरीरादिहेयवस्तुनिर्मग्नचित्तत्वात्तेषां तथा, एतदेवानुष्ठाय कृतकृत्यः पुरुषः स्यात् । कृतं निरवशेषितं कृत्यं यथा करणीयं येन स तथा । एतज्ज्ञानप्रतिपादितार्थानुष्ठानव्यतिरेकेण या काचित् क्रियाऽ-

१ राशा १–प्रकृष्टः. २ राना १–°सरित्स्रोत°:. ३ राना १–°न्मेषभवानां.

नुष्ठीयते तथा सम्यगनुष्ठितयाऽपि न कृतार्थः स्यात् । इति सर्वज्ञानानां सर्वक्रियाणां च यथोक्तज्ञाननिष्ठत्वेनानुष्ठितानां परमात्मस्वरूपसमापत्तिलक्षणपरसिद्धिसाधनत्वमित्योम् ।

ऊर्ध्वाधःक्लेशमूलाश्रितफलपदवीकर्मभूभूरिशाखा-
संतानव्यक्तसत्त्वाद्युपचितविषयव्रातपत्रौघचित्रम् ।
अश्वत्थं छेत्तुमेनं भुवनचयमयं तत्त्वदिग्व्यक्तिहेतोः
सन्तोऽध्यायेऽत्र शस्त्रं तपनत्रिगणिते बोधमुत्तेजयन्तु ॥

॥ इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे पञ्चदशोऽध्यायः ॥ १५ ॥

## ॥ अथ षोडशोऽध्यायः ॥

एवमस्य पञ्चदशाध्यायपर्यन्तशास्त्रोपनिषद्भूतस्य ज्ञानस्य पूर्वं,

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्तेऽनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ इत्यादि ।

तथा, मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥

इत्यादिना सर्गद्वयोद्घातेन विषयाविषयविवेचनादि यत्सूचितं, तदिदानीमनेनाध्यायेन वितत्य निर्णीतुं,

श्रीभगवानुवाच ।

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**
**अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।**
**दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम् ॥ २ ॥**
**तेजः क्षमा धृतिस्तुष्टिरद्रोहोऽनभिमानता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

[ शां. पा. १–त्यागः शान्तिः. २–अलोलुप्त्वम्. ३–घृतिः शौचं. ४–नातिमानिता. ]

---

१ राना १–कृतार्थी. २ राना १–आस्थिताः.

इह प्रथमाध्यायोपोद्घातप्रदर्शितविभागेन दैवस्याऽऽसुरस्य च सर्गस्यावान्तरभेद-परिकल्पनया यद्यपि बहवः प्रकारा उक्तास्तथाऽप्यधुना मोक्षैकनिष्ठताभिव्यञ्जक-गुणसामग्रीसंपन्नतरयोत्तमस्य दैवस्य सर्गस्य परापरभेदेन द्विप्रकारत्वं तावत्प्रति-पाद्यते । तत्राभयादयोऽनभिमानतान्ताः सप्तविंशतिर्गुणाः सामान्येन दैवीं संपदं दैवसर्गसंपत्तिं तदाभिमुख्येन तां स्वीकर्तुं जातस्य कर्मभूमौ लब्धजन्मनः पुरुषस्य भवन्तीति यद्यप्युक्तास्तथाऽप्यभयादयः प्रथमे चत्वारो गुणाः परां दैवीं संपदमभिजातस्य भवन्ति । दानादयस्तु विशेषा अपरामभिजातस्य भवन्तीति विशेषोऽत्र विवक्षितः । स तथैव व्याख्यायते । तत्राभयं सर्वतः कुतश्चेतनाचे-तनरूपाद्भावजाताद्यथोक्ताद्वयज्ञानप्रतिष्ठितबुद्धित्वे सत्यात्माभेदेन प्रतिपाद्य-मानाद्भयस्याऽऽत्मव्यतिरिक्तपदार्थाश्रयस्य प्रेप्सितविषयप्राप्तिविधानादिहेतोः सत्त्वस्याभावः । तच्च परमात्मस्वरूपसमापन्नकल्पस्य योगिनो भवतीति । यदु-क्तमुत्पलदेवपादैः[1],

> यो विकल्पमिदमर्थमण्डलं पश्यतीशनिखिलं भवद्वपुः ।
> स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥ इति ।

तथा तस्य कारणभूता सत्त्वशुद्धिः सत्त्वगुणप्रधानत्वात्सत्त्वशब्दवाच्यस्य चित्तस्य शुद्धिर्भेदमलप्रक्षालनाभ्यासान्नैर्मल्यम् । तथा तस्या अपि कारणभूता ज्ञाने यथाप्रतिपादितशास्त्रार्थबोधे व्यवस्थितिर्निरुपप्लवा प्रतिष्ठा । तथा तद्धेतौ योग-शास्त्रचोदितस्वकर्मानुष्ठानलक्षणे परस्मिन्समाधौ व्यवस्थितिस्तथैव निर्विघ्नवा प्रतिष्ठा । इत्येते परां दैवीं संपदमभिजातस्य योगिनो धर्माः संभवन्ति । स ह्यारूढदशां प्राप्तः । अथ दानं स्वद्रव्यस्य पर[स्व]त्वापादनम् । तच्च द्विप्रकारम्—करुणामात्रहेतुकं दीनाद्यर्थिजनविषयत्वेनाविशेषप्रवृत्तिकमेकम् । शास्त्रचोदित-विधिविशेषसंपत्तये विशिष्टेतिकर्तव्यतासंस्कृतं पात्रदेशकालादिविशेषमपरम् । तथा दमः, शास्त्रविरुद्धेभ्योऽर्थेभ्य इन्द्रियाणां बाह्यान्तरागां निग्रहः । तथा यज्ञो वर्णाश्रमक्रमे विभक्तो नित्यनैमित्तिकभेदेन द्विविधो विशिष्टदेवतायागः । तथा स्वाध्यायो यथास्वमध्येयत्वेनोपदिष्टस्य शास्त्रस्य मन्त्रादेर्वाऽध्ययनमभ्यासेन बोधः । तथा तपस्तथैव नित्यनैमित्तिकभेदेन शास्त्रीयनियमपूर्वं क्षुत्तृष्णादिसहि-ष्णुतया शरीरतपनम् । तथाऽऽर्जवमृजुत्वम् । प्रकृतिसरलत्वं[2]ब्रह्मांशकालपुरस्तन-

---

१ राशा २ ना १–'उत्पलदेवपादैः' नास्ति. २ राशा १–ब्रह्ममाकालम्भनत्वात् (?).

त्वात् । समस्तकायवाक्चित्तसाध्यक्रियाविशेषसाफल्यैककारणमकौटिल्यम् । तथाऽहिंसा शास्त्रनिषिद्धायाः प्राणिवधादिक्रियायाः कामक्रोधलोभहेतुकायाः कृतकारितानुमोदितादिविशेषपरिशुद्धं परिवर्जनम् । तथा सत्यमात्यन्तिकभूतहितसंपादनाभिसंधिपरिशुद्धे यथादृष्टानुमितार्थकथनम् । अक्रोधो हिंसानिष्पत्तिहेतोर्विवेकहारिणः कोपाख्यस्य चित्तक्षोभस्याभावः । त्यागो दानस्योक्तत्वात्तत्क्रियाफलाभिसंधेः परिहारः । असक्तिः शास्त्रविहितसेव्येष्वनिमग्नचित्तत्वम् । अपैशुनं, पिशुनः परदोषसूचकस्तस्य भावः पैशुनम्, तदभावो राजादिविषयेद्वेषात्परावद्यनिष्करणाभावः । अथ दया भूतेषु सर्वप्राणिषु क्लेशापन्नेषु तदुज्जिहीर्षया करुणा । तथाऽलौल्यम् । लोलो निषिद्धविषयेषु लम्पटत्वं लौल्यम्, तदभावोऽलौल्यम् । तेष्वप्रवृत्तिरित्यर्थः । निषिद्धेषु विषयेषु प्रवृत्तावपि सत्यां रागद्वेषराहितत्वेन भाव्यम् । तथा मार्दवं मृदुषु निखिलेषु भूतमात्रेषु स्वात्मरूपेश्वरत्वभावनयाऽतिकोमलान्तःकरणः । तस्य भावो मार्दवम् । तथा ह्रीर्लज्जा । अस्मिन्निषेविते साधुजनो मां विगर्हेदित्याशङ्कया दुश्चिन्तितदुर्वचनदुश्चेष्टितेषु जुगुप्सितेति यावत् । तथा चापलम्, चपलः सत्कार्येष्वस्थिरः, तस्य भावश्चापलम् । तदभावोऽवश्यकरणीयेष्वप्रमत्तत्वमित्यर्थः । तेजः परानभिभवनीयकारणत्वं स्वाभाविकमोजः । तथा क्षमा तेजस्वित्वे सत्यपि परापराधसहिष्णुता । धृतिरवसादहेतौ संनिहितेऽपि स्वपरिस्पन्दाच्यवनलक्षणं धैर्यम् । तथा तुष्टिः सर्वथा सर्वदा विषाददोषानाक्रान्तचित्तत्वम् । तथाऽद्रोहः प्राणिनां हननविषयाया इच्छाया अप्यभावः । तथाऽभिमानिता, मानो देहादिष्वनित्येष्वहंकारः, तथा परतन्त्रेषु भोगेषु ममकारः, स सर्वदा निश्चलत्वादतिशयवानभिमान उच्यते । तदभावोऽनभिमानः । स च मुमुक्षूणामेव संभवति । ते हि यथोक्ताभिमानमहादोषोच्छेदनित्योदात्ता भवन्त्यत एव च तस्मिन्सति दानादयो धर्मा दैवसंपदभिव्यक्तिहेतवः संपद्यन्ते । इति सर्वेषां संस्कारकत्वेन तस्य पर्यन्ते निर्देशः कृतः ।

---

१ राना १-°शून्यम्. २ राशा १-तथा. ३ राशा १-°व्रातेषु. ४ राशा १-°मत्ततेत्यर्थः- ५ राशा १-°नीयत्वकारणं. ६ राना १- सुपरि—. ७ राशा २ ना १-हवन°. ८ राशा २ ना १-अति°-अतिमानः-नातिमानिता; मूलपाठस्य शां. पाठानुसारेण शुद्धिः ?. ९ राशा २ ना १-'च तस्मिन्' स्थाने 'सर्वस्मिन्'

एवं मुमुक्षुजनाव्यभिचारिणीं दैवसर्गाभिव्यञ्जकां परापरां गुणसामग्रीं प्रतिपाद्येदानीं तथैव द्विप्रकारस्य तद्विपरीतस्याऽऽसुरस्य सर्गस्य तां क्रमेण प्रतिपादयति। दैवसर्गवत्परापरभेदेनाऽऽसुरोऽपि सर्गो द्विप्रकारो विवक्षितः। तत्र तमोगुणप्रधानो नरकतिर्यग्योनिपातहेतुः परः, कर्माधिकृतपुरुषात्मकोऽपर इत्यस्याग्रे विस्तरेण विशेषणानि वक्ष्यति। संप्रति सामान्यगुणोद्देशद्वारेणाऽऽसुरीं संपदं प्रतिपादयितुमाह,

**दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

[ शां. पा. १–दर्पोऽभिमानश्च. ]

एते धर्मा आसुरीं रजस्तमःप्रधानत्वादासुरशब्देनोक्तां संपदं शरीरादिसंपत्तिमभिमतां स्वीकर्तुं जातस्य कर्मभूमावुत्पन्नस्य पुरुषस्य भवन्ति। तत्र दम्भो दृष्टमात्रपरतया श्रद्धारहितचित्तत्वेन नानाविधधर्मक्रियाचरणम्। दर्पः स्वगुणसंभावनया हर्षमोहात्मकश्चित्तविकारः। अभिमानात्मा ख्यातः। क्रोधो हिंसाहेतुर्विकारः। पारुष्यं वाक्चित्तचेष्टानां रूक्षता। अज्ञानं ज्ञानस्य पदार्थतत्त्वबोधस्याभावो दम्भादिसर्वदोषहेतुभूतत्वात्सर्वेषामन्ते निर्दिष्टः। इत्येते रजस्तमःप्रभवा धर्मा आसुरं सर्गं सूचयन्ति ॥

एतयोः सर्गयोः फलं निर्देष्टुमाह,

**दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

एषा यथानिर्दिष्टा दैवी संपद्दैवसर्गनिवृत्तिर्विमोक्षाय संसारदुर्गापक्रान्तये। न हि यथोक्तगुणानुमितदैवसर्गभाग्विमोक्षमनवाप्य ततो निवर्तत इत्यर्थः। आसुरी पुनस्तद्विपरीता बन्धलक्षणा, तद्विपरीतफलैव। ततश्च त्वं दुस्तरात्संसारदुर्गात्कथमहमेवं मुच्येयेत्यात्मन्यसामर्थ्यजनितं शोकं मा कार्षीः। यतो यथोक्तलक्षणसंवादाद्दैवीं संपदमभिजातोऽसि ॥

अथ द्विविधत्वमेवं सर्गस्य कर्माधिकृतं जनं प्रति नियमितुमाह,

---

१ राशा २ ना १–अति°.

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।**
**दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

[ शां. पा. १-विस्तरशः ]

यथाप्रतिपादितेन विभागेन द्वौ, द्वावेव न तृतीयो भूतानां कर्मभूमिजन्मनां पुरुषाणां सर्गौ प्रादुर्भावौ । कौ तौ ? दैव आसुर एव च । तत्र सत्त्वगुणप्रधानत्वाद्देवसंबन्धिसर्गसदृश उपचाराद्दैवशब्देनोक्त एकः । तथा रजोगुणप्रधानत्वादासुरसंबन्धिसर्गसदृशस्तथैवोपचाराद् द्वितीयः । तयोर्मध्याद्दैवः परापरगुणप्रतिपादनमात्रेणोद्दिष्टो न तु विस्तरेण गुणप्रतिपादकक्रमेण वितत्य प्रतिपादितः । आसुरस्तु सामान्यतः प्रतिपादितः, तमिदानीं कथ्यमानमवधारय ॥

तत्रापरस्य तावदासुरस्य सर्गस्य स्वरूपमाह,

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ ७ ॥**
**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥ ८ ॥**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९ ॥**

[ शां. पा. १-ते. २-किमन्यत्कामहैतुकम्. ३-°तोऽहिताः. ]

आसुरा उद्रिक्ततमसो जनाः प्रवृत्तिं संसारप्रवर्तनहेतुभूतं शास्त्रचोदितं कर्म न विदुर्न जानते, न च निवृत्तिं संसारनिवर्तनहेतुभूतं ज्ञानादिसंस्कृतं कर्म । ते स्वर्गापवर्गलक्षणफलनिरपेक्षतया दृष्टमात्रप्रयोजनं कर्माऽऽरभन्त इत्यर्थः । अत एव प्रवृत्तिनिवृत्तिसाधनानि तेषां न संभवन्तीत्याह—न शौचमिति । शौचं शास्त्रनियमितेतिकर्तव्यतासंपाद्यं शुचित्वं, कायचित्तयोः शुद्धत्वं तेषां नास्ति । नापि चाऽऽचारः शास्त्रनियमितं वाङ्मनःकर्मभिर्विशिष्टमाचरणम् । न च सत्यमुक्तलक्षणं यथादृष्टानुभूतार्थकथनम् । सर्वत्र यथेष्टचेष्टा एव इत्यर्थः । कुत एवम् ? यत इदं जगज्जीवलोकं शास्त्रीयमर्यादया वर्तमानमसत्यमवस्तुभूतमाहुः । अतश्च तत्स्थित्यर्थं शास्त्रेण शौचादिमर्यादा या स्थापिता सा मुग्धप्रतारणामिति ते कथयन्तीत्यत एवाप्रतिष्ठितं त एतदाहुः । नाप्यस्य निसर्गासत्यरूपस्य शौचादिः

---

१-' मात्रेणेत्यादि, 'पादक इत्यन्तं ' राशा १ नास्ति; राशा २ प्रान्ते लिखितम्.

प्रतिष्ठा स्थितिः कर्तुं शक्येत्यर्थः । अनीश्वरं चैतदाहुः—नास्य कश्चिदीश्वरो नियन्ता संभवति, यत्प्रणीतशास्त्रचोदिताः शौचादयोऽनुष्ठेया भवेयुः । अपरस्पर-संभूतं, भावानामन्योन्यकार्यकारणभावो यः प्रत्यक्षदृष्टः शास्त्रेण वा व्यवस्थापितः, तं ते नास्तिकाः स्वभावमात्रवादिनो नेच्छन्ति । सर्वः कश्चिद्भावः स्वयमुत्पद्यते, स्वयं च विनश्यति, न कारणान्तरमपेक्षते, इत्यपरस्परसंभूतमिदं सर्वमाहुः । तथाऽकिंचित्कमविद्यमानं किंचित्सत्यरूपमंशमात्रमपि यस्य तत्तादृशमाहुः । अत एवाहेतुकम् । स्वकर्माधिकारणरहितम् । तेषामेवंविधानां लोकायतिकादीनां तामसानां व्यापारमाह- ते ह्येतामेवंविधामीश्वरकर्मपरलोकाद्यभाववादमयीं दृष्टिं नास्तिकदर्शनमवष्टभ्य गाढमवलम्ब्य[1] नष्टात्मनो नष्ट आत्मा सत्त्वेवादर्शनं प्राप्तः परमार्थसत्याश्चिद्रूपः पदार्थो येषां ते तथा । त एवाल्पबुद्धयोऽल्पशास्त्रविषयदर्शित्वात्परिमिता बुद्धिर्धीर्येषां ते तथाविधाः सन्त उग्रैककर्माणो दारुणव्यापारा आत्मनो जगतो जीवलोकस्य क्षयाय विनाशाय प्रवर्तन्ते, तदर्थमेव कर्माणि कुरुते । किमुक्तं भवति । त एवंविधा नास्तिका यानि कर्माणि कुर्वते तेषां नरकतिर्यक्स्थावरादिभावपरिणामः फलम् । न ते पुनः कर्मभूमौ पुरुषयोनिमासादयन्तीत्यर्थः । अत एवाशुभाः पापात्मकाः ॥

एवमुद्रिक्ततरतमस्कस्यासुरसर्गस्य स्वरूपं प्रतिपाद्येदानीमुद्रिक्तरजस्कस्यापरस्य तत्प्रतिपादयितुमाह,

**काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः ।**
**असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः ॥ १० ॥**

[ शां. पा. १—दम्भमानमदा°. २—मोहाद् गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचि°. ]

अन्य आसुरजना एवंविधाः प्रचरन्ति व्यवहरन्ति । किं कृत्वा । दुष्पूरं दुःखेन पूरयितुं[पूर्ण]कर्तुं न शक्यं कामं विषयतृष्णात्मकं संकल्पमाश्रित्यावलम्ब्यात एव दम्भेनोक्तलक्षणेन लोभेन गर्वेण मदेन चित्तोद्रेकेणान्विता अनुगता व्याप्ताः । तथाऽसद्ग्रहाश्रितास्तथाविधदुष्टाभिनिवेशावलम्बिनः । ततश्च क्रूरा हिंसादिषु निरपेक्षाः । तथाऽशुचिव्रता अशुचीनि शास्त्रपरिदृष्टनियमाप्रवर्तनेन नान्तःशुद्धानि तानि तानि काम्यानि व्रतनियमविशेषा येषां ते तथोक्ताः । किमुक्तं

---

[1] राशा १—'आत्मनो' नास्ति,

भवति । रजःप्रधानत्वाद् व्रतादिरूपं कामनानिमित्तकं कर्माऽऽरभन्ते तमोनुगतत्वात्तेषामशुचिर्भवेत् । दम्भादिदोषान्विताश्च ते भवन्ति ॥

किंच,

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥**

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थानन्यायेनार्थसंचयान् ॥ १२ ॥**

[शां. पा. १–°भोगार्थम्.]

त एवंविधा अर्थसंचयान् धनसमृद्धीरीहन्ते चेष्टन्ते । कीदृशान् । कामभोगार्थान्विषयास्वादप्रयोजनान् । कथमीहन्ते ? अन्यायेनान्यायः शास्त्रीयाधिकारिदेशकालावस्थाद्यपेक्षमुख्यकल्पानुकल्पविहितस्ववृत्तनियमस्तं विना । कीदृशाः सन्त एवं कुर्वन्ति ? चिन्तामर्थार्जनविषयं ध्यानमपरिमेयां तत्तृष्णाया आनन्त्याद्बहुविधान् । किंतु प्रलयान्तां, प्रलयो विनाशः शरीराभावोऽन्तोऽवसानं यस्यास्तां तादृशीमुपाश्रिता आलम्बितवन्तः । तथा कामोपभोगपरमाः, काम्यन्त इति कामानि विषयसुखानि तेषामुपभोगः सततमनुभवनं परमः फलत्वेन प्रकृष्टो येषाम् । अत एव च तावत्कामोपभोगमात्रमिह सार इति निश्चिता निःसंशयबुद्धयः । अत एव तद्विषयाभिराशाभिर्मनोरथैरेव पाशशतैर्बन्धनरज्जुसमूहैर्बद्धाः संयता विघ्नितविषयान्तरस्वातन्त्र्याः । तच्च कामक्रोधरागद्वेषाविष्टानिष्टविषयौ परायणमाश्रयो येषां ते तथाविधाः ॥

किंच,

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥**

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

[शां. पा. १–इमम्.]

---

१ राशा १–भवति. २ राशा २ ना १–°कालानु°. ३ राना १–पापशतैः.

**अनेकचित्तविभ्रान्ता मोहस्यैव वशं गताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति निरयेऽशुचौ ॥ १६ ॥**

[ शां. पा. १–°चित्त°. २–मोहजालसमावृताः. ३–नरके. ]

इत्येवंविधेनाज्ञानेन तत्त्वार्थावबोधाभावेन विमोहिता वैचित्त्यमापादिताः सन्तोऽशुचावत्यन्तामेध्ये निरये गर्भवासादौ नियतं निमज्जन्ति, पुनः पुनर्जायन्त इत्यर्थः । कीदृशेनाज्ञानेन? अद्यास्मिन्दिने तावदिदं धनादि वस्तु मया लब्धं, स्वीकृतम् । इदं च मे चेतसि स्थितं मनोरथमभिलषितं वस्तु प्राप्स्ये, इदानीमभिगमिष्यामि । इदं तावद्धनं सुवर्णाद्यस्ति, विद्यते । इत्थमित्थं चान्यद्रत्नादि भविष्यति स्वत्वमापत्स्यते । तथाऽसौ कश्चिद्रिपुर्व्यापादितोऽपरानपि तैस्तैरुपायैर्व्यापादयिष्यामि । तथाऽहमीश्वरो द्रव्यपुरुषादीनां स्वामी । तथाऽहं भोगी विषयसुखानुभविता । सिद्धो लब्धप्रतिष्ठोऽहम् । तथा बलवान्सामर्थ्ययुक्तोऽहम् । तथा सुखी स्वीकृताभिलषितविषयः । तथाऽऽढ्यो धनवान् । अभिजनवान्कुलीनोऽहम् । किं बहुना । कः परो मया तुल्यो विद्यते । तथा यक्ष्ये यज्ञानाचरिष्यामि । तथा मोदिष्ये हर्षमनुभविष्यामीत्येवंविधैर्भूतवर्तमानभविष्यत्कालभाविषु शरीरविषयादिष्वनित्येषु भावेषु विकल्पैरनेकं प्रतिक्षणं विद्यमानत्वाद्बहुरूपं चित्तं येषां ते तथा । अत एव विभ्रान्तास्तत्त्वावगमाभावाद्विशेषेण भ्रान्ता अनवस्थिताः । यतो मोहस्यैव तमोरूपस्याज्ञानस्य वशं गतास्तत्पारतन्त्र्यं प्राप्ताः । ततश्च कामानां शब्दादिसुखानां भोगेऽनुभवे प्रसक्ता अत्यन्तपरत्वरूपेण प्रकर्षेण सक्ता निमग्नचित्ताः ॥

किंचँ,

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**
**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

ते पूर्वोक्तविशेषणा रजस्तमःप्रधाना आसुरसर्गभाजो यजन्ते नाम । नामशब्दोऽलीकपर्यायः। तेनालीकमेव निष्फलमेव यजन्ते यागक्रियामनुतिष्ठन्तीत्यर्थः।

---

१ राशा १–'नियतं' स्थाने निपतन्ति. २ राना १–°पुनोजा°. ३ राना १–आप्स्यते. ४ राना १–'किंच' नास्ति.

कुतो निष्फलमेव। यत एवंविधाः सन्तो दम्भेनोक्तलक्षणेन व्याजेन शास्त्रोक्तं विधिं परित्यज्य यजन्ते। किंविधाः सन्तः? आत्मसंभाविताः। आत्मनैव स्वयमेव संभाविताः। वयमेवंविधगुणविशिष्टा इति गृहीताभिमानाः, न तु गुणदोषविचारनिपुणेन परेण केनचित्संभाविताः। तथा स्तब्धाः प्रणतिविषये प्रह्वत्वरहिताः। यतो धनसमुत्थाभ्यां[1] मानमदाभ्यामहंकाराभ्यां युक्तास्तथाऽहंकारादीनाश्रिता इति गतार्थम्। तथाविधाः सन्तो मां परमात्मानं सर्वगतमज्ञानमोहितत्वादप्रत्यवमर्शेन प्रद्विषन्तोऽप्रीतिहेतुत्वेनाध्यवस्यन्तः। यतोऽभ्यसूयका नास्तिकत्वान्निन्दापराः॥

एवंविधान्,

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभास्वासुरीष्वेव योनिषु॥ १९॥**

[ शां. पा. १–अशुभान्. ]

तान्पुरुषापसदान्[2]क्रूरान्दारुणाचारान्नास्त्यात्मा[3], नास्तीश्वर इत्यादिना मां द्विषतो मां प्रत्यप्रतीतिं चित्तवाक्[4]चेष्टाभिः प्रथयतः सतोऽजस्रं नित्यमेव संसारेषु कर्मभूमिषु तासु दृष्टकर्माधिकारहेतुत्वादशुभासु पापात्मिकासु योनिषु गर्भवासेषु क्षिपामि न्यस्यामि[5]। ते नास्तिकत्वदुष्टसंकल्पाः सन्त एवंविधाः पुनः पुनर्जायन्त इत्यर्थः॥

ते च,

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥ २०॥**

एवंविधा एते जना आसुरीं यथोक्तां योनिं जन्मभूमिं भूयो भूयः प्राप्ताः प्रतिजन्म पूर्वसंस्कारदाढर्यान्मूढा ज्ञानरहिताः सन्तो मां परमात्मानमनधिगम्यैव ततो योनेरन्यामधमां निकृष्टां गतिं यान्ति प्राप्नुवन्ति। तस्मात्त एवंविधास्तां प्राप्नुवन्तीत्यर्थः॥

इत्याह,

---

१ राशा १–धनात्समुद्धताभ्यां. २ राना १–°पशब्दान्. ३ राना १–आत्मनः. ४ राशा २ ना १–'चित्तवाक्' स्थाने 'दत्त्वा'. ५ राशा १–त्यजामि; प्रान्ते 'न्यस्यामि'.

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥**

[ शां. पा. १–त्यजेत्. ]

आत्मनः परस्य तत्त्वस्य नाशनमदर्शनकारणं, येन हेतुभूतेनाऽऽत्मा नश्यति, न दृश्यते, तत्त्रिप्रकारम्। नरकस्य कर्मफलभोगेनोभयप्रकारस्य निरयस्येदं द्वारं प्रवेशकर्मकृत्। कामः सुखानुशायी रागलक्षणः क्लेशस्तथा क्रोधो द्वेषलक्षणस्तथा लोभ उत्तरोत्तरं विषयेषु गर्द्धः। यत एते सर्वे आसुरा जना एतैः कामादिभिर्युक्ताः सन्तो मामप्राप्यैव एव दुर्गतिं गच्छन्ति। तस्माद्धेतो-स्त्वमेतत्त्रयं त्यज परिहर। दैवसर्गसंभवत्वादेतद्युक्तमात्मानं माऽवमंस्था इत्यर्थः॥

यस्मात्,

**एतैर्वियुक्तः[1] कौन्तेय तमोद्वारैस्त्रिभिर्नरः।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥**

[ शां. पा. १–विमुक्तः. ]

एतैः कामादिभिर्गुणात्मकैर्दोषैर्निर्गुणस्वभावेन निसर्गशुद्धेनाऽऽत्मनाऽत्यन्ता-संबद्धैरज्ञानोपलक्षणतिमिराविर्भावमार्गैस्त्रिभिर्वियुक्तो हेयतया प्रतिपन्नैः सद्भिः पृथग्भूतैर्नरो मुमुक्षुर्दैवसर्गभाक्पुरुषो हितं यथोक्तं ज्ञानकर्मानुष्ठानरूपमाचरति। ततः परां प्रकृष्टां परमात्मसमापत्तिरूपां गतिं सिद्धिमाप्नोति॥

एवंविधस्य च श्रेयश्चरणं शास्त्रोक्तविधानरूपमतस्तत्परेण भवितव्यमित्याह,

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

यः पुरुषस्तत्फलनिष्पत्तिहेतुं तत्तत्क्रियादिविषयं शास्त्रेण चोदितं विधिं तत्तदितिकर्तव्यतारूपं विधानमुत्सृज्य तदस्य कामकारतः[5] स्वाच्छन्द्याद्वा वर्तते व्यवहरति, सोऽनारब्धफलनिष्पत्तिरूपां सिद्धिं लभते। ततश्च तत्फलभूतं[6] सुखं स्वर्गादिभोग्यां निर्वृतिमपि न लभते, न च परां गतिमपवर्गलक्षणां लभते॥

१ राशा १–कर्मभूमिभेदेन द्विप्र°. २ राना १–' कर्म ' नास्ति. ३ राना १–°त्तरेषु. ४ राना १–' गर्द्धः ' स्थाने ' रागः '. ५ राना १–°चारतः. ६ राना १–' भूतं ' नास्ति.

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**कृत्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु षोडशोऽध्यायः ॥ १६ ॥**

[ शां. पा. १-ज्ञात्वा. ]

तस्मादुक्तात्कारणादिदं कार्यमिदं न कार्यमिति व्यवस्थायां शास्त्रमेवैकं ते प्रमाणम् । शास्त्रं हि नाम सदा साक्षात्कृतयथास्थितार्थतत्त्वस्य परमगुरोः परमात्मनः परस्याऽऽप्तस्य वचनम् । अतस्तदेवाविसंवादत्वात्प्रमाणं कृत्वा शास्त्रोक्तेन विधानेन चोदितं कर्म त्वमिह कर्मभूमौ कर्तुं स्वजातिविहितकर्मानुष्ठातुमर्हसि[1] ॥

इति श्रीराजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्र-
नाम्नि भगवद्गीताविवरणे षोडशोऽध्यायः ॥ १६ ॥[2]

**॥ अथ सप्तदशोऽध्यायः ॥**

तदनेनेदमुक्तम् । अपर्यालोचितसकलशास्त्रपौर्वापर्येण शास्त्रैकदेशमात्रमाश्रित्य युद्धलक्षणस्वकर्मपरित्यागाय द्वितीये यदुपन्यस्तं त्वया तच्छास्त्राभासत्वादशास्त्रमेव । अतो यथाप्रतिपादितशास्त्रनिश्चयावहितेन त्वया भवितव्यमिति सिद्धान्त उक्ते संशयानः,

**अर्जुन उवाच ।**

**ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयाऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

[ शां. पा. १-यजन्ते. ]

ये केचित्कर्मणि शास्त्रोक्तं विधिं परित्यज्य श्रद्धया निर्विकल्पफलसंभावनया

---

१ राशा २ ना १-°वादकत्वात्. २ इतःपरं, राशा १-" श्लोकः पतितः । इति श्रीराजानक° " इत्याद्यध्यायसमाप्तिदर्शिका पुष्पिका दृश्यते । साऽपि पश्चादुत्कीलिता; राशा २ कोशे २४ श्लोकसमनन्तरमेव—' इति श्रीभगवद्गीताविवरणे षोडशोऽध्यायः ' इति; राना १ पाठे तु सप्तदशाध्यायादौ ' अर्जुन उवाच ' इत्यतः परं षोडशाध्यायटीकासमाप्तिः पुष्पिकया दर्शिता-एवं त्रिष्वपि कोशेषु विसंवादः । तदस्मिन्विषये विवरणं ' भूमिकायां ' द्रष्टव्यम् ।

व्याख्यातलक्षणयाऽन्विताः सन्तो वर्तन्ते, क्रियासु व्यवहरन्ति, तेषां का निष्ठा, का सिद्धिः, किं सत्त्वं, का सात्त्विकी शुद्धिस्तेषामित्यर्थः । आहोस्विद्रजो राजसी, अथ किं तमस्तामसी ? ॥

अत्रोत्तरम्,

**श्रीभगवानुवाच ।**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।**
**सात्त्विकी राजसी चैव तामसी चेति ताः[1] शृणु ॥ २ ॥**

[ शां. पा. १–ताम्. ]

यथा श्रद्धयैव केवलयाऽन्वितानां सिद्धौ त्वं संशयितः सा त्रिविधा भवति । तद्यथा—सात्त्विकी राजसी तामसी चेति । यतो देहिनां मायोद्भावितनानादेहाहंप्रत्ययनिबन्धभेदानां जीवानां स्वभावजाऽसौ । ते हि दैवासुरसर्गभेदेन प्रतिपादितस्वरूपाः । तत्र दैवसर्गभाजां सात्त्विका[1]: सत्त्वादारूढाः । सत्त्वगुणहेतुकः स्वभावः स्वरूपं तेषां श्रद्धा तादृश्येव । तथाऽऽसुरसर्गभाजां रजस्तमोगुणप्राधान्यात्तद्धेतुको द्विप्रकारः स्वभावः, राजसस्तामसश्च । श्रद्धाऽपि तेषां तादृश्येव । तेनेदमुक्तं भवति । सात्त्विकस्वभावानां सात्त्विकी श्रद्धा, सा शास्त्रविध्युपपन्नैव भवति । या तु राजसस्वभावानां सा राजसी शास्त्रविध्याभासयुक्ता भवति, न सम्यग्विधानोपपन्ना । तामसी तु शास्त्रविधिहीनैवेति विभागस्य वक्ष्यमाणत्वात् । अतो या शास्त्रविधिहीना सा सात्त्विक्येव न भवति । या तु शास्त्रविधियुक्ता सा न राजसी भवति । नापि तामसी ॥

इत्येवं विभक्तस्वरूपास्ताः श्रद्धा मया विभज्योच्यमानास्त्वमवधारयेत्युपक्रम्य स्वभावश्रद्धयोरन्योन्यका[2]रणत्वं तावदाह,

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

इह सर्वस्य देहिनः समस्तस्य जीवस[3]र्गस्य सत्त्वानुरूपा स्वभावानुसारिणी श्रद्धा भवति । तेन यस्य सत्त्वं स्वभावश्चित्तं सत्त्वगुणप्रधानं भवति, तस्य सात्त्विकी श्रद्धा भवति । एवं रजोगुणप्रधानचित्तस्य राजसी, तमोगुणप्रधान-

---

१ राशा १–°काः सत्त्वादागतः. २ राना १–°कारणं. ३ राशा १–°वर्गस्य.

चित्तस्य तामसीत्यानन्त्येऽपि जीवानामपि त्रैविध्येन संक्षिप्योत्थाप्य वस्तुतः सत्त्वादीनां गुणानामंशांशकतया तारतम्याद्यथा जीवचित्तानामानन्त्यं तथा श्रद्धाया अप्यानन्त्यम् । तत्पूर्वकत्वेन चानुष्ठितानां कर्मणां फलस्याप्यानन्त्यम् । इत्थं श्रद्धायाः सत्त्वादिरूपत्वं व्याख्यातम् । इदानीं सत्त्वस्य स्वभावस्य श्रद्धानुरूपत्वं व्याचष्टे । अयं पुरुषो नानाकार्यकारणसंघातमात्रनिबद्धात्मस्वभावः श्रद्धामयः श्रद्धाप्रकृतिकः । ततश्च यः पुरुषो यच्छ्रद्धो या सात्त्विक्यादिका श्रद्धा यस्य स तादृशः स एव भवति । यस्य सात्त्विकी श्रद्धा स सात्त्विकः, यस्य राजसी श्रद्धा स राजसः, यस्य तामसी श्रद्धा स तामस इति । किमनेनोक्तं भवति । पूर्वं सत्त्वानुरूपं श्रद्धादि सर्वस्य भवतीत्युक्तम् । इदानीं तु श्रद्धानुरूपं सर्वस्य सत्त्वं भवतीति प्रतिपादितमतः श्रद्धासत्त्वयोः पुरुषगतयोः सात्त्विकत्वादावन्योन्यकारणत्वमनादिप्रबन्धप्रवृत्तमवस्थितमित्यत्र तात्पर्यम् ॥

तदेवं त्रिप्रकारायाः श्रद्धाया अभिव्यञ्जनं क्रियाविशेषमाह,

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**भूतप्रेतपिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥**

[ शां. पा. १-प्रेतान्भूतगणांश्चान्ये. ]

सात्त्विकाः सत्त्वगुणमयचित्ताः सत्त्वगुणमयांश्च देवानिन्द्राग्निप्रजापतिप्रभृतीन्यजन्ते, शास्त्रोक्तविधिपूर्वकं पूजयन्ति । एवं राजसा यक्षादीन् शास्त्राभासविधिपूर्वकं यजन्ते, तामसाश्च प्रेतादीनशास्त्रविहितेनैव यजन्ते ॥

एते च राजसास्तामसा आसुरा इति तेषां चेष्टितमाह,

**अशास्त्रविहितं घोरं तपस्तप्यन्ति ये जनाः ।**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**
**कर्शयन्तः शरीरस्थं भूतग्राममचेतनम् ।**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

[ शां. पा. १-तप्यन्ते ये तपो जनाः २-अचेतसः ]

तानेवंविधान्कर्मभूमिजन्मनः पुरुषानासुरनिश्चयान्विद्धि । आसुरो रजस्तमःप्रधानत्वादसुरसंबन्धी तत्सदृशो निश्चयो निष्ठा येषां तांस्तथाविधाञ्जानीहि । कांस्तान् ? ये जना घोरं दुःसहं चित्तशरीरक्लेशकारणत्वाद्दारुणं तपस्तप्यन्ते

---

१ राशा १-' स्व ' नास्ति. २ राशा १-°यन्ते. ३ राना १-' शरीर ' नास्ति.

विशिष्टफलसंधानेन नियमविशेषमाचरन्ति । कुतो दारुणमिति हेतुगर्भविशेषणमाह--अशास्त्रविहितमिति । शास्त्रेण सर्वदा सर्वविशिष्टजनगीतानुष्ठानेन वेदादिना विहितमनुष्ठितं शास्त्रविहितम् । एवं हि शास्त्रीयो विधिः--"यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा । तथा तपसि वर्तेत न मूढव्रतमाचरेत् ॥" इत्येवंविधहेतुनियमनैरपेक्ष्येण फलप्राप्तितृष्णास्त्वरितचेतसो राजसास्तामसाश्च मनीषिकयैव दारुणं तपश्चरन्ति । यतो दम्भाहंकारसंयुक्ता दम्भेनोक्तलक्षणेन दृष्टमात्रफलेन कर्मणा तथाऽहंकारोऽहं शास्त्रार्थं सम्यग्बुद्ध्याऽनुतिष्ठामि स शास्त्रार्थ इत्यात्मसंभावनाभिमानेन संयुक्ताः समन्विताः । तथा कामरागबलान्विताः कामेषु विषयभोगेषु रागोऽभिलाषस्तस्य बलमशास्त्रविहितक्रियाप्रवर्तने सामर्थ्यम्, तेनान्विता युक्तास्तेन घोरेण तपसा । किं कुर्वाणाः ? अचेतनं जडं प्राकृतं भूतग्रामं पृथिव्यादिसंघातं शरीरे देहे स्थितं तदधिष्ठातृभावेन वर्तमानं मामात्मानं कर्शयन्तस्तात्त्विकस्वरूपानवबोधेन क्षपयन्त इव । तेषां तथाविधानां दारुणस्य तपसो देहे चित्तव्यवधानमात्रमेव फलमित्यर्थः ॥

न केवलमेवंविधेन चेष्टितेनासुराणामेव स्वभावोऽनुमियिते यथावद्दैवस्याऽऽसुरस्य च सर्वस्य कस्यचिज्जन्तोराहारादिभिरपि क्रियाविशेषैर्दृष्टादृष्टफलविशेषैः स्वभावोऽनुमीयत इत्याह,

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

आहारादीनां त्रिविधत्वं सात्त्विकादित्रिविधपुरुषप्रियत्वात् । शिष्टं व्याख्यातप्रायम् ॥

अथैषां भेदकथनार्थमाह,

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥**

सात्त्विकादीनां सत्त्वगुणोद्रिक्तश्रद्धानां प्रिया अभिमता एवंविधा आहाराः । कीदृशाः ? आयुषो जीवितस्य सत्त्वस्य बुद्धेर्बलस्य सामर्थ्यस्याऽऽरोग्यस्य व्याधिरहितत्वस्य सुखस्य निर्वृतेः प्रीतेस्तृप्तेस्तत्कारणभूताया विवर्धनाः परिपोषका रम्या आस्वादनीयाः स्निग्धा बृंहणाः स्थिराः सारा हृद्या हृदयानुकूलाः ॥

---

१ राशा १–क्रियानुष्ठाने. २ राना १–सात्त्विक°. ३ राशा १–'यथावत्' स्थाने 'यावत्'.

अथ राजसप्रियानाह,

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥ ९॥**

[ शां. पा. १–हर्षशोका.° ]

राजसस्य रजःप्रधानश्रद्धस्येष्टा अभिमता एवंविधा आहाराः। कीदृशाः ? कट्वम्लं तिक्तरसा निम्बादयास्तिक्ते हि कटुशब्दव्यवहारो दृष्टो मुनिना,

यच्च निम्बं परशुना यच्चैवं मधुसर्पिषा।
यच्चैवं गन्धमालाभ्यां सर्वस्य कटुरेव सः॥ इति।

अम्लाश्चुक्राः, लवणाः क्षाराः अत्युष्णा उत्केटोष्णाः, तीक्ष्णा रूषणा मरीचादयो रूक्षाः स्नेहशून्याः, विदाहिन उष्णवीर्या अत एव मनःशरीरक्लेशहेतुत्वाद् दुःखयोर्यथानुशोचनयोरामयानां व्याधीनां धातारः॥

अथ तामसप्रियमाहारमाह,

**यातयामं गतरसं पूति पर्युषितं च यत्।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥ १०॥**

तामसस्य तमःप्रधानस्वभावश्रद्धस्यैवमशनमभिमतम्। कीदृशम् ? यातयाममतिक्रान्तबहुकालमुद्गतरसं विनष्टास्वादं, तथा पूति दुर्गन्धि, तथा पर्युषितमतिक्रान्तरात्रिकम्, यदभक्ष्यत्वेनोक्तम्। उच्छिष्टं दम्पातिभुक्तशिष्टम्। अन्येन वा जुष्टममेध्यम्। स्वभावादेवाशुद्धमशुद्धसंपर्काद्वा सात्त्विकस्याप्यवस्थावशात्कट्वादिराजसाहारप्रियता संभवतीति व्यवहारदर्शनात्स्वभावमात्रविषय एव विभागनियमो वेदितव्यः॥

इदानीं यज्ञादीनां त्रैविध्यमाह। तत्र यज्ञस्य तावत्,

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।**
**यष्टव्यमित्येव मनः समाधाय स सात्त्विकः॥ ११॥**

[ शां पा. १–°व्यमेवेति ]

स सात्त्विकः सात्त्विकपुरुषानुष्ठेयत्वात्सत्त्वहेतुको यज्ञो यागविधिरुच्यते। कोऽसौ ? फलं दृष्ट्वा दृष्टं सौभाग्यं काङ्क्षति प्रार्थयते यः स फलाकाङ्क्षी। तेन तथाविधेन निरभिसंधिना ज्ञानवता मुमुक्षुणा य इज्यतेऽनुष्ठीयते। कीदृशः ?

---

१ राना १–उत्कटकोष्णाः. २ राशा १–दातारः.

विधिदृष्टः, विधीयतेऽनेन कार्यमिति विधिः शास्त्रम् । तस्मिन्विधौ शास्त्रे दृष्टो विभावित इतिकर्तव्यतास्वरूपो फलाकाङ्क्षिणा चेज्यते चेति विप्रतिषेधं निराकर्तुमाह । कथमिज्यते ? यष्टव्यं वर्णाश्रमविभागेन शास्त्रचोदितं सहजं यागाख्यं कर्मावश्यं कर्तव्यमित्येवेति चित्तं समाहितं कृत्वाऽनन्तफललिप्सायाम् । यदप्युच्यते, न निष्कामस्य क्रिया संभवतीति । तत्र ब्रूमः--न हीच्छामात्रस्य प्रतिषेधो निष्कामता मता । किंतु दृष्टानुश्रविकभोगविषयसंकल्पविनिष्कामतेह विवक्षिता ॥

अथ राजसं यज्ञमाह,

**अभिसंधाय तु फलं दम्भार्थमपि चैव यः ।**
**इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥**

[ शां. पा. १–इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्. ]

तमेवंविधं यज्ञं राजसं रजःप्रधानबुद्धिना रजःप्रधानश्रद्धेन च कर्त्रा कृतत्वाद्रजोगुणात्मकफलमत एव चलम्। निश्चयाभावादव्यवस्थितम्। फलव्यभिचारादध्रुवमनावश्यकम् । कं तम् ? यः फलं स्वर्गादिभोग्यमभिसंधाय संकल्प्य, तथा दम्भार्थं, दम्भोऽदृष्टं सुखे कृत्वाऽदृष्टफलविषया क्रियाऽर्थः प्रयोजनं यत्र तथेज्यतेऽनुष्ठीयते ॥

अथ तामसमाह,

**विधिहीनममृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

[ शां. पा. १–असृष्टान्नं. ]

विधिहीनं शास्त्रोक्तेतिकर्तव्यतारहितं तथाऽमृष्टान्नममृष्टं पाकादिसंस्कारविरहाद्विरसमन्नादि यत्र । तथा मन्त्रहीनं, तत्तत्क्रियाविहितेन रहितम् । तथाऽदक्षिणं, दक्षिणालक्षणेन प्रधानेनाङ्गेन शून्यम् । तथा श्रद्धयोक्तलक्षणया विना कृतम् । एवंविधं यज्ञं तामसपुरुषकर्तृकमाहुः ॥

अथ सात्त्विकादिभेदेन तपसस्त्रैविध्यं प्रतिपाद्येदानीं शरीरादिभेदेन तावत्तस्य त्रैविध्यमाह । तत्र शरीरं तावत् ।

---

१ राशा १–°श्रविक°. २ राशा १–संकल्पाकोटिभावो नि°. ३ राशा १–पाद्यते ( 'इदानीं ' नास्ति ).

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

एतच्छारीरं शरीरसंबन्धि तपः कथ्यते । किं तत् ? देवादीनां पूजनं, शौचं मृज्जलादिना शरीरशुद्धिः, आर्जवं कायव्यापारविषयमकौटिल्यम् । ब्रह्मचर्यं प्रसिद्धम् । अहिंसा हननक्रियाभावः । पूजादीनां कायनिर्वर्त्यत्वात् शारीरमेतत्तपः ॥

अथ वाचिकम् ।

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**

वाङ्निर्वर्त्यत्वाद्वाक्प्रकृतिकम् । एतत्तप उच्यते । किं तत् ? स्वभावत एव माधुर्यादनुद्वेगकरं परस्याखेदावहं, तथा सत्यमवितथं सत्प्रियं मनोज्ञं हितं कल्याणपर्यवसायि, अर्थावसायि वचनम् । तथा स्वाध्यायस्य स्वशास्त्रपाठस्याभीक्ष्णमावर्तनम् ।

अथ मानसम् ।

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

एतत्तपो मनोनिर्वर्त्यत्वान्मानसमुच्यते । किंतु स्वस्वभावत एव रागद्वेषादिराहितत्वादकलुषचित्तत्वं सौम्यत्वं प्रशान्तता, मौनं यद्यपि मुनिभावो मुख्यया वृत्त्या तथाऽपि वाङ्नियमे रूढम् । तच्च संकल्पशुद्धिहेतुत्त्वान्मानसं तपः। तथाऽऽत्मविनिग्रहः, आत्मनोऽन्तःकरणस्य निषिद्धेभ्यो विषयेभ्यो विनिग्रहो नियमनम् । तथा भावस्याऽऽशयस्य संशुद्धिरार्जवादिः कलङ्काभावान्नैर्मल्यम् ।

अथ नैर्मल्यं त्रिविधमप्येतत्सात्त्विकादिभेदात्पुनस्त्रिविधमाह । तत्र सात्त्विकं तावत् ।

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥**

शारीरादिभेदेन त्रिविधमप्येतत्तप एवंविधं सत्सात्त्विकं भवति । कीदृशम् ?

---

१ राशा १–उच्यते. २ रामा १–किंतु देवा°. ३ राना १–°निर्वर्तकत्वात्. ४ राना ५–राना १–कल्याणम् ( पर्यव° नास्ति ).

श्रद्धयोक्तलक्षणया फलसंभावनया परया सात्त्विक्योपेतं युक्तम् । अत एव फलाकाङ्क्षारहितो युक्तैः समाहितैस्तपसा चरितम् ॥

अथ राजसम्,

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥**

तदिह तपो राजसं प्रोक्तम् । किं तत् ? यत्सत्काराद्यर्थं क्रियते, तत्सत्कारादीनां त्रयाणां मनोवाक्कायभेदाद्यथाक्रमं त्रित्वमवसेयम् । तेन परतः प्रसन्नचित्तात्सत्कारो बहुमानो मेऽस्तु तथाऽस्त्वित्यादिना वाग्व्यापारेण मानं तथा कायव्यापारेण पूजनं ममास्त्वित्येवमर्थं दम्भेनोक्तलक्षणेन यत्क्रियते तदेवमुक्तं चलमध्रुवमिति व्याख्यातम् ॥

अथ तामसमाह,

**मूढग्रहेणाऽऽत्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

[ शां. पा. १–मूढग्राहेण. ]

तत्तामसं तप उक्तम् । किं तत् ? यन्मूढग्रहेण मूढस्य कार्याकार्यविचारशून्यस्याज्ञस्य सतो यो ग्रहोऽभिनिवेशस्तेन कृतम् । तथा स्वचित्तस्य शरीरस्य पीडया कदर्थनेन यत्कृतं यन्निर्वर्तितं तथा परस्य द्वेषस्योत्सादनार्थं स्थानच्यावनादिसंपत्तये यत्कृतम् ॥

इति शरीरादिभेदेन त्रिविधस्य तपसः प्रत्येकं सात्त्विकादिभेदान्नवविधत्वं प्रतिपाद्येदानीं दानं त्रिविधमाह । तत्र सात्त्विकं तावत्,

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

तत्सात्त्विकं दानं सात्त्विकचित्तेन सात्त्विकश्रद्धावता च पुरुषेण निर्वर्तितत्वेन सात्त्विकशब्देनोक्तम् । किं तत् ? यदेवंविधेषु क्रियाविशेषेष्वधिकृत्य तेन मया तत्तदितिकर्तव्यतोपसंस्कृतं देयमेवेत्येतावदभिसंधाय दीयते । अनुपका-

१ राना १–' सत्कार ' स्थाने ' संकर '. २ राना १–त्यक्त्वाऽपव्या°. ३ राशा १–°हीनज्ञानस्य सतो.

रिणे, यस्माद् दृष्टविषयोऽदृष्टविषयो वा कश्चिदुपकारो नापेक्ष्यते । केवलं विद्यार्थानुष्ठानाङ्गतया यः स्थितस्तस्मै यत् दीयते । अत एव तस्य दानस्य विषयमाह--पात्र इति । जातिकुलविद्याकर्मपङ्क्तिपावनत्वादिशरीरगुणसंपन्नः पात्रमुच्यते । तद्विषयत्वेन यद्दीयते । तथा देशे पुण्यसरित्तीर्थायतनादौ, तथा काले विषुवद्ग्रहोपरागादौ यद्दीयते, तत्सात्त्विकं दानम् । नित्यनैमित्तिकक्रियाङ्गत्वेन व्यवस्थितविशिष्टविधिपूर्वकस्य दानस्य यज्ञेऽन्तर्भावात्पृथग्दाननिर्देशः पूर्तादिदानपरिग्रहार्थं वेदितव्यः ॥

अथ राजसम्,

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम् ॥ २१ ॥**

[ शां. पा. १–तद्दानं राजसं स्मृतम्. ]

तद्राजसं दानं स्मृतम् । किं तत् ? यत्प्रत्युपकारस्तदर्थं, यत्प्रयोजनं दीयते, प्रतीप उपकारः प्रत्युपकारः, तदर्थं तत्प्रयोजनतया, एतस्मादिहैव मे कश्चित्प्रत्युपकारः संपत्स्यत इत्यभिसंधाय यद्दीयते । तथा फलं वा पारलौकिकमुद्दिश्य संकल्प्य दीयते । कीदृशम् ? परिक्लिष्टं स्वल्पं कृच्छ्रप्राप्यं वा ॥

अथ तामसमाह,

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**

तत्तामसं दानम् । किं तत् ? देशकालपात्रहीनतयाऽसत्कारेणावज्ञया यद्दीयते, सात्त्विकविपरीतमित्यर्थः । तदेवं सात्त्विकानि यज्ञतपोदानानि देवसर्गाभिव्यञ्जकानीत्यत्र तात्पर्यम् ॥

ततश्चैते ब्रह्मप्राप्तिप्रसवमनसो दैवसर्गभाजो ये ते संसारबन्धाभिमुखचेतसस्तद्विपरीतवृत्तयः । तथोभयेषां यज्ञादिविषयां ज्ञानाज्ञाननिबन्धनत्वाद् द्विप्रकारां स्थितिं क्रमेण प्रतिपादयितुमाह,

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्रह्मणा तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

[ शां. पा. १–ब्राह्मणास्तेन ]

---

१ राशा २ ना १–°संपन्नं. २ राना १–°क्रियासङ्गत्वेन. ३ राशा १–प्रत्युपकारार्थं दीयते. ४ राना १–स कश्चिदुपकारः. ५ राना °सर्गव्य°.

इह ब्रह्मणः परमात्मलक्षणस्य परस्य तत्त्वस्य त्रिविधस्त्रिप्रकारो निर्देशः स्वरूपाभिधानं परमात्मविद्भिः स्मर्यते स्म। के ते त्रयः प्रकाराः? ॐ तत्सदिति। तत्रोमिति चित्प्रकाशमात्रस्य ब्रह्मस्वरूपस्य वाचकं पदम् । अनेन च पदेन तेनैव परमगुरुणा व्यस्तसमस्तरूपवाचकतया नियमितेन यथा तादृक्स्वरूपमभिधीयते तथामात्रतयाऽर्थमात्रव्याप्तिप्रदर्शनक्रमेण तत्र तत्र रहस्यशास्त्रे व्याख्यातमेतत् । तदनेन तस्य ब्रह्मणस्तादृक्स्वरूपप्रत्यवमर्शात्मकः सतताव्यभिचारी स्वधर्मोऽभिधीयते । न हि तस्य स्वसंवेदनमात्रस्वसंवेद्यस्य तदिति सर्वनामव्यतिरेकेण शब्दान्तरप्रतिपाद्यरूपं भवितुमर्हति । सदिति पदेनानन्यसाधारणताविद्यमानताशोभनतालक्षणब्रह्मणः स्वरूपमभिधीयते । तदेवं पदत्रयप्रतिपाद्यसकलस्वरूपेण तेन ब्रह्मणा परमेश्वरेण वेदाः समस्तक्रियाविषयविशिष्टेतिकर्तव्यताकलापवाचकाः समस्तदेशकालपुरुषाव्यभिचारिस्वरूपाः शब्दराशयस्तथा यज्ञवतामुपक्रमविभक्ता नित्यादयो यागक्रियाविशेषाः पुरा नित्यत्वात्सर्वदैव पूर्वकालं विहिता निर्मिताः । ततः सदा निर्मीयमाणत्वात्तेषां नित्यत्वम् ॥

यतश्चैवंविधस्य ब्रह्मण ओमित्येवमादयः शब्दा वाचकाः,

> **तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
> **प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**

तस्माद्धेतोर्ब्रह्मवादिनां तत्त्वमसीत्येवंवेदनशीलानां ज्ञानिनामित्येतन्मन्त्रपदं यथोक्तब्रह्मस्वरूपवाचकमुदाहृत्य विशिष्टेन समाधिनोच्चार्य यज्ञक्रियाः सततं प्रवर्तन्ते प्रसरन्ति । उदाहरणक्रियायागयजनादिक्रियापेक्षं पौर्वकाल्यमिति न भिन्नकर्तृत्वमत्रावसेयम् । कीदृश्यः क्रियाः? विधानोक्ता विधीयन्तेऽस्मिन्विविधा यज्ञादयो भावा इति विधानं वेदादिशास्त्रम् । तेनोक्ताः प्रतिपादितस्वरूपाः । किमनेनोक्तं भवति । मुख्यदैवसर्गभाजां मुमुक्षूणां ब्रह्माद्वैतभावनया सर्वाः क्रियाः प्रवर्तन्त इति ॥

किंच,

> **तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।**
> **दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

तदित्येतन्मन्त्रपदमविनश्वररूपं प्रत्यवमर्शार्थमुदाहृत्य पूर्ववदुच्चार्यापवर्गार्थिभिः सात्त्विकैः सर्वसर्गभाग्भिर्यज्ञादयः क्रियाः क्रियन्तेऽनुष्ठीयन्ते । कथम्? फलं

स्वर्गादिविनश्वरभोगलक्षणां सिद्धिमनभिसंधायासंकल्प्य ये हि नित्यनिरुपमानन्दमयब्रह्मस्वरूपप्रत्यवमर्शात्मकैकफलमभिकाङ्क्षिणः ॥

अपि च,

**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा स[1]च्छब्दः पार्थ गीयते ॥ २६ ॥**

[ शां. पा. १-युज्यते. ]

अतो विद्यमानस्य नित्यस्य भावः सत्त्वम् । तस्मिंस्तथा साधुभावे साधोः शोभनस्य भावः सत्त्वम् । तस्मिन्नित्ये तयोरर्थयोः सदित्येतन्मन्त्रपदं वाचकत्वेन प्रयुज्यते । तथा प्रशस्ते न्यायकर्मणि व्यापारविशेषे सच्छब्दो वाचकत्वेन गीयते शब्द्यते ॥

यत एवमतः,

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञादिषु यथोक्तब्रह्मभावनामयी स्थितिः प्रतिष्ठेह परमार्थसती परमशोभना सदित्यनेनैव तदर्थीयं यज्ञादिप्रयोजनं कर्म प्रशस्तो व्यापारविशेषः सदित्यनेनैव शब्देनोच्यते प्रतिपाद्यते ॥

एवं मोक्षकाङ्क्षिणां सात्त्विकानां यज्ञादिविषयां ब्रह्मसमापत्तिहेतुस्थितिं प्रतिपाद्येदानीमासुराणां संसारबन्धहेतुं च तद्विपरीतां स्थितिं प्रतिपादयितुमाह,

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु सप्तदशोऽध्यायः ॥ १७ ॥**

ज्ञानशून्यजनाव्यभिचारिण्याऽश्रद्धया परमार्थसद्ब्रह्मासंभावनया हुतम् । यद्यज्ञविधिर्यो विहितः, तथा दत्तं तपश्च तप्तं दानतपसी अनुष्ठिते, अन्यद्वा सुकृतं किंचन कृतं तत्सर्वमसदित्युच्यते । न तन्नित्यं, नापि शोभनम् । कुतः ? यतस्तदश्रद्धयाऽनुष्ठितं वस्तु न प्रेत्य न परलोके सद्वा साधु वा, न चेह । यतस्तत्फलस्य पारलौकिकस्यैहिकस्य वा विनश्वरत्वादसत्त्वम्, असव्याधिदोषयोगा-

१ राना १-' तदर्थीयं ' इत्यादि ' °पाद्यते ' इत्यन्तस्थाने ' पदेन कथ्यते ' इत्येव. २ राना १-असु°. ३ राशा २-तया. ४ राशा २ ना १-' च ' नास्ति. ५ राशा २ ना १—नाति —.

च्चासाधुत्वम्। अतस्तथाविधैः कर्तृभिः कृतानां यज्ञादीनां संसारबन्धलक्षणमसदेव फलं बोद्धव्यमिति दैवासुरसर्गाभिव्यञ्जकं यज्ञादिक्रियाभेदप्रतिपादनमस्य प्रयोजनम्। यथोक्तात्मज्ञानलक्षणपरमरहस्योपदेशविषयाविषयविभागविस्तरं वेदितव्यमित्योम्॥

स्फीतालोकां दिनरुचिमिव द्योतयत्याशु दैवीं
घोरां रात्रीमिव मुकुलयत्यासुरीं यच्च दृष्टिम्।
आत्मादित्यं तमुदितमतः षोडध्यायशैलाद्
दृष्ट्वैव द्रागभवतु भविनो विद्रवन्मोहनिद्रा॥

इति श्रीमद्राजानकरामकविरचिते वाक्यार्थान्वयमात्रे सर्वतोभद्रनाम्नि भगवद्गीताविवरणे सप्तदशोऽध्यायः॥ १७॥

## ॥ अथाष्टादशोऽध्यायः ॥

ॐ अथ 'मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव' इति भगवतस्तदनुग्रहलक्षणसाक्षात्कृतपरस्वरूपस्य परमगुरोः परमप्रमाणभूताद्वचनादात्मनो यथोक्तदैवसर्गगुणसामग्रीसंपन्नत्वसंभावनया यथोपदिष्टार्थानुष्ठानपात्रतां प्रतिपाद्य, अवश्यकरणीयानां स्वकर्मणामनुष्ठाने समुपजातोत्साहस्तेषामपवर्गफलत्वेन कारणभूतयोः संन्यासत्यागयोः 'ज्ञेयः स नित्यसंन्यासी' तथा 'यस्य सर्वे समारम्भाः' इत्यादिना च संक्षेपतः पूर्वमवगतार्थयोरधुना विस्तरतः परमार्थजिज्ञासुः,

**अर्जुन उवाच।**

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन॥ १॥**

संन्यासस्तावत् सम्यङ् न्यसनं तस्य सुष्ठु परिहार एवार्थः, त्यागस्य च ह्ययमेवार्थः। इत्यनयोरेकार्थत्वात्किं परस्परपर्यायत्वमुत भिन्नार्थता? तत्कीदृशोऽर्थभेदोऽनयोरिति प्रश्नबीजं हृदि कृत्वा संन्यासस्य त्यागस्य च तत्त्वं परमार्थं पृथग्विवेकेन वेदितुं ज्ञातुमिच्छामि॥

इत्यर्जुनप्रश्नादनन्तरमनयोरेकार्थतां गर्भीकृत्योत्तरम्,

---

१ राना १-दृष्टैव. २-अत्राप्युपरितनश्लोके 'षोडशाध्यायशैलात्' इत्युक्त्वा पुष्पिकायां 'सप्तदशोऽध्यायः' इति वचने विसंवादः। अयं विषयो भूमिकायां द्रष्टव्यः। ३ राना १-'अथ' नास्ति. ४ राशा१-°र्थं जिज्ञासमानः.

श्रीभगवानुवाच ।

**काम्यानां कर्मणां त्यागं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

[ शां पा. १—न्यासं. ]

कवयः परावरद्रष्टारः संन्यासं काम्यानां कर्मणां त्यागं विदुः । काम्यन्त इति कामा विषयभोगास्तेभ्यो हितानि तत्साधनभूतत्वात्तदनुकूलानि यज्ञादीनि कर्माणि काम्यान्युच्यन्ते । तेषां त्यागं परिहारं भोगरूपफलतृष्णाभिसंधिनाऽनुष्ठानस्य वर्जनं संन्यासं कथयन्ति । तेन नित्यादीनि सर्वाणि कर्माणि कामाभिसंधिनाऽनुष्ठीयमानानि काम्यानि संपद्यन्ते । तेषां तथानुष्ठानवर्जनम्, मुमुक्षोः संन्यासः । एवं च व्याख्याने पूर्वापरग्रन्थाविरोधो नापद्यते । यतः पञ्चमेऽर्जुनसंशयच्छेदाय संन्यासकर्मयोगयोः कैश्चित्प्रतिपन्नां भिन्नार्थतां संन्यासात्कर्मयोगो विशिष्यत इति 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ' इत्युपक्रम्य 'तयोस्तु कर्मयोगस्य नीरागद्वेषतया कर्मानुष्ठानलक्षणविशेषप्रतिपादनोपक्रमेण संन्यासस्य 'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति' इत्यादिना लक्षणमुक्तम् । तेन विशिष्टरूपतया यथाविहितानां सर्वकर्मणामनुष्ठानमेव संन्यास इति स्थितम् । अथ त्यागं व्याचष्टे । विचक्षणाः परमार्थविदः सर्वेषां नित्यादिविभागेन व्यवस्थितानां यज्ञादीनां वर्णाश्रमविहितानां कर्मणां फलस्य स्वर्गादिभोगलक्षणस्य त्यागं परिहारं त्यागमाहुः, न तु यज्ञादिस्वरूपस्य कर्मण एव परिहारं त्यागमाहुः । तथैव च पूर्वं,

यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥

इति त्यागस्यापि लक्षणमुक्तम् । एवं च कर्मफलस्यानभिसंधानं त्यागो न तु कर्मणः परिहार इत्युक्तं भवति । ततश्च संन्यासत्यागयोरेकार्थतैव सिद्धान्तः ॥

ततश्च तयोर्भिन्नार्थतावादिनां मतमुपन्यस्य तमेव संन्यासैकार्थं त्यागं सम्यक्प्रतिपादयितुमाह,

---

१—' न तु ' इत्यादि ' आहुः ' इत्यन्तं राना १ नास्ति. राशा १ प्रान्ते. २ राना १—इत्यागमस्यापि.

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

इहैके केचन मनीषिणो मतिमन्तः केवलज्ञानवादाभिनिविष्टाः सर्वं नाम कर्म त्याज्यं परिहार्यमिति कथयन्ति । यतस्तत्सर्वं कर्माशुद्ध्यतिशयक्षयादिभिर्दोषैर्युक्तम् । अन्ये पुनर्मनीषिणो यथोक्तकर्मवादिनो यज्ञदानतपोरूपं शास्त्रविहितं कर्म न त्याज्यं न परिहार्यमित्याहुः । यथा च यज्ञादेर्नियतस्य कर्मणः परिहारानुपपत्तिस्तथा बहुशः प्रतिपादितमेव प्राक् ॥

संन्यासत्यागयोः परमार्थत एकार्थयोस्तत्स्वरूपावगमसंदेहनिवृत्तये त्यागविषयमेव वक्तव्यमाह,

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रदर्शितः ॥ ४ ॥**

[ शां. पा. १–संप्रकीर्तितः. ]

तत्र तथाविधे संन्यासादभिन्नार्थे त्यागे प्रोक्तलक्षणे विषये निश्चयं निर्णयं मन्मतमवधारय । व्याख्यातलक्षणस्य क इदानीं निश्चयोऽवशिष्यते यदर्थमिदमुच्यत इत्यत्राऽऽह । हिशब्दो हेतौ । यस्मात्सामान्येनोक्तलक्षणस्त्यागो विशेषतो वक्ष्यमाणहेयोपादेयरूपेण विभागेन त्रिप्रकारः पुरस्तात्सम्यक्प्रकटीकृतः ॥

इत्थं त्यागविषये निश्चये वक्तव्ये सति कर्मणां त्यागस्य पराभिमर्शतापवर्गलक्षणफलहेतुत्वादत्यागत्वमेव प्रतिपादयितुं प्रदर्शितागमोपपत्तिगर्भीकारेण सर्वकर्मणामत्यागत्वमेव तावदाह,

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

यज्ञादिरूपं कर्म सर्वैः शास्त्राधिकृतैः सर्वदा न त्याज्यम् , न तस्य त्याग उपपद्यते । तस्मादवश्यं कर्तव्यमेतत् । कुतः ? यज्ञादीनि कर्माणि मनीषिणां पावनानि । मनीषिणः पुरुषाः प्रज्ञायुक्ता दैवसर्गभाजः शास्त्रार्थानुष्ठानाधिकृता उच्यन्ते । ते च द्वये संभवन्ति । प्रवृत्तिधर्मात्मकशास्त्रानुष्ठानाधिकृता रजोलेशानुगतसत्त्वप्रधानबुद्धयस्तथाविधश्रद्धाश्चैके यान्प्रति तृतीयेऽध्याये ‘ सहयज्ञाः

---

१ राशा १–°फलाहेतु°. २ राना १–अत्यागत्वं ताव°.

प्रजाः सृष्ट्वा ’ इत्यादिना, ‘ अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ’ इत्यन्तेन ग्रन्थेनाऽऽगमोपपत्तिप्रतिपादकेन सर्वकर्मणामत्याज्यत्वं पावनत्वं चोक्तम्। अपरे तु मनीषिणो निवृत्तिधर्मात्मकशास्त्रार्थानुष्ठानाधिकृता गुणीभूतरजस्तमस्कत्वादुद्रिक्तसत्त्वात्मकबुद्धयस्तथाभूतश्रद्धाश्च यान्प्रति तत्रैवैतच्छास्त्रप्रतिपादितज्ञाननिष्ठतया ज्ञानादिकर्मणां यथास्वं यथास्वास्ववस्थासु ‘ यस्त्वात्मरतिरेव स्यात् ’ इत्यादिना ‘ तस्मादसक्तः सततं कार्यं कर्म समाचर । असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ’ इत्यन्तेन ग्रन्थेनात्याज्यत्वमुक्तम् । इत्युभयेषां मनीषिणां यज्ञादिकर्माणि पावनान्युक्तानि ॥

तानि,

**एतान्यपि चं कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

[ शां. पा. १–तु. ]

तान्येतान्यत्याज्यत्वेनेह प्रतिपादितानि । परैः सदोषत्वात्त्याज्यत्वेन प्रतिपन्नान्यपि सर्वाणि कर्माणि कर्तव्यान्यवश्यानुष्ठेयानीत्युत्तमं प्रकृष्टं मदीयमेतन्निश्चितं प्रदर्शितप्रकारेण पूर्वमेव निर्णीतम्। कथं कर्तव्यानीति तु विशेषमाह। सङ्गं त्यक्त्वा फलानि चेति । ‘ सङ्गात्संजायते कामः ’ इत्यत्र व्याख्यातस्वरूपः सङ्ग एकः कर्मसु दोषस्तथा तन्मूलरागद्वेषदोषयोगादिष्टानिष्टविषयप्राप्तिपरिहाररूपाणि फलानि द्वितीयो दोषः, न तु अनुष्ठानं, अतः संङ्गफलानि वा त्यक्त्वा कर्माणि कर्तव्यान्येव । तेन कर्मसु संगफलाभिसंधित्यागस्त्याग उच्यते, न त्वननुष्ठानमेव त्यागः ॥

तस्मादुक्तयोपपत्त्या,

**नियतस्य चं संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

[ शां. पा. १–तु. २–°कीर्तितः. ]

चशब्दो हेतौ । यस्मान्नियतस्य वर्णाश्रमविभागेन नित्याव्यभिचारिणः कर्मणो यज्ञादेः संन्यासस्त्यागोऽननुष्ठानं नोपपद्यते । यथा च नोपपद्यते तथा

---

१ राना १ ग्रन्थेन त्यागत्वम्. २ राना १–विशेषणमाह. ३–‘ द्वितीयो ’ इत्यादि ‘ वा ’ इत्यन्तं राना २ ना १ ( उभयत्र ) पाठो

'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिना, तथा 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इत्यादिना च बहुशः प्रतिपादितमेव। तस्यैवंविधस्य सर्वथैवात्याज्यस्य कर्मणो मोहाद्विपर्ययलक्षणाद्वैचित्र्यात्त्यागः परिहारस्तामसस्तमोगुणसंभव उच्यते। तमसोऽभिकार्यं मोहः। यदुक्तम्,

प्रमादमोहौ जायेते तमसोऽज्ञानमेव च। इति।

एवमयं तामसस्त्यागो विपरीतफलपर्यवसायी, यतोऽपवर्गफलबुद्ध्या प्रतिपन्नः संसारमेव फलत्यतो हेय एवासौ॥

अथ राजसं त्यागमाह,

**दुःखमित्येव यः कर्म कायक्लेशभयात्त्यजेत्।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ ८॥**

[ शां. पा. १–यत्. ]

यः पुरुषः शास्त्रचोदितं कर्म स्नानाग्निहोत्रादि दुःखं सुखप्रतिकूलमिदमित्येतावन्मात्राद्धेतोः शरीरकदर्थनात्त्रासात्त्यजति नानुतिष्ठति, स राजसं रजोगुणनिमित्तकं त्यागं नियतकर्मपरिहारं कृत्वा तस्य त्यागस्यापवर्गभोगसुखलक्षणमभिहितं फलं नैव प्राप्नुयात्। रजोगुणयुक्तत्वात्तत्फलं दुःखमेवासौ लभते। ततो राजसोऽपि त्यागो हेय एव॥

अथोपादेयं सात्त्विकं त्यागमाह,

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥ ९॥**

स सात्त्विको ज्ञानफलसत्त्वगुणहेतुकस्त्यागोऽभिमतः। कोऽसौ? यन्नियतं शास्त्रचोदितं कर्म क्रियतेऽनुष्ठीयते। कर्मणः करणमेव त्यागो न परिहार इत्यर्थः। कथं क्रियते? येन क्रियैव त्यागः संपद्यत इत्याह। कार्यं परमगुरोः परमेश्वरस्य निरुपप्लवप्रमाणभूतशास्त्ररूपवचनचोदितत्वादवश्यकरणीयमित्येतेन हेतुना क्रियते। अत एव पूर्वव्याख्यातं सङ्गं फलं च त्यक्त्वा। किमनेनोक्तं भवति। अनुपपन्नत्यागस्यापि कर्मणो रजस्तमोभिभूतत्वादत्यागेऽपि त्यागप्रतिपत्तिः सङ्गफलाभिसंध्यनुच्छेदात्कर्मैव संसारकारणं संपद्यते। विशुद्धसत्त्वगुणोद्रेकात्तु य-

१ राना १–स मानेन फलति.

थोक्तज्ञाननैर्मल्ये सति सङ्गफलाभिसंधिशून्यत्वेन नियतस्य कर्मणोऽनुष्ठानमेव संसारोच्छेदकारणं त्यागः संपद्यत इति सात्त्विक एव त्याग उपादेयः ॥

तस्यैवंविधस्य सात्त्विकस्य त्यागस्य स्वरूपं प्रतिपादयितुमाह,

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

योऽत्यन्तगुणीभूतरजस्तमस्कत्वेन विशुद्धेन सत्त्वमात्रेण समाविष्टो व्याप्तान्तःकरणः संस्त्यागी यथोक्तेन सङ्गफलाभिसंधिराहितानियतकर्मानुष्ठानरूपेणैव त्यागेन त्यागफलहेतुत्वात्त्यागत्वमापन्नेन युक्तोऽत एव मेधावी प्रशस्यप्रज्ञः, ततश्च छिन्नसंशयो यथोक्तस्य परब्रह्मस्वरूपस्यैकस्य तत्त्वस्यास्तित्वे त्रुटितसंदेहः, स सर्ववस्तुषु प्रथमानपरमात्मैकस्वरूपत्वादकुशलं संसार्यभिमुखस्य साधनभूतं कर्माग्निहोत्रादि शरीरक्लेशावहं न द्वेष्टि । ज्ञानवैशद्ये सति द्वेषलक्षणदोषाभावान्न प्रीत्या भावयति । नापि कुशले कर्मत्यागादौ सुखसाधनभूतेऽनुषज्जति, सङ्गं बध्नाति । तस्यैवंविधस्य त्यागिनो नित्योदितानन्तनिजानन्दनिर्भरस्याऽऽत्मभूतसर्वभावस्य न क्वचिद् द्वेषो नापि रागः । शास्त्रचोदितत्वादवश्यकरणीयमित्येवं सर्वं नियतं कर्मानुतिष्ठन्नेवासौ सर्वत्यागीत्यर्थः ॥

एतदेव पूर्वोक्तमपि स्मारयन्द्रढयितुमाह,

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

पूर्वमेव बहुशो व्याख्यातत्वाद्गतार्थमेवैतत् ॥

यथोक्तत्यागिविपरीतवृत्तीनामनुष्ठातॄणां फलमाह,

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥**

ये यथाप्रतिपादितपारमार्थिकत्यागरहितास्तेषामत्यागिनां प्रेत्य परलोके त्रिविधं फलम्—अनिष्टमित्यादि । तत्रानिष्टमनभिप्रेतं दुःखात्मकं यत्तामसचित्तैस्तामसश्रद्धैः कर्तृभिरनुष्ठितात्तामसात्कर्मण उपजातं सन्नरकतिर्यग्योन्यादौ

---

१ राना १–' संधि ' स्थाने ' संबन्ध '. २ राना १–अनन्य°.

लब्धोपपत्तिभिस्तैर्भुज्यते। इष्टमभिप्रेतं सुखात्मकं यद्रजोलेशप्रधानचित्तैः स्वर्गादिफलभूमिषु तादृक्श्रद्धैर्यथाविधिविहितात्कर्मण उद्भूतं पुरुषैरुपभुज्यते। तथा मिश्रं सुखदुःखात्मकं यद्रजःप्रधानचित्तैस्तादृक्श्रद्धैश्च कर्तृभिरनुष्ठितात्कर्मण उपजातं यत्कर्मभूमौ मनुष्ययोनिगतैरुपभुज्यते। इत्येवंविधं कर्मणः फलं ज्ञानशून्यसंसारिपुरुषविषयं संन्यासिनां यथोक्ततात्त्विकत्यागवतां ज्ञानविज्ञाननिष्णातमतीनां कर्मयोगिणां न भवति नोपपद्यते। ततस्ते त्यागिनः कुशलाः कुशलं कर्म नीरागद्वेषतयाऽनुतिष्ठन्तीति पूर्वेण संबन्धः॥

अथात्यागिनस्त्रैविधेन कर्मफलेन युज्यन्ते, न तु त्यागिन इत्यत्र हेतुं क्रमेण प्रतिपादयितुमाह,

पञ्चेमानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्॥ १३॥

[ शां. पा. १–पञ्चैतानि. ]

इहेमानि वक्ष्यमाणानि कारणानि निमित्तानि सर्वकर्मणां सकलशरीरसंबन्धिनां मनोवाक्कायनिर्वर्त्यानामशेषक्रियाविशेषणानां कृतान्ते कृतनिष्ठे सांख्ये निश्चयशास्त्रे प्रोक्तानि प्रतिपादितानि निबोध, निबुध्यस्व॥

कानि तानीत्याह,

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवमेवात्र पञ्चमम्॥ १४॥

[ शां. पा. १–दैवं चैवात्र. ]

अधिष्ठानं तत्तत्क्रियानुगुणमधिकरणं शरीरादि, यदधिष्ठाय कर्तुस्तत्तत्कर्म कर्तुं शक्यम्। तथा कर्ता तत्तद्देहादिनिबद्धाहंप्रत्ययः पुरुषः करणम्। तत्तत्क्रियानुगुणशरीरेन्द्रियव्याप्तिभिरत्र चतुष्टयेऽनुकूलाननुकूलाभ्यां सिद्ध्यसिद्धिकारणं दैवं पञ्चमम्। दैवापरपर्यायं प्राक्तनं कर्मेत्यर्थः। अत्र ह्यनुकूलेऽ-

---

१–अत्रोद्धृतः ' सुखात्मकं ' इत्यादि ' रजःप्रधानचित्तैः ' इत्यन्तः राना १ पाठः राशा २ प्रान्ते दृश्यते। राशा १ मध्य आदौ लिखित्वा पश्चादुत्कीलितः। तत्स्थाने च ' सुखात्मकं यत्सात्त्विकान्तःकरणैस्तथाविधश्रद्धैश्च कर्तृभिर्निर्वाहितात्कर्मण उद्भूतं सद्भिरतिशयसुखाधिकरणे स्वर्गादावधिगतदिव्यशरीरैस्तैर्भुज्यते। तथा मिश्रं सुखदुःखात्मकं यद्रजोनुगतसत्त्वप्रधानचित्तैः ' इति राशा २ पाठो मूले; राशा १ पाठः पश्चाल्लिखितो दृश्यते. २ राशा १–त्रिविधेन.

धिष्ठानादीनां साधनानां साफल्यमननुकूले तु संनिहितानामपि वैफल्यम्। अतश्च तत्प्राधान्यात्पृथक्पश्चादुक्तम् ॥

एषां पञ्चानां सर्वकर्मसिद्धिहेतुत्वं निगमयति,

**शरीरवाङ्मनोभिर्हि यत्कर्माऽऽरभतेऽर्जुन।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥ १५॥**

[ शां. पा. १-°भिर्यत्कर्म प्रारभते नरः. ]

यः कश्चित्कर्ता कायेन वचसा चेतसा वा यत्कर्म कर्तुं प्रक्रमते तत्रैते पूर्वोक्ताः पञ्च हेतवः कारणान्येतेषामन्यतमाभावेऽपि चिकीर्षितकर्मासिद्धेः। कीदृशं कर्माऽऽरभते? न्याय्यं शास्त्रप्रोक्तनियमरूपान्न्यायादनपेतं, विपरीतं वाऽयथाशास्त्रत्वादन्याय्यम् ॥

किंच,

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥ १६॥**

तत्र पञ्चक एवमुक्तेन क्रमेण समशीर्षिकया कारणभूते सति विद्यमाने यः कर्ता क्षेत्रज्ञविशेषः केवलमेकमेवाऽऽत्मानं मोहवशादनात्मभूतदेहादिनिविष्टाहं-प्रत्ययकर्तारं कर्मसंपादकं पश्यति बुध्यते, स न पश्यति। विपरीतं तस्य ज्ञानमित्यर्थः। कुतो न पश्यत्यकृतबुद्धित्वात्। कृता यथोक्तज्ञाननिष्ठत्वान्निष्पन्ना बुद्धिः प्रज्ञा यस्य स तथोक्तः, न कृतबुद्धिरकृतबुद्धिः सम्यग्ज्ञानशून्यमतिरत एव भ्रष्टधीः। किमुक्तं भवति। एकः परमेश्वरः स्वशक्तिप्रसरभूतस्य सकलजगद्भावक्रीडनकचक्रस्यार्क इव स्वप्रभाचक्रस्यावभासयिता पारमार्थिकः कर्तेति सम्यग्ज्ञानाभावादकृतबुद्धिर्जात्याद्यभिमानावच्छिन्नं क्षेत्रज्ञरूपमात्रमात्मानं कर्तारं मन्यमानो यत्करोति तस्यैतदधिष्ठानादिविभागेन त्रिविधं कर्मफलं, न तु यथोक्तस्य त्यागिनः परमात्ममयं सर्वं ज्ञानचक्षुषा पश्यतः ॥

अत एव तस्य तादृशीं वृत्तिं प्रतिपादयितुमाह,

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।**
**हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते॥ १७॥**

---

१ राना १–संपादं. २ राशा १–' चक्रस्य ' स्थाने ' पुञ्जस्य '.

यस्याऽऽत्ममयसमस्तवस्तुनो भावश्चित्तवृत्तिर्नाहंकृतो देहादावनित्योऽहंप्रत्यय-ग्रहणेन संपादितोऽत एव यस्य बुद्धिः संविन्न लिप्यते रागद्वेषादिभिर्मलैर्मायोपहतसमस्तजीवनिबद्धैर्न कलुषी क्रियते, स परमेश्वरभावसमाविष्टः कर्तेह योद्धुमवस्थिताँल्लोकान्हत्वा व्यापाद्यापि न निबध्यते, न तद्वधसाधनेन क्रियाफलेन युज्यते। पारमार्थिकस्य नित्यस्य ब्रह्मस्वरूपस्याऽऽत्मनो नानाभावाच्छरीरादेर्नित्यविनश्वरस्वभावत्वादत्र 'नायं हन्ति न हन्यते' इत्यादिना प्रतिपादित एव हेतुः प्राक्। अतस्त्वं यथोक्तत्यागवान् कार्यं कर्मेदमाचरेत्यर्थः॥

अथ त्याग्यत्यागिशब्दप्रतिपादितयोगिसंसारिपुरुषविषयतया ज्ञानकर्मकर्तॄणां गुणनिमित्तकं भेदं प्रतिपिपादयिषुः सर्वदेहसाधारणयोर्ज्ञानकर्मणोः फलसंपत्तिहेतुं प्रतिपादयितुमाह,

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः॥ १८॥**

अत्र प्रथमेन कर्मशब्देन ज्ञानात्मिकायाः क्रियाया ज्ञप्तिलक्षणं फलमुच्यते। कारणेन कार्योपचारात्। तेन तादृशे क्रियाफलविषयेऽधीनत्वात्त्रिप्रकारा चोदना प्रवर्तना। त्रीण्येतानि ज्ञप्तिलक्षणेन ज्ञानात्मकक्रियाफलेन चोदयन्ति। प्रवर्तयन्तीत्यर्थः। कानि त्रीणि? ज्ञानं येन ज्ञायते तदिन्द्रियादि। ज्ञेयं च सुखदुःखादि नीलपीतादि। परिज्ञाता च योऽहमिदं सुखादि जानामीत्यध्यवस्यति। त्रयाणामेषां सामग्री ज्ञप्तिलक्षणे फले चोदयतीत्यर्थः। एवमेव कर्मणि कर्मफले तत्तत्कार्यनिवृत्तलक्षणे संग्रहो येन संगृह्यते स्वीक्रियते, सोऽपि त्रिविधस्त्रीण्येतानि संग्राहयति। कानि? करणं हस्तादि, कर्म घटादिकार्यविषया चेष्टा, कर्ता घटादिव्यापृतकुम्भकारादिः। एतत्त्रितयसामग्रीवशाद्घटादेः कार्यस्य स्वरूपनिवृत्तिलक्षणं फलं भवति॥

इति स्थिते कीदृंश्येतानि ज्ञानादीनि योगविषयाणीति प्रक्रान्तं प्रतिपादयितुमाह,

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि॥ १९॥**

प्राक्प्रतिपादितस्वरूपं ज्ञानादित्रितयं तद्गुणसंख्याने गुणानां स्वरूपभेदकथने प्रत्येकं त्रिधा त्रिभिः प्रकारैः सत्त्वादिगुणविभागात्प्रोच्यते कथ्यते तद्विद्भिः। तानि

ज्ञानादीनि मत्तो यथावत्सम्यगुच्यमानानि सात्त्विकराजसतामसभेदेन प्रत्येकं त्रिप्रकाराण्यवधारय, येन तानि प्रवृत्तानि प्रत्यभिज्ञास्यसि ॥

तत्र ज्ञानं त्रिविधमाह । तत्र सात्त्विकं तावत्,

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

[ १–टीकायां 'वीक्षते' पाठः । स पूर्वार्धस्यान्ते 'ईक्षते' स्थाने न युज्यते । प्रथममेव 'वीक्षते सर्वभूतेषु' इति तु पाठः कोशेषु न दृश्यते । किंतु रामपाठ एवमेव स्यादिति तर्कः. ]

न्यग्भूतरजस्तमस्कं विशुद्धसत्त्वमात्रहेतुकं ज्ञानं संवेदनं विद्धि जानीहि । किंतु येन साधनभूतेन देशकालाकारादिभेदेन विभक्तेषु परस्परपृथग्भावेन व्यवस्थितेष्वपि सर्वेष्वशेषेषु भूतेषु चेतनाचेतनेषु सत्त्वेष्वविभक्तमभिन्नरूपं चिदात्मकं भावं सत्तां वीक्षते पश्यति बुध्यत इत्यर्थः । इह विशुद्धचिन्मात्रस्वभावात्मैवैकं तत्त्वं परमार्थः सन् न तद्व्यतिरिक्तं किंचन पदार्थान्तरं तत्त्वतः संभवति । केवलं तदीयनिरतिशयैश्वर्योद्भावितमायामलमुषितस्वप्रकाशे ज्ञानमये चक्षुषि तदेकमेव तत्त्वं नानात्वेन प्रतिपद्यन्ते क्षेत्रज्ञाः । तदेवं यदा ज्ञानमयं चक्षुः परमेश्वरानुग्रहशक्तिशलाकापरिमृष्टमलत्वान्निर्मलं भवति, तदा सर्वमेवेदमेकत्वेन योगिनः पश्यन्तीत्यर्थः ॥

अथ राजसमाह,

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

तद्वत्सर्वभूतेषु समस्तेषु मार्यायेषु प्राणिषु वर्तमानं ज्ञानं राजसं रजोगुणहेतुकं स्मृतं तत्त्वविद्भिः । किं तत् ? पृथक्त्वेनाऽऽत्मनो व्यतिरेकेण व्यवस्थितनानाभावानपि वेद्यान्नानारूपान्विचित्रान्पृथग्विधान्परस्परतो व्यतिरिक्तस्वरूपाञ्जानाति । ज्ञानस्य वेद्यप्रथाहेतुत्वादुपचारेण वेदनक्रियाकर्तृत्वं वेदितव्यम् । एतच्च विषयसुखगर्वलक्षणलोभकारणभूताद्रजसः समुद्भूतं सम्यग्दर्शनहेतुत्वात्संसारिपुरुषनियमितं हेयमेव ॥

अथ तामसमाह,

---

१ राना 'एवेदम्' नास्ति.

**यत्त्वकृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

[ शां. पा. १—यत्तु कृत्स्नवद्. ]

यत्तामसं तमोगुणहेतुकं ज्ञानमुदाहृतं शास्त्रेषूदीरितम् । किं तत् ? तुशब्दः पूर्वस्माद्व्यतिरेक एव । यदकृत्स्नविद्विषयीभूतं ज्ञेयमर्थं कृत्स्नं सकलं सर्वविशेषसंयुक्तं वेत्तीति कृत्स्नवित् सात्त्विकादि, तद्विपरीतमकृत्स्नवित्तामसम् । तथैकस्मिन्विषयसुखसाधनभूते कस्मिंश्चित्कार्ये साध्ये वस्तुनि सक्तं लीनं यदेव किंचिद् दृष्टसुखसाधनतामासादयति तत्रैव मज्जतीत्यर्थः । तथाऽहैतुकं विषयेन्द्रियसंयोगादि यज्ज्ञानकारणभूतं तदभावेऽप्यकस्मादुद्भूतं ज्ञानं तामसं भूतग्रहाद्याविष्टानां प्रमत्तोन्मत्तादीनां ज्ञानमिव । तथा तत्त्वार्थवत् तत्त्वमात्मादिपरमार्थः स एवार्थो वस्तु तत्त्वार्थः, स विद्यते यस्य तत्तत्त्वार्थवत् सात्त्विकादि तद्विपरितमिदमतत्त्वार्थवच्छरीरादिवस्तुनिष्ठमित्यर्थः । अल्पमव्यापकम् । तदेतदज्ञानादिकारणभूततमोगुणसमुद्भूतत्वात्सदसद्विपरीतप्रत्ययहेतुत्वे निकृष्टसंसारिविषयत्वात्सुतरां हेयम् ॥

अथ कर्म त्रिविधमाह,

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

तत्कर्म सात्त्विकम् । पूर्वबुद्धिशुद्धसत्त्वगुणहेतुकमभिधीयते । किं तत् ? अफलप्रेप्सुना दृष्टादृष्टविषयसुखदुःखलिप्सारहितेन कर्त्रा निर्वर्त्यते । कीदृशम् ? नियतं वर्णाश्रमविभागेनावश्यकरणीयम् । तथा सङ्गेनोक्तलक्षणेन शून्यमत एव सङ्गाभावात्तन्मूलरागद्वेषाभावेन कृतं संपादितम् । तदेतज्ज्ञानकरणभूतसत्त्वगुणोद्भूतत्वादपवर्गलक्षणोत्तमपुरुषार्थसाधनं योगिविषयमुपादेयम् ॥

अथ राजसं कर्माऽऽह,

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

[ शां. पा. १—बहुलायासं. २—राजसमुदाहृतम्. ]

---

१ राःशा १—संकुलीमं. २ रामा १—मज्जयति. ३ रामा १— अल्पमव्ययमव्यापकं

तद्राजसं रजोगुणहेतुकम् । किं तत् ? यदैहिकामुत्रिकभोगलिप्सुना तथा साहंकारेणाऽऽत्मनि शरीरादावहंप्रत्ययवता कर्त्रा क्लेशबहुलं चित्तशरीराद्यायासभूयिष्ठं क्रियते तदेतत्प्रवृत्तिहेतोर्दुःखबहुलाद्रजसः समुद्भूतं तत्संसारिविषयत्वाद्धेयम् ॥

अथ तामसम्,

**अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

[ शां. पा. १-अनपेक्ष्य. ]

तत्तामसं तमोगुणहेतुकं कर्म । किं तत् ? यन्मोहादज्ञानादेवाऽऽरभ्यते, कर्तुं प्रक्रम्यते । कथमिदं क्रियमाणं कमर्थमनुबध्नाति पुष्णाति, किंवा क्षपयति ? अस्मिन् क्रियमाणे कस्य हिंसोपघातः संपद्यते, इत्यनुबन्धक्षयहिंसा अनवीक्ष्याविचार्यैव । एतदपि मोहाज्ञानप्रमादकारणभूततमःसमुद्भूतत्वान्निकृष्टतरसंसारिविषयं सुतरां हेयमेव ॥

अथ त्रिविधः कर्तोच्यते । तत्र सात्त्विकस्तावत्,

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥**

ईदृशः कर्ता कर्मणामनुष्ठाता सात्त्विक उच्यते । सात्त्विकचित्तत्वात्कर्ता सात्त्विक इति व्युपदिष्टः । स कीदृशः? मुक्तसङ्गो मुक्तः परिहृतः सङ्गः संसारतरुबीजभूतो व्याख्यातरूपो दोषो येन । यतोऽनहंवादी क्षेत्ररूपमनित्यमर्थमात्मत्वेन प्रतिपद्याहं यजामीत्यादि यो वदति सोऽहंवादी सर्वसंसारी जनः । तद्विपरीतोऽनहंवादी शरीरादिष्वनात्मभूतेष्वर्थेषु निरहंकारः । तथा धृत्या वक्ष्यमाणलक्षणयाऽनुष्ठेयवस्तुदृढावष्टम्भशक्त्या तथोत्साहेनोद्योगेन समन्वितः । अत एव सिद्धौ फलनिष्पत्तावसिद्धौ तदनिष्पत्तौ च हर्षशोकलक्षणविकाररहितः । ईदृशं कर्तृत्वं ज्ञानहेतोः पूर्ववद्विशुद्धात्सत्त्वगुणादुत्पन्नं ब्रह्मप्राप्तिहेतुत्वादुपादेयम् ।

अथ राजसः,

---

१ राना १-'इव' स्थाने 'इति'. २ रामा १-अत्र.

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते ॥ २७ ॥**

[ शां. पा. १–°कीर्तितः. ]

ईदृशः कर्ता राजसः पूर्ववद्रजोगुणात्मकः कथ्यते। कीदृशः ? रागी विषयसुखेष्वभिलाषवान्, तथा कर्मफलप्रेप्सुः क्रियमाणस्य कर्मणो यज्ञादेः फलमनित्यं स्वर्गभोगादिरूपं लिप्सुः, तथा लुब्धो गर्ववान्, तथा हिंसात्मकः प्राणिद्रोहपरायणः, तथाऽशुचिर्बाह्याभ्यन्तरशौचरहितः, तथा फलैकालम्बनचित्तत्वात्तत्सिद्ध्यसिद्धिसंभवाभ्यां परितोषविषादाभ्यां युक्तः। एतादृशं कर्तृत्वं लोभादिदोषकारणभूतरजोगुणसमुद्भूतत्वात्संसारिविषयं हेयम् ॥

अथ तामसः,

**अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः।**
**विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥ २८ ॥**

[ शां. पा. १–नैष्कृतिकः. २–दीर्घसूत्री च. ]

एवंविधः कर्ता पूर्ववत्तामसः। किंविधः ? अयुक्तः समाधिरहितः। यतः प्राकृतः प्रकृतिमेवाऽऽत्मत्वेन प्रतिपन्नः, स्तब्धो मिथ्याभिमानावेशान्न कंचित्प्रणमति। शठो मायावी, तथा नैकृतिकः, निकृतिः परोपतापनं प्रयोजनं यस्य, अलसो दाक्षिण्यरहितः, अत एव विषादी विषादवान्, दीर्घसूत्र आशुकार्येऽपि वस्तुनि चिरंकार्यः। एवंविधं कर्तृत्वं प्रमादमोहादिदोषकारणभूततमोगुणसमुद्भूतत्वादत्यन्तहेयमेवेति कर्तृकर्मणोः पृथग्वैविध्यप्रतिपादनं विस्पष्टार्थम्। यतः प्राय एकतरमेव त्रैविध्यं भवत्युक्तम् ॥

अथ बुद्धिधृत्योरेवमेव त्रैविध्यं वक्तुमुपक्रमते,

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**

बुद्धिर्बोध्यवस्तुसाधनं करणम्, धृतिरवष्टम्भः कार्ये ज्ञेये चार्थे सिद्धिपर्यन्तं स्थैर्यम्। तयोर्बुद्धिधृत्योः सत्त्वादिगुणापेक्षया त्रिविधं भेदं साकल्येन विविक्ततया चाभिधीयमानं शृणु ॥

---

१ राशा १–°कारी. २ राशा १–त्रैविध्य.

तत्रोद्देशक्रमेण बुद्धेस्त्रैविध्ये प्रतिपाद्यमाने सात्त्विकं भेदं तावदाह,

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या बुद्धिर्वेद सा सात्त्विकी मता ॥ ३० ॥**

[ शां. पा. १–या वेत्ति बुद्धिः सा पार्थ सात्त्विकी. ]

सात्त्विकी सत्त्वगुणसंभूता बुद्धिर्मता । काऽसौ ? यया प्रवृत्तिं च निवृत्तिं च वेद जानाति । स्वर्गापवर्गफले शास्त्रचोदिते कर्मणी प्रवृत्तिनिवृत्तिशब्देनोच्येते । यदुक्तम्,

प्रवृत्तिलक्षणो धर्मो गृहस्थेष्वभिधीयते ।
निवृत्तिलक्षणस्त्वन्यो धर्मो मार्गैकदैशिकः ॥

अन्यत्रापि च–प्रवृत्तिं च निवृत्तिं च द्विविधं कर्म दैशिकम् ।
इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं च निवृत्तमुपक्रम्यते ॥ इति ।

तथा कार्याकार्ये शास्त्रीयप्रतिषेधवशादनुष्ठेयपरिहार्ये वस्तुनी या जानाति, तथा भयाभये संसारदुःखजं साध्वसं, अभयमपवर्गसमुद्भवं सर्वतस्त्रासविरहम् । तथा बन्धं संसारं मोक्षमपवर्गं हेयतयोपादेयतया च स्वरूपतो जानाति, सा सात्त्विकी बुद्धिरिति । ननु ज्ञानं बुद्धिरित्यनर्थान्तरम् । सर्वभूतेषु येनैकमित्यादिना सात्त्विकगुणलक्षणेनैव सात्त्विकबुद्धिलक्षणमुक्तम् । तदधुना किमिति पुनरुच्यत इति । अत्रोच्यते । सत्यम्, ज्ञानबुद्ध्योर्नास्ति कश्चिद्विशेषः । किंतु पूर्वं ज्ञानज्ञेयज्ञातृलक्षणस्य त्रितयस्यैकप्रयोजनविषयत्वेन प्रतिपादनप्रसङ्गात्संक्षेपेण सात्त्विकगुणलक्षणमुक्तम् । अधुना धृतिसाहित्येन तस्यैव बुद्धिशब्दप्रतिपादितस्य विस्तरतो लक्षणमुक्तम् । न हि पूर्वं धृत्यादिवेदनं ज्ञानसंबन्धित्वेन प्रतिपादितम्, अधुना तु प्रतिपादितमिति न पौनरुक्त्यदोषश्चोदनीयः । यदि वा पूर्वमारूढयोगिसंबन्धस्य ज्ञानस्य लक्षणमुक्तम्, अधुना त्वारुरुक्षुसंबन्धस्यैवमपि न पौनरुक्त्यम् ॥

अथ राजसी,

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

---

१ राशा १–°समुद्भूता. २ राशा १·२ ( उभयत्र प्रान्ते ) °न्यस्यते. ३ राशा १–°ज्ञानलक्ष°. ४ राना १–'कश्चिद्' नास्ति.

राजसी रजोगुणप्रभवा बुद्धिर्यया हेतुभूतया ज्ञाता क्षेत्रज्ञः पुरुषो धर्माधर्मादीनुपादेयान्हेयांश्च पदार्थानयथावन्निश्चयाभावादसम्यग्वेत्ति धर्माधर्मावदृष्टविषयौ सदाचारदुराचारौ कार्याकार्ये तु दृष्टविषये इति न पौनरुक्त्यम्। अथवा धर्माधर्मशब्दौ लक्षणया फलविषयावुक्तौ, कार्याकार्यशब्दौ तु तन्निमित्तकर्मविवक्षयोक्तौ। एवमपि न पौनरुक्त्यम्। एषाऽपि संशयात्मकरजोगुणप्र[३]भवत्वात्संसारिविषया॥

अथ तामसी,

**अधर्मं धर्ममिति या बुध्यते तमसाऽन्विता।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा तामसी मता॥ ३२॥**

[शां. पा. १—मन्यते तमसाऽऽवृता. २—सा पार्थ तामसी.]

तामसी तमोगुणहेतुका बुद्धिर्या धर्माधर्मादीनदृष्टविषयान्सर्वार्थांश्च दृष्टविषयांस्तमसा हेतुना वृता सती विपर्ययेण जानाति, सैषा मिथ्याज्ञानहेतुः [४]परमतमोगुणत्वान्निकृष्टा संसारिविषयेति हेया॥

अथ धृतिस्त्रिविधा, तत्र सात्त्विकी तावत्,

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥ ३३॥**

सा सात्त्विकी पूर्वबुद्धिशुद्धसत्त्वगुणात्मिका धृतिः। काऽसौ? यया योगी मनःप्रभृतीन्धारयति। कीदृश्या? परमात्मविषयेण योगेन समाधिना सहाव्यभिचारिण्या नि[५]त्यमव्यतिरिक्तया। योगी हि मनोऽन्तःकरणं प्राणमाभ्यन्तरं मारुतं तत्तत्क्रियाभेदान्नानासंज्ञमिन्द्रियाणि चक्षुर्वागादीनि योगार्थमेव धारयति, तत्राऽऽत्मसमाधिविषयोऽवष्टम्भः स्थैर्यमेव कारणमित्यर्थः। एषा तत्त्वज्ञानविशुद्धसत्त्वगुणसमुद्भूतत्वादपवर्गफलत्वे सत्युपादेया॥

अथ राजसी,

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी॥ ३४॥**

रजोगुणजा धृतिर्यया साधनभूतया संसारी पुरुषः प्रसङ्गेनोक्तलक्षणेन

---

१ राशा १—[१]गुणसमुद्भवा. २ राना १—' अपि स्थाने ' या '. ३ राना १—' प्रभ ' नास्ति. ४ राशा १—' परम ' नास्ति. ५ राशा २ ना—१ नियमविरक्तया.

फलाकाङ्क्षी स्वर्गादिसुखात्मककर्मफललिप्सुर्धर्मादीन्धारयत्युद्वहति, न त्वपवर्गम्। धर्मः शास्त्रचोदितसमाचारस्तत्फलं सुखम्। कामोऽर्थो धनम्। त्रिवर्गमात्रनिबद्धधृतयो हि संसारिणः पुरुषाः। तदेषा धृतिर्हेयैव ॥

अथ तामसी,

**यया स्वप्नं भयं शोकं विषादं मदमेव च।**
**न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५ ॥**

[ शां. पा. १–सा पार्थ तामसी. ]

सा तामसी तमोगुणजा धृतिर्यया हेतुभूतया दुर्मेधा विपर्ययप्रत्ययरूपत्वाद् दुष्टा मेधा प्रज्ञा यस्य तादृशः सन्पुरुषः स्वप्नादीन्दोषान्न विमुञ्चति। तन्मय एव नित्यमास्त इत्यर्थः। स्वप्नं निद्रा तमःकार्यम्। भयमिष्टविषयविनाशशङ्कया त्रासः। शोको नष्टानुशोचनम्। विषादमनुत्साहम्। मदं चित्तोद्रेकम्। मूढः किल तानेव नित्यमुद्वहन्नास्ते। तत एषा निकृष्टा। एषा धृतिस्त्याज्यैव ॥

अथ कर्मफलभूतस्य सुखस्य त्रैविध्यं प्रतिपादयितुमुपक्रमते,

**सुखं त्विदानीं शृणु मे त्रिविधं भरतर्षभ।**

[ शां. पा. १–त्रिविधं शृणु मे. ]

गतार्थमेतत् ॥

अथ त्रैविध्ये प्रतिपाद्ये सात्त्विकत्वं तावत्सुखस्य प्रतिपादयितुमाह,

**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥**
**यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।**
**तत्सुखं सात्त्विकं विद्धि आत्मबुद्धिप्रसादजम् ॥३७॥**

[शां. पा. १–निगच्छति. २ यत्तदग्रे. ३–' विद्धि ' स्थाने ' प्रोक्तम्.']

तत्सात्त्विकं विशुद्धं सत्त्वहेतुकं सुखमानन्दं विद्धि जानीहि। कीदृशम्? आत्मबुद्धिप्रसादजम्। आत्मा ब्रह्मस्वरूपं परं तत्त्वं तदालम्बना बुद्धिः परा प्रज्ञा, तस्याः प्रसादो नैर्मल्यम्। यदपेक्षया विशुद्धमपि सत्त्वं मलिनत्वात्परिहार्यमेव। ततस्तथाविधबुद्धिप्रसादनाज्जातमुद्भूतम्। किं तत्? यत्र यस्मिन्सुखेऽभ्यासान्नित्यानुशीलनाद्योगी रमते रतिं भावयति, न तूद्विजते। विषयभोगा-

---

१ राना १–' पुरुषाः ' नास्ति. २ राशा १–स्वप्नो. ३ राना १–शुभमानन्दं.

त्मकस्य हि सुखस्याऽऽभासो विशेषाकाङ्क्षया तत्रोद्वेगं जनयति, समाधिजं तु सुखं रतिमेवाऽऽवहति । यत्र च सुखेऽनुभूयमाने सर्वदुःखानामन्तं समाप्तिमभावं नियच्छति नितरां प्राप्नोति । अन्यस्मिन्हि सुखेऽनुभूयमाने क्षणान्तरे तदेव दुःखं संपद्यते । कुतः ? सर्वदुःखानामन्तो यच्च सुखं तदात्वे साध्यमानावस्थायां चित्तासमाधानलक्षणक्रोधरूपत्वाद्विषतुल्यम् । परिणामे तु सिद्ध्यवस्थायाममृतोपमम् । निरुपमास्वादमित्यर्थः । बाह्यसुखस्यैतदेव विपरीतं वक्ष्यति । तदेतद्विशुद्धनिरतिशयनिरुत्तरास्वादरूपं समाधिप्रज्ञाप्रभवं योगिविषयं सुखमुपादेयम् ॥

अथ राजसम्,

**विषयेन्द्रियसंयोगाद्यत्तदात्वेऽमृतोपमम् ।**
**परिणामे विषमिव तद्राजसमिति स्मृतम् ॥ ३८ ॥**

[ शां. पा. १–यत्तदग्रे. २–तत्सुखं राजसं स्मृतम्. ]

तद्राजसं रजोगुणसमुद्भवं सुखम् । किं तत् ? यादृष्टेन विषयेणानित्येन शब्दादिनेन्द्रियस्य श्रोत्रादेः संयोगात्संबन्धात्तदात्वे साध्यमानावस्थायाममृतोपमम् । क्षणमात्रमास्वादविशेषहेतुत्वात्सुधारसतुल्यम् । परिणामे तु सिद्ध्यवस्थायां विषोपमम् । तत्कालमेव द्वेष्यत्वात् । यदि वाऽनुभूयमानावस्थाँ, तदा विषयेन्द्रियसंयोगजं सुखं सर्वं मधुरमेव । परिणामस्तु तद्विपाकावस्था, तस्मिन्सर्वमेव विषयसुखमसुखपरिणामं किंचिद्भवितुमर्हति । एतद् दुःखकारणरजोगुणत्वाद् दुःखैकफलं सुखं हेयमेव ॥

अथ तामसम् ,

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**

तत्तामसं तमोगुणनिमित्तकं सुखम् । किं तत् ? यदग्रेऽनुभूयमानावस्थायां चानुबन्धे परिणामवेलायां सुखबुद्ध्या गृहीतं मोहनं वैचित्त्यकारि । यतो निद्राप्रभवम् । तमो हि निद्राप्रमादालस्यादिकार्यम् । तत्र निद्रा सर्वेन्द्रियव्यापारोपरमो मोहावस्थाऽऽलस्यमदाँख्यम् । प्रमादः कार्येष्वनवहितत्वम् । एतानि ह्यनुभूय-

१ राशा १–°संभवं. २ राना १–शब्दादेः. ३ राना १–तदाद्ये. ४ राना १–°वस्थात्वं. ५ राशा १–'असुख' नास्ति. ६ राशा १–तमसो ( येन 'कार्यम्' इति पृथक् पदं भवति ). ७ राशा १–°दाक्ष्यम्. ८ राना १–१–°हितत्वात्.

मानानि मोहात्मकानि परिणामदशाप्राप्तान्यपि मोहकान्येवे । न ह्येषां ज्ञानादि फलं भवति । अज्ञानहेतुकतमोगुणजत्वादेतदज्ञानं फलं सुखमत्यन्तं हेयमेव ॥

एवं ज्ञानादीनां सुखान्तानां केषांचिदेव भावानां प्राधान्यविवक्षया त्रैविध्यमुक्त्वा सर्वत्र सर्वप्रमातृविषयाणां सर्वभावानां सात्त्विकादिभेदेन त्रैविध्यं व्यवस्थितमिति संग्रहेण प्रतिपादयितुमाह,

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥**

व्यक्तार्थः श्लोकः । किंतु दिवीत्यादि भूम्युपलक्षणार्थं वेदितव्यम् । इदानीं षोडशभिरध्यायैर्यथोक्तज्ञाननिष्ठतया कर्मस्ववश्यानुष्ठेयत्वेनावगतेन तेषामपवर्गफलत्वकारणभूतयोस्त्यागसंन्यासयोः प्रागुक्तयोः सम्यक्स्वरूपज्ञाने जातसंदेहमर्जुनं प्रति तयोः सत्त्वप्रतिपादनप्रसङ्गेन त्यागिनामत्यागिनां च विविक्तस्वरूपाभिव्यञ्जकं ज्ञानादीनां गुणभेदकृतं त्रैविध्यमभिधायाध्यायप्रक्रान्तं प्रकृतमर्थमनुबध्नाति ॥

एवं कर्मणां फलत्यागपूर्वकत्वेनानुष्ठितानामपवर्गफलत्वमुक्तं, तानि कर्मशब्दमात्रेण सामान्यतः प्रोक्तानि । विशेषतः पुनः कानीत्याकाङ्क्षानिरासार्थं तत्स्वरूपप्रतिपादनं प्रस्तौति,

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

इह चतुर्णां वर्णानामुक्तवक्ष्यमाणार्थसमयतया[3] द्विप्रकारस्वभावसमुत्थैर्गुणैर्धर्मैः कर्माणि, शास्त्रचोदिताः क्रियाविशेषाः, समनन्तरवक्ष्यमाणभेदेन प्रविभक्तानि, प्रतिवर्णं साधारणासाधारणविभागेन पृथक्कृतानि परमेश्वरेणैवैकेन कर्त्रा, येन स्वेच्छामात्रोपकरणेन[4] परमार्थतो विशुद्धस्वभावमात्राव्यतिरिक्तस्वरूपमपि नानाभावभेदाभासखचितं जगत्क्रीडनकनिर्माणमिदमारचयता वर्णविभागः परिकल्पितः । तथा च भगवतैव प्राक्प्रदर्शितम् ,

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥

---

१ राना १-' एव ' नास्ति. २ राशा १-°गतेषु. ३ राशा १-°समन्वयान्वितप्रकारतया. ४ राना १-मात्रोपकारेण.

तथा, महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥

इत्यत्र पूर्वश्लोके परमेश्वरेच्छामात्रहेतुकत्वं वर्णविभागेऽस्य प्रतिपादितम् । अपरश्लोके चत्वारो मनवश्चातुर्वर्ण्यप्रवर्तकाः प्रजापतयो य उक्तास्तेषामैश्वर्यसर्गविवक्षया[1] महाकल्पप्रारम्भे परमेश्वरेच्छामात्रेण तदभिन्नस्वरूपाणामेव चतुर्धा सर्गोऽवभासितः । यतश्चतुर्वर्णरूपा प्रजेयमुदपादीति दशमे व्याख्यातप्रायम् । इह तु वर्णविभागोपपत्तिप्रदर्शनप्रस्तावेनोदितम् । तदयमत्रापरविभागो[2] विवक्षितः । यदीश्वरेण स्वसर्गारम्भे चत्वारः पुरुषाः सपत्नीकाः प्रविभक्तकर्माणो ब्राह्मणादिव्यपदेशभाजः सृष्टाः । तेषामेकेन युग्मेन ब्राह्मणः सर्ग उत्पादितः । अन्यैः क्षत्रियादिसर्गाः । एवं क्रमेण ब्राह्मणादिवर्णविभागे स्थितो योऽविच्छिन्नसंतानतया ब्राह्मणेन ब्राह्मण्यां जातः स ब्राह्मणः । एवं क्षत्रियादयः । तदित्थमेभिः प्रजापतिभिर्या सृष्टिः कृता साऽऽनुलोम्येन प्रा[3]तिलोम्येन च संकीर्यमाणाऽऽनन्त्यं भजते । तत्र ब्राह्मणेन क्षत्रियायां वैश्यायां शूद्रायां वा जाता अनुलोमजा उच्यन्ते । एवं क्षत्रियेण वैश्यायां शूद्रायां चोत्पन्नाः, वैश्येन शूद्रायामुत्पन्नाः सर्व एवानुलोमजा धर्म्याः । ये तु विपर्ययेण क्षत्रियेण ब्राह्मण्यां, वैश्येन क्षत्रियाब्राह्मण्योः, शूद्रेण वैश्याक्षत्रियाब्राह्मणीषूत्पादितास्ते प्रतिलोमजा अधर्म्याः । एवमनुलोमप्रतिलोमजानामपि सांकर्ये सत्यानन्त्यं प्रजायाः । ये त्ववाच्छिन्नसंतानतया ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायां वैश्येन वैश्यायां शूद्रेण शूद्रायामसंकीर्णतया जातास्ते विशुद्धाश्चत्वारो वर्णाः ॥

इति वर्णविभागे व्यवस्थिते वर्णानां स्वविभागजं कर्मप्रविभागं प्रदर्शयितुमाह,

**शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥**

[ शां. पा. १–दमस्तपः २–ब्रह्मकर्म. ]

शमदमयोर्व्याख्यातस्वरूपो ब्राह्मणो ब्राह्मं ब्राह्मणवर्णस्य संबन्धि, स्वभावजं प्रकृतिसमुत्थं कर्म, शास्त्रचोदिता क्रियेति प्रायेण स्पष्टार्थः श्लोकः । किंचिदमत्र विचार्यम् । इह चेतनाचेतनविभागेन द्विप्रकारे भूतसर्गे, सुरनरातिर्यग्भेदेन

१ राश १–ईश्वरस्वर्ग°. २ १–राना १–अत्रावगतो विव°. ३ राना १–प्रति°.

त्रिप्रकारश्चेतनः सर्गो व्यवस्थितस्तत्र नराख्यसर्गमध्ये शास्त्रीयक्रियाधिकृताः कर्मभूमिजन्मानो ये पुरुषास्तेषां कर्मविभागेण गुणविभागेन च परमेश्वरेच्छावशादेव ब्राह्मणादिभेदेन चतुर्विधत्वं यन्निमित्तं, तत्र कर्मविभाग एव प्रथमं वक्तव्यः। वर्णानां हि कर्माणि साधारणासाधारणरूपाणि नियमितानि च। तथा ब्राह्मणस्य षट् कर्माण्यध्ययनादीनि साधारणानि। वर्णत्रयस्यापि तेषां विहितत्वात्। क्षत्रियवैश्ययोस्तावत्तानि प्रसिद्धान्येव। शूद्रस्यापि शास्त्रचोदितशौचस्नानवैश्वदेवश्राद्धादिक्रियाणामनुष्ठाने विहिताधिकारस्य तदनुष्ठानोपयोगिनीतिकर्तव्यताविज्ञानहेतुं शास्त्रैकदेशाध्ययने दत्त एवाकाशः। तद्विना विहितकर्मानुष्ठानानुपपत्तेः। दानं च तद्वत्सर्वसाधारणमेव ८एवं च साधारणकर्मानुष्ठाने शूद्रस्य भगवता परमर्षिणा परमप्रमाणभूतेन स्ववचसैव कृतोऽवकाशो यश्चतुर्वर्गोपदेशमयं स्वेतिहासं महाभारताख्यमुद्दिश्योक्तवान्॥

श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः। इति।

एवमेतानि साधारणान्यध्ययनादीनि त्रीणि कर्माणि। ब्राह्मणस्याध्यापनयाजनप्रतिग्रहाख्यानि तु त्रीण्यसाधारणानि। तान्येव कर्माणि तु वर्णात्मकस्वभावजानि पूर्वमेव दैवसर्गसंबन्धत्वेन निर्दिष्टानि शमादीनि। एवं साधारणान्यपि ब्राह्मणसंबन्धत्वेनैव किमित्यनेनोक्तानि। दैवासुरसर्गभेदो हि चतुर्वर्णसाधारणस्तत्स्वभावजाश्च गुणास्तथैव साधारणाः। एष एव च गुणविभागो विवक्षित इत्यत्रोच्यते। सर्वमेतद्यथोक्तमुपपन्नम्। किंतु प्रसिद्धत्वाद्वर्णात्मस्वभावजानि सात्त्विकानि शमादीनि प्राधान्यादुक्तानि प्रकरणेऽस्मिन्वर्णकर्मणामपवर्गसाधारणत्वेन विवक्षितत्वादुत्तरेषां क्षत्रियादीनां वर्णात्मकस्वभावजान्येव प्रायेण कर्माणि निर्देक्ष्यति। दैवसर्गात्मस्वभावजानां साधारणानां शमादीनां ब्राह्मणसंबन्धत्वेन प्रदर्शितप्रयोजनानामुपलक्षणमात्रत्वेनेह कतिपयानामेव निर्देशः कृतः। साकल्येन त्वमानित्वमदम्भित्वमित्यादिगुणे, तथा—अभयं सत्त्वसंशुद्धिरित्यत्र पूर्वमेव प्रतिपादितानि॥

अथात्र क्षत्रियाणां वर्णात्मकस्वभावजानि कर्माण्याह,

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥ ४३॥**

[ शां पा. १-क्षत्त्रकर्म. ]

---

१ राना १-श्रावयंश्चतुरो.

क्षात्रं क्षत्रियवर्णस्येदं स्वभावजं परमेश्वरनियमिततादृक्प्रकृतिसमुत्थं कर्म व्यापारः । किं तत् ? शौर्यं शूरभावः, पराक्रमस्तेजः, स्वभावत एव पराभिभवनसमर्थमोजः, धृतिः स्वभावकर्मणि दृढोऽवष्टम्भः, दाक्ष्यं दक्षता चातुर्यम्, तथा संग्रामे पराङ्मुखत्वाभावो निर्भयत्वमित्यर्थः । दानमर्थिनां त्यागः । अप्रत्याख्यानहेतुरीश्वरभावः, प्रभुत्वं पराधीनतासहिष्णुतेति ॥

अथैवंविधानि वैश्यशूद्रयोः कर्माण्याह,

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**

कृषिर्व्रीह्यादिवापनहेतोर्भूहलादिविलेखनम् । गोरक्ष्यं गा रक्षतीति गोरक्षः, तस्य भावो गोरक्ष्यं पशुपाल्यम् । गोशब्देन पश्वन्तराणामपि परिग्रहात् । द्रव्येण द्रव्यान्तरं क्रीणाति, क्रीणंश्च यो जीवति स वणिक्, तस्य भावो वाणिज्यम् । एतद्धर्मात्मकस्वभावजं वैश्यकर्म ॥

**पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

[ शां. पा. १–परिचर्यात्मकं. ]

पर्युत्थानं वर्णत्रयस्य पूर्वस्य शुश्रूषा । तद्रूपं कर्म पूर्ववच्छूद्रस्य स्वभावसमुत्थं कर्म ॥

इति चातुर्वर्ण्यस्य कर्मप्रविभागं प्रतिपाद्य स्वकर्मानुष्ठानस्य प्रकरणविवक्षितफलप्रतिपादनार्थमाह,

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

यथाप्रतिपादितविभागेन स्वे स्वे निजे निजे शास्त्रचोदिते कर्मण्यभिरत आभिमुख्येन सक्तो नरः पुरुषश्चातुर्वर्णिकः परमात्मसमापत्तिरूपामपवर्गलक्षणां सिद्धिं सम्यक्फलनिष्पत्तिं लभतेऽधिगच्छति । न स्वभावकर्मानुष्ठानमात्रेणैव संसिद्धिमधिगच्छति ॥

किंतु यथा येन प्रकारेण विशिष्टेन स्वकर्मनिरतः संसिद्धिमेतां लभते तदभिधीयमानं वस्त्ववधारय,

**यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।**
**स्वकर्मणा तमेवाऽऽर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

[ शां. पा. १–सर्वमिदं. २–तमभ्यर्च्य· ]

---

१ राशा १–अथवैवं°. २ राना १–°वापहेतोः.

यतो यस्मात्प्रतिपादिताद्भुतस्वभावादेकस्मात्परमकरणाद्भूतानां चराचराणां प्रवृत्तिर्यथारवं प्रविभक्तव्यापारः। येन च तथा प्रविभक्तव्यापारे विश्वं समस्तं जगदिदं ततं विस्तारितमिच्छामात्रेणेत्थमवभासितम् । तमेव परमेश्वरं परमात्मानं तदिच्छानियमितेनैव स्वेन प्रतिवर्णं निजेन कर्मणाऽऽच्यर्याऽऽसमन्तादर्चयित्वा परितोष्य मानवः कर्मभूमिजन्मा क्रियास्वधिकृतश्चातुर्वर्णिको मनुष्यः सिद्धिं साध्यलक्षणां फलनिष्पत्तिं लभते । किमुक्तं भवति । यथोक्तपरमात्मस्वरूपानुस्मरणनित्यनिर्विप्लवावहितबुद्धितया चतुर्णामपि वर्णानाममानित्वाभयत्वादिगुणाभिव्यञ्जितदैवसर्गजन्मनामसंकरेण स्वं स्वं कर्मानुतिष्ठतो परसिद्धिप्राप्तिरिति ॥

अत्रोपपत्तिं पूर्वोक्तां स्मारयितुमाह,

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ४७ ॥**

[ शां पा. १–इयं पङ्क्तिः शां. पाठे नास्ति. ]

यो यस्य वर्णस्य शास्त्रचोदितः स्व आत्मीयो धर्मः स्वाध्यायाद्याचारः स विगुणोऽपि मुख्यकर्मानुष्ठानसामर्थ्यादिनाऽनुकल्पादिनाऽनुष्ठितः सन्विगतस्वगुणोऽसंपूर्णस्वाङ्गोऽपि श्रेयान्प्रशस्यतरः । कस्य सकाशात् ? परधर्माद्वर्णान्तराचाराद् । कीदृशात् ? स्वनुष्ठितात् । सुष्ठु सर्वाङ्गसंपूर्णतयाऽनुष्ठितादाचरितात् । कुत एवम् ? यतः स्वधर्मे आत्मीयाचारे युद्धादावनुष्ठीयमानेऽवश्यं निधनं विनाशोऽपि प्रशस्यम् । कस्य सकाशात् ? परधर्मोदयात्क्षत्रियादेरध्ययनाध्यात्मकब्राह्मणादिवर्णान्तराचारानुष्ठानाद्य उदयः सुखादिलक्षणप्राप्तिस्तस्मात्तादृशात् । किमनेनोक्तं भवति । इह द्वये शास्त्रकर्मानुष्ठानेऽधिकृताः। एके रजःसंकीर्णसत्त्वप्रधानचित्ताः स्वर्गादिफलविषयधर्मानुष्ठायिनः। अपरे तु विशुद्धसत्त्वप्रधाना यथोक्तापवर्गफलनिवृत्तिविषयधर्मानुष्ठायिनः । तेषामुभयेषामपि दैवसर्गभाजां स्वधर्मानुष्ठानादेवोभयरूपतया सिद्धिरुपपन्ना न तु परधर्मानुष्ठानात् । यतः, परेषां स्वधर्मस्थानां स्वर्गादिफलप्राप्तिलक्षणा सिद्धिः श्रूयते, परधर्मस्थानां तु प्रत्यवायः श्रूयते । उत्तरेषां स्वधर्मनिष्ठत्वे सम्यग्ज्ञाननैर्मल्यसंपत्तिः, परधर्मनिष्ठत्वे ज्ञानकालुष्यमेव संपद्यते । यतः शास्त्रचोदितस्य प्रबन्धप्रवृत्तस्य स्वस्य कर्मणस्त्यागः परकर्मणश्चोपादानं द्वेषं रागं च विना न संभवति तत्संनिधौ च । कीदृशं च

---

१ राशा १–॰णाऽभ्यर्च्य.

सम्यग्ज्ञाननैर्मल्यम् । इत्थं दैवसर्गयोगित्वादपवर्गार्थिभिरपि सर्ववर्णैर्यथास्वमसंकरेणानुष्ठातव्यम् । स्वकर्म कथंचन न त्याज्यम् । न हि कर्मत्यागमात्रसाध्याऽपवर्गप्राप्तिः । सा हि ज्ञानादेव सिध्यति । ज्ञानं च दैवसर्गाद्यव्यभिचारितयोक्तम् । तच्च—अमानित्वमदम्भित्वमित्यादिना त्रयोदशेन साकल्येन प्रतिपाद्य षोडशारम्भे—अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिरित्यादौ दैवगुणसामग्रीकथने प्रथममेवानूदितम् । तच्च सर्ववर्णसाधारणम् । दैवस्वर्गादिभेदस्य तथारूपत्वात् । वर्णानां कर्मविभागस्य सर्गयोश्च गुणविभागस्य प्रबन्धेन पृथङ् निर्देशात् । यदि हि द्विजातय एव वर्णा दैवसर्गाः, शूद्रवर्णश्चाऽऽसुर इति स्यात्तद्वर्णमुखेन सर्गभेदमुखेन वा कर्मप्रविभागाद्यदभिधीयते । न चैतदुपपद्यते । सर्गभेदस्य सर्ववर्णसाधारण्ये सति गुणानां व्यभिचारदर्शनात् । तथा ब्राह्मणादयोऽपि दर्पाद्यासुरसर्गगुणयोगिनो दृश्यन्ते । शूद्रा अप्यदम्भित्वादिदैवसर्गगुणयोगिनो दृश्यन्ते । तस्माद्दैवसर्गगुणभाजां सर्ववर्णानां यथोक्तापवर्गफलसाधनभूतं ज्ञानं साधारणमेव, कर्म तु प्रविभक्तम् ॥

तच्च ज्ञाननिष्ठतयाऽनुष्ठीयमानमपवर्गहेतु संपद्यते, इति न तस्य कस्यांचिदवस्थायां त्याग उपपद्यत इति प्रतिपादयितुमाह,

**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।**

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**

वर्णात्मकस्वभावप्रतिबद्धं स्वाध्याययजनदानादि कर्म कुर्वाणो ज्ञाननिष्ठतयाऽनुतिष्ठन्किल्बिषं संसारबन्धनलक्षणं पापं न लभते, त्यजंस्तु सर्वकर्म दुर्वाररागद्वेषात्तत्किल्बिषं प्राप्नोत्येवेत्यसकृत्प्रतिपादितम् । अतः पूर्वोक्तोपपत्त्या परमेश्वरेच्छावशात्सहैव जातं वर्णात्मकस्वभावजातं विगुणमपि कर्म न त्याज्यमेव ॥

अत्र हेतुमाह,

**सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ ४८ ॥**

यस्मात्सर्वारम्भाः समस्तकर्माणि धूमेनाग्निरिवाव्यभिचारिणा दोषेण मलेनाऽऽवृताः । ततश्च प्रबन्धप्रवृत्तशास्त्रचोदितकर्मत्यागलक्षणेऽप्यारम्भो दोषेणाज्ञानरूपेणाऽऽवृत एव । अज्ञानविविक्तं तु तद्यथोक्तफलसाधनं स्यात् । यावता तस्य त्याग एवाज्ञानम् ॥

---

१ राना १—तत्त्वज्ञान°.

यथा त्वस्यजन्नेव कर्म ज्ञानफलभाग्भवति तथा प्रतिपादयितुमाह,

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

सर्वत्र सर्वस्मिन्विहिते वर्णस्वभावजे कर्मण्यनुष्ठीयमान एवाऽऽसक्तबुद्धिः पूर्वव्याख्यातसङ्गदोषरहितमतिः, तथा निषिद्धात्कर्मणो जितात्मा निगृहीतान्तःकरणः, तथा विगतस्पृहः सर्वत्र सततसुसंपूर्णस्वात्ममयत्वदर्शित्वादनित्यात्स्वर्गसुखादेर्विगता व्यावृत्ता स्पृहाऽभिलाषो यस्य स तादृशः, परमां प्रकृष्टां दोषरहितां नैष्कर्म्यसिद्धिं समधिगच्छति, सम्यग्लभते, सर्वकर्मत्यागित्वफलं परमात्मसमापत्तिलक्षणं प्राप्नोति । केन ? संन्यासेन व्याख्यातस्वरूपेण फलाभिसंधित्यागात्मना, न तु कर्मत्यागात्मना ॥

इत्थं येन ज्ञानेन संस्कृतं क्रियमाणमेव व्यक्तं भवति, तस्य क्रमेण परं प्रकर्षं प्रतिपादयितुमुपक्रमते,

**सिद्धिं प्राप्तो यथा ब्रह्म प्राप्नोति तन्निबोध मे।**
**समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

[ शां. पा. १–तथाऽऽप्नोति नि°. ]

उपायभूतस्य ज्ञानस्य परा निरुत्तरा निष्ठा प्रान्तभूमिः । यतः परं ज्ञेयं न संभवतीत्यर्थः । तदुभयमपि कथ्यमानमवधत्स्व, एवंविधो ब्रह्म प्राप्नोतीति ॥

पूर्वं तत्प्रकारमाह,

**बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**
**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

---

१ राशा १–य एवं°. २ राशा १–' इति ' नास्ति. ३ राशा १–' तत् ' स्थाने ' तावत् '

एवंविधो भवद्योगी ब्रह्मभूयाय ब्रह्मभावाय परमात्मसमापत्तये कल्पते, समर्थो भवतीति । कीदृशः ? प्रथमं तावद्दैवसर्गयोगित्वात्सहजया विशुद्धया प्रलीनरजस्तमस्कत्वाद्विशुद्धसत्त्वैकमय्या निर्मलया बुद्ध्या प्रज्ञया युक्तः। स हि परमसिद्धिसाधनभूतधर्मग्रामाग्रणीः सहजो गुणो योगिनै एव । तस्मिन्सति धृत्या पूर्वोक्तलक्षणया सात्त्विक्या दृढावष्टम्भलक्षणयोत्साहशक्त्याऽऽत्मानमन्तःकरणं नियम्य वशे व्यवस्थाप्य, तद्वशाच्छब्दादीन्विषयांस्त्यक्त्वा सर्वात्मना परिहृत्य, शास्त्रविहितेषु विषयेष्वत्याज्येषु सङ्गमूलौ रागद्वेषौ तदुपादानज्ञानहेतू महाक्लेशौ व्युदस्य फलाभिसंधानाभावाद्विक्षिप्य तिरस्कृत्य पूर्वं मुख्यं परिकरबन्धं कृत्वा विविक्तसेवी, समाधिव्युत्थानहेतुचेतनाचेतनभावरहितो देशो विविक्तः, तं सेवितुं शीलं यस्य स तथाविधः । तथा लघ्वाशी लघुप्रमाणमन्नं वृत्तिसमवस्थाकारणभूतमात्रं वालावहितत्वादिगुणपरिशुद्धमल्पमाशितुं शीलं यस्य स तथा । निगृहीतान्यन्यविषयेभ्यः प्रत्याहृतानि वाक्कायमानसानि वचनशरीरान्तःकरणानि येन स तथाविधः । इत्थंभूतश्च सततं नित्यं ध्यानयोगपरो ध्यानेन परतत्त्वात्मकोपेयवस्तुचिन्तनेन यो योगः संबन्धस्तन्निष्ठः । एवंविधगुणसामग्र्या वैराग्यं दृष्टानुश्राविकविषयं वितृष्णत्वं सत्त्वगुणविषयं च समुपाश्रितः सम्यगास्थितः । तथा सत्येतान्दोषान्विमुच्य । कम् ? अहंकारं तावत् । अनात्मनि शरीरादावात्मप्रत्ययं सर्वदोषाधिराजम् । तथा बलं, शक्याशक्यविवेकपरिहारेण कार्येषु हठम्, तथा दर्पं, स्वल्पस्यापि सिद्धिलेशस्योपलब्धेश्चित्तोद्रेकम् । तथा कामं रागनिमित्तकमिष्टेषु विषयेषु संकल्पम् । तथा क्रोधं द्वेषनिमित्तकं चित्तेन्द्रियक्षोभं, तथा परिग्रहं देहदारदारकद्रविणादिषु स्वस्वबुद्ध्या स्वीकारम् । अत एव परिग्रहत्यागान्निर्ममो ममकारलक्षणाद् बन्धान्निष्क्रान्तस्ततश्च नित्यनिर्विकारपरमोपादेयस्वरूपमात्रपरायणत्वाच्छान्तो विगतसकलविकल्पक्षोभः, इत्थंभूतो योगी ब्रह्मभूयाय कल्पते ॥

तानेवंविधः,

---

१ राना १–'भवद्' नास्ति. २ राशा १–सा हि. ३ राशा १–°न अत एव. ४ राना १–दृष्ट्याऽव°. ५ राना १–°मनोवृत्ति°. ६ राना १ कालराहितत्वादि°. ७ राशा १–°श्रविक°. ८ राना १–कार्येष्वर्हे. ९ राना १–ममकारबन्धात्.

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

[ शां. पा. १–काङ्क्षति. ]

एवमनेन क्रमेण ब्रह्मभूतो ब्रह्मैकपरायणत्वात्तद्भावमापन्नो निर्विशेषतयैव प्रसन्नात्मा विगतद्वैतप्रत्ययकेलङ्कत्वात्प्रसन्नः स्वाभाविकविशुद्धियुक्त आत्मा स्वभावो यस्य स तथाविधः सन्न शोचति, नित्याविनश्वरत्वात्ममयविश्वत्वात्कस्याचिदपि भावस्य स्वत्वेनापरिग्रहात्तदभावे न परिदेव्यते । नाप्यनेनैव न्यायेन कस्मिंश्चित्प्राप्ते हृष्यति, हर्षमनुभवति । एते हि सर्वे भावा मायापहतदृशां भावाभावभ्रान्तिमुद्भावयन्तो हर्षशोकात्मकविकारहेतुतामापद्यन्ते, न तु सर्वसाम्यदर्शिनो योगिन इत्यर्थः । तथा ज्ञानस्य परां निष्ठां परां निरतिशयां चतुर्थीं काष्ठां प्राप्तज्ञानलक्षणां मद्भक्तिं मत्स्वरूपोपासां लभते प्राप्नोति । किमुक्तं भवति । परमात्माद्वैतप्रत्ययलक्षणा या ज्ञानस्य परा निष्ठा, सैव परा मद्भक्तिरिति । तथा चैनां स्तुवन्ति भक्तिमन्तः ।

मुक्तौ बहुविधा वादा विदुषां स तु तत्त्ववित् ।
यस्त्वद्भक्तेः परा काष्ठा मुक्तिरित्यन्तनिश्चयः ॥

तथा च,

**भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः ।**
**ततोऽसौ तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥**

[ शां. पा. १–यावान्. २–ततो मां. ]

एवंविधया निरुत्तरया ज्ञानस्वरूपया भक्त्या मां परमात्मानमेकतत्त्वमभिजानाति, आत्मत्वेनाऽऽभिमुख्येन वेत्ति । कस्माज्जानाति ? तत्त्वतः परमार्थतोऽद्वयचित्प्रकाशात्मको योऽहं मत्स्वरूपः, यश्चास्मि, यो भवामि, तां परां सत्तां भजंस्तादृक्स्वरूपप्रत्यवमर्शरूपया स्वशक्त्या नित्यमवियुक्तस्तिष्ठामि । अतत्त्वविदो हि नैवंविधमात्मत्वेन प्रत्यभिजानते । किंतु ते व्यतिरिक्तं परमं वेद्यं च मायावशविपर्यस्तज्ञानत्वाज्जानन्ति । यथोक्तमभियुक्तस्त्वेवंविधं मां सत्येन रूपेण ज्ञानचक्षुषा प्रत्यभिज्ञाय ततः परं मय्येव विशति, अहमेव संपद्यते । एवंविधे हि मय्युपास्योपासकोपासाविकल्पहानाद् ब्रह्मैव परं भूत्वा सिद्धार्थो भवतीत्यर्थः ॥

---

१ राशा १–°संकल्पत्वात्. २ राशा १–'वि' नास्ति. ३ राना १–मायोप°. ४ राना १–ज्ञानपरां निष्ठतां प्राप्त इत्यर्थः । ५ राशा १–यथाऽस्मि.

एषा च परा सिद्धिः काष्ठा क्रमप्राप्या । ततश्चैवंविधज्ञाननिष्ठोऽपि यो नियतशरीरसंबन्धं तावदनतिक्रान्तो योगी भवति तस्य प्रवृत्तिं प्रतिपादयितुमाह,

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

सर्वाणि यज्ञदानादीनि कर्माणि सदा नित्यं कुर्वन्ननुतिष्ठन्नपि मद्व्यपाश्रयः, अहं सर्वकर्तृत्वेन प्रतिपन्न आश्रयोऽवलम्बनं यस्य स तादृशः सन्मत्प्रसादान्मम परमात्मनः स्वाभाविकात्प्रसादादानुकूल्यात्मत्यभिज्ञेयतामापन्नात्सतो हेतोः शाश्वतं नित्यमत एवाव्ययमक्षयं पदं परब्रह्मस्वरूपं स्थानं प्राप्नोत्यधिगच्छति । यत्प्राप्यैव वैश्वरूप्येणाऽऽत्मानमधिगच्छन्नियतदेहसंबन्धलक्षणबन्धात्यन्तविनाशरूपां परां सिद्धिं प्राप्नोतीत्यर्थः ॥

एवं यथोक्तोपदेशसर्वस्वं सम्यगवधार्य त्वमप्येवं समाचरेत्यर्जुनायोपदेष्टुमाह,

**चेतसा सर्वकर्माणि मयि संन्यस्य भारत ।**
**बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥**

[ शां. पा. १–मत्परः. २–उपाश्रित्य. ]

सततं नित्यमेव सर्वास्ववस्थासु मच्चित्तो मय्येकस्मिंस्तत्त्वे परब्रह्मणि चित्तमन्तःकरणं यस्य स तथाविधो भव । परमार्थतो मद्व्यतिरिक्तं पदार्थान्तरं न संभवत्येव । ततो व्यवहारभूमौ यद्यदिदंतया प्रतिपद्यसे तत्तत्पूर्वप्रतिपादितोपपत्त्या परप्रकाशचित्स्वरूपतया भावयेत्यर्थः । किं कृत्वा मच्चित्तो भव ? सर्वाणि स्वकर्माणि क्रियमाणान्येव चेतसा मनसैव तत्फलनिःस्पृहेण मयि यथोक्तस्वरूपे परमात्मनि संन्यस्य, तत्कृताभिमानत्यागेन निक्षिप्य । कथं चैतत्संपद्यत इत्याह, बुद्धियोगं समाश्रित्य । बुद्धिर्यथाप्रतिपादितं ज्ञानं, तत्र योगः सततमव्युत्थानः समाधिस्तं समाश्रित्याऽऽलम्ब्य, तन्निष्ठो भूत्वा मच्चित्तो भवेति वाक्यार्थः ॥

ततश्च,

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहंकारं न मोक्ष्यसि विनङ्क्ष्यसि ॥ ५८ ॥**

[ शां. पा. १–°कारान्न श्रोष्यसि. ]

मत्प्रसादान्मदनुग्रहान्मूलकारणभूतान्मच्चित्तो मदेकालम्बनमानसः सर्वदुर्गाणि सर्वकृच्छ्राणि हर्षशोकमोहमूलादीनि निबन्धकारणानि तरिष्यसि लङ्घयिष्यासि । अथैवमप्युपदिष्टस्त्वं चाहंकारं जात्याद्यभिमानावच्छिन्नशरीराद्यात्मप्रत्ययं न मोक्ष्यसि, तद्विनङ्क्ष्यसि, पारमार्थिकस्वरूपाप्रतिपत्तेर्विनाशमभावमेव प्राप्स्यसि ॥

न चैतत्स्वाधीनं तवेत्याह,

**यदहंकारमाश्रित्य न योत्स्यामीति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यते ॥ ५९ ॥**

[ शां. पा. १–योत्स्य इति. २–°क्ष्यति. ]

एवंविधमवस्तुविषयमहंकारं कर्तृताभिमानमाश्रित्य 'न योत्स्यामि' धर्म्यमवश्यकरणीयं युद्धं न करिष्यामीति यन्मन्यसे बुध्यसे, एष एवंविधस्ते व्यवसायो बुद्धिर्निश्चयो मिथ्या निष्फल एव । यतः प्रकृतिः स्वभावः परमेश्वरेच्छानियमितयुद्धादिकर्तृकस्त्वां नियोक्ष्यते, वर्णस्वभावे कर्मणि प्रवर्तयिष्यते ॥

एतदेव स्फुटयितुमाह,

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥**

व्याख्यातमेवैतत् ॥

किं बहुनोक्तेन ? समुपदेशसर्वस्वं सिद्धान्ततया प्रतिपद्यस्वेत्यर्थः,

**ईश्वरः सर्वभूतानां हृद्येष वसतेऽर्जुन ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥**
**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां सिद्धिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥**

[ शां. पा. १–हृद्देशेऽर्जुन. २–शान्तिं. ]

एष प्रबन्धतः पुनः पुनः प्रतिपादित ईश्वरः परमात्मा सर्वभूतानां समस्तप्राणिनां हृदि हृदये सर्वसंविदधिकरणभूते देशे वसते नित्यं तिष्ठति । किं कुर्वन् ? यत्किंचिदेषां सर्वभूतानां ज्ञानात्मकं क्रियात्मकं वा परिस्पन्दितं तत्सर्वं स एवैकः परमार्थतः कुर्वन्नपि मायाशक्त्यवभासितपरस्परविभिन्नरूपनानारूपाणि तानि सर्वभूतानि प्रत्येकमहं करोमीति मिथ्याभिमाननिवेशेन भ्रापयन्-

व्यामोहयन्कथयन् । यन्त्रारूढानि यन्त्रं सूत्रसंचारादियुक्तिसंपाद्याचेतनवस्तुचेतनक्रियाभिव्यञ्जकं काष्ठादिसंनिवेशविशेषमिवाऽऽरूढानि । यथा केनापि युक्तिमता विशिष्टसंनिवेशविरचिते यन्त्रेऽधिरूढेष्वचेतनेष्वपि भावेषु चेतनाक्रियावेशः क्रियते, तथा परमेश्वरेण शरीरयन्त्रमारोप्य कर्तृभूतान्यपि भूतानि कर्त्रभिमानभाञ्जि क्रियन्त इत्यर्थः । एतद्यन्त्रारूढो वेति छान्दसनपुंसकबहुवचनविवक्षया पाठं पठन्ति । ते च शरीरं रूप्येत्वेन व्याचक्षते । तत्र वस्तुनि न कश्चिद्विशेषः । यत एवं तत्त्वतः सर्वकर्ता परमेश्वरस्तदा सर्वथा-निरस्तमिथ्याभिमानस्तमेवैकं शरणं गच्छ, आत्मत्वेन प्रतिपद्यस्व । मिथ्याभिमानजेभ्यो हर्षशोकादिबन्धनेभ्यो विमुक्तो ममैवैकस्येश्वरस्य प्रसादादनुग्रहादभिव्यक्ताद्वा स्वाभाविकान्नैर्मल्यात्परां सिद्धिं निरुत्तरां ज्ञाननिष्ठां, तत्फलं च परं स्थानं निरुत्तरं धाम ब्रह्मरूपं प्राप्स्यस्यधिगमिष्यसि ॥

इति निरवशेषमनुत्तरज्ञानसर्वस्वमुपसंहरन्नाह,

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यदिच्छसि तथा कुरु ॥ ६३ ॥**

[ शां. पा. १–यथेच्छसि. ]

स्पष्टार्थः श्लोकः । केवलं नार्जुनं प्रति भगवत एव संभावना । नातः परं रहस्यं वक्तव्यमस्तीत्येतावत्तात्पर्यमेतत् । अर्जुनः साक्षात्परस्वरूपदर्शितत्वेनानुगृहीतः कथमेवंविधोक्तिविषयः स्यात् । तथा सर्वोपदिष्टानामुपदिष्टपरमरहस्यज्ञानविषये श्रद्धाविशेषोद्धलनार्थं भगवतैतदादिष्टम् ॥

तथा चानुगृहीतान्प्रति प्रसादेष्वतृप्यन्परमेश्वरः पुनः पुनः प्रतिपादितमर्थमुपसंहारसमये सिद्धान्ततया हृदि निवेशयन्सविशेषं प्रशंसापूर्वं पुनरप्याह,

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

[ शां. पा. १–दृढमिति ततो. ]

इदं मे परं निरुत्तरोपादेयार्थप्रतिपादकत्वात्प्रकृष्टं वचो वचनम् । अत एव सर्वगुह्यतमं, सर्वेषां गुह्यानां रहस्यभूतानामर्थानामुत्तरोत्तरातिशयसंभवादिदं निरतिशयार्थप्रतिपादकं गुह्यतमं सर्वगुह्यानां निष्ठारूपं श्रुत्वाऽवधारय । यत

१ राना १–शरीररूपत्वेन. २ राना १–तद्वस्तुनि.

इष्टस्त्वं मे प्रियो दृढमतिश्च स्थिरबुद्धिरतो हेतोस्ते हितमनुत्तरमनुकूलं वस्तु वक्ष्यामि कथयिष्यामि । प्रियायार्थिने स्थिरचित्ताय च शिष्याय रहस्यं परमपि वक्तव्यमित्यनेनोपदिष्टम् ॥

तं वक्तुं प्रतिज्ञातमर्थमाह,

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

मामेवैष्यसीत्येतदन्तं नवमे वितत्य व्याख्यातम् । किंत्वेतावन्मात्रं ज्ञानसर्वस्वमिति प्रतिपादयितुं भगवान्प्रतिज्ञां बध्नाति । यतः स्वभावत एव प्रियोऽसि मे ततः सत्यममृषा तव प्रतिजाने, प्रतिज्ञां करोमि, यथाऽनेन भक्तिलक्षणेन परेण समाधिना मां यथोक्तस्वरूपमेष्यसि प्राप्स्यसि, मदेकभावमाप्स्यसीति ॥

किंच,

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

इति प्रतिपादितज्ञानमहंभावोपदिष्टस्वकर्मानुष्ठानरूपत्वात्सर्वानशेषान्धर्मानाचारान्परित्यज्य परिहृत्य मामेवासकृत्प्रतिपादितस्वरूपमेकमद्वितीयं परमात्मलक्षणं परं तत्त्वं शरणमाश्रयं परां गतिं व्रज गच्छ मत्समापन्नो भवेत्यर्थः । यदि वाऽनुष्ठेयत्वेनोपदिष्टानां सर्वधर्माणां सङ्गादिदोषरहितत्वे सति फलानभिसंधानमेव परित्यागः । तच्च यथोक्तस्वभावपरमात्मसमापत्तिमात्रैकफलालम्बनमनस्तया भवतीति सर्वधर्मान्कुर्वन्नपि मदेकशरणमानसो भवेत्युक्तम् । तथा चानन्यशरणतयाऽहमाश्रितः संस्त्वां सर्वपापेभ्यः संप्रति पापबुद्ध्या गृहीतेभ्यो ज्ञातिगुरुवधादिभ्यो निःशेषेभ्यः पापेभ्यो मोक्षयिष्यामि व्यतिरेचयिष्यामि । अतो यथोक्तज्ञानशिथिलमतित्वान्मा शोकं कार्षीः । इदमत्र तात्पर्यम् । एकस्मिन्परमार्थे सति मत्स्वरूपे परस्मिंस्तत्त्वे यदा 'पश्यन् शृण्वन्स्पृशन् जिघ्रन्' इत्यादिना प्रतिपादितक्रमेण निबिडावधानलीनचित्तत्वान्मदेकभावमापन्नो भविष्यसि तदा सर्वासु क्रियासु ज्ञानेषु वचनेषु च पुण्यपापविकल्पोपप्लवः स्वयं विगलिष्यतीति ॥

इति निःशेषं परं रहस्यमुपदिश्यात्रानुपदेश्यपुरुषपरिहारद्वारेण संग्रहत उपदेश्यलक्षणं प्रतिपादयितुमाह,

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

यदि चैतद्यथोपदिष्टं सर्वमवधारितं भवता स्वगृहीतं च कृतं, यदि नित्यानुशीलनात्परं प्रत्यवश्यप्रवचनयोग्यतां प्रतिपत्स्यसे, तदिदं वस्तु तवातपस्काय त्रिप्रकारतया व्याख्यातेन तपसा राहिताय न वक्तव्यम् । तपस्विनेऽप्यभक्ताय प्रतिपादितचतुरर्थवस्तुभक्तिलक्षणयोगशून्याय, तथाऽशुश्रूषवे श्रवणेच्छारहिताय न वक्तव्यम् । शुश्रूषवे मदभ्यसूयापराय न वक्तव्यम् । संनिहितेन तेन तुच्छेन हेतुना शुश्रूषवो यथोक्तस्वरूपाय मह्यं पुनः पुनः परमेश्वराय मदनुग्रहाभावात् श्रद्धालक्षणप्रकृष्टगुणविनाकृताः सन्तोऽभ्यसूयन्ति । नास्त्येवैवंलक्षणः कश्चिदेकः परमेश्वर इति तत्सद्भावं वादिभिः सह विवदमाना गर्हामेवाऽऽरभन्ते । तदिदमत्र संक्षेपत उपदेश्यलक्षणमुक्तम् । यो यथाप्रतिपादितस्वरूपाभ्यां परमेश्वरानुग्रहैकनिमित्ताभ्यां दैवसर्गाव्यभिचारिणीभ्यां भक्तिश्रद्धाभ्यां युक्तः स एव चतुर्ष्वपि वर्णेष्वेतज्ज्ञानविषयः । यतो भगवता वर्णानां कर्माण्येव प्रविभक्तत्वेन प्रतिपादितानि । ज्ञानं तु साधारण्येन । यतस्तेषां स्वकर्मविभागं प्रतिपाद्याऽऽह—

यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

इत्यनेन स्वकर्मानुष्ठाननिरतानां सर्ववर्णानां परसिद्धिप्राप्तिः साधारणत्वेन निर्दिष्टा । न च स्वकर्मणा यथोक्तज्ञानशून्यानां परसिद्धिप्राप्तिहेतुत्वमस्तीति ज्ञानस्य सर्ववर्णसाधारण्यं स्फुटमेव भगवता दिष्टम् ॥

एवंविधश्चोपदेश्यः पुरुषो यथावदधीतावगतानुष्ठितार्थं गीताशास्त्रम् ,

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा से मामेष्यत्यसंशयम् ॥ ६८॥**

[ शां. पा. १–मामेवैष्यत्यसंशयम्. ]

यः कश्चिदिदं यथोक्तं परमं गुह्यं सर्वज्ञानोपनिषद्भूतं मद्भक्तेष्वातांद्यवस्थावर्तिष्वभिधास्यत्युपदेक्ष्यति, सोऽन्ते मामेष्यति । ब्रह्मैव परं संपत्स्यत इत्यर्थः । किं कृत्वाऽभिधास्यति ? मयि परमेश्वरे परां यथोक्तज्ञाननिष्ठात्मिकां भक्तिं सपर्यां कृत्वा निष्पाद्य । किमुक्तं भवति ? स्वयं परभक्तदशाधिरोहपर्यन्तं ज्ञानमिदमात्मीकृत्य यः परस्मै भक्ताय प्रयच्छति स मां मुख्यं फलमाप्नोतीति ॥

एवंविधाज्ज्ञानिनः,

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

तस्मात्परमगुह्यज्ञानोपदेशेन मदनुगृहीतभक्तजननिरुपमोपकारकारिणः पुरुषोत्तमात्सर्वमनुष्येषु मध्ये न कश्चिदन्यः प्रियकृत्तम इष्टवस्तुसंपादने सातिशयो भविता भविष्यति। एतदेव हि मम प्रियं यद्भक्तजनानुग्रहः। तमेव यः पुष्णाति तेन मे सातिशयं प्रियं कृतं स्यात्। किंच, न च तस्मात्तथाविधादन्यः कश्चिन्मे प्रियतर इष्टतरो भविता, तस्यैवाहं प्रियकारीत्यर्थः॥

एवं निष्पन्नस्य योगिनो ज्ञानस्योपदेशफलमुक्त्वा श्रद्दधानस्याऽऽरुरुक्षोः पाठफलं प्रदर्शयितुमाह,

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

यश्च दैवसर्गभाक्कश्चिद्भक्तिश्रद्धासंस्कृतचित्तोऽपि प्रथमकल्पितत्वात्संप्रत्यनुष्ठानप्रावीण्यं समापन्नः सन्नध्येष्यते वस्तुभावनापरतयेममावयोस्तव च मम च संवादं संकथनं धर्म्यं ज्ञानलक्षणात्परस्माद्धर्मादनपेतं पठिष्यति, तेनाहं यथोक्तज्ञानात्मकेन प्रकृष्टेन यागेनेष्टः संतर्पितः स्यामिति मे मतिर्निश्चिता प्रतिपत्तिः॥

इदानीमध्ययनासमर्थस्यापि श्रद्दधानस्य श्रवणफलमाह,

श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥

योऽप्येतच्छ्रवणमात्रं श्रद्धाभक्त्यादिगुणयुक्तोऽस्य शास्त्रस्य कुर्यात्स यज्ञदानादिपुण्यकर्मकृतां संबन्धिनो लोकान्भोगभुवनानि प्राप्नुयात्। इत्यस्याऽऽत्मज्ञानार्थस्य शास्त्रोपदेशाध्ययनश्रवणभेदेन परसूक्ष्मस्थूलविभागेन श्रद्धादिगुणविभागेन श्रद्धादिगुणविशिष्टमनुष्यमात्रसामान्येन त्रिविधं फलमादिशता भगवता सर्वेषां यथोक्तगुणविशिष्टानां ज्ञानाधिकारवतामुपदेशादिष्वधिकारोऽनुज्ञातः॥

एवं परब्रह्मसमावेशलक्षणपरमसमाधिनिष्ठमात्मानं कृत्वा भगवता यदुकुलावतीर्णेन परमेश्वरेणेयता ग्रन्थसंदर्भेण परमरहस्यभूतं ज्ञानं यत्प्रतिपादितं तस्य सम्यग्बोधाबोधजिज्ञासयाऽर्जुनमाह,

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसंमोहः विनेष्टस्ते धनंजय ॥ ७२ ॥

[ शां. पा. १-प्रनष्टः. ]

अपि नामैतद्यथोक्तमेकाग्रेणानन्याविषयेण मनसा त्वया श्रुतं, श्रुतिमात्रेण परिगृहीतम् । ततश्च वस्तुभावनावशात्संजातनिश्चयस्य कच्चित्तथाऽज्ञानसंमोहाज्ञानात्तत्त्वाप्रतिपत्तेर्यः संमोहः सहजावश्यानुष्ठेयकर्मविचिकित्सालक्षणं वैचित्र्यं, स विनष्टः प्रध्वंसमापन्नो न वेत्युच्यतामिति शेषः ॥

अत्र प्रत्युत्तरम्,

अर्जुन उवाच ।

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।**
**स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

हे भगवन्नच्युत, परब्रह्मस्वरूप स्वात्मैकनिष्ठेतिविज्ञातैश्वर्यं भगवन्तमुचितेनाभिधानेनाऽऽमन्त्र्याऽऽह—त्वत्प्रसादात्परस्वरूपदर्शनलक्षणान्मम मोहो विनिष्टः। अनात्मन्यात्मप्रत्ययरूपमज्ञानं प्रध्वस्तम् । यतः स्मृतिर्लब्धा, सत्यात्मानुस्मरणं प्राप्तम् । अतश्च गतसंदेहो निवृत्तसंशयः स्थितोऽस्मि । यद्वशाद्धर्ममप्यधर्मत्वेन युद्धं प्रतिपद्यमानो निवृत्तोत्साह आसं स संशयो विगलितः । ततस्तव वचनं यथोक्तज्ञाननिष्ठतया स्वकर्मानुष्ठानोपदेशात्मकपरब्रह्मसमापत्तिफलं वाक्यं करिष्ये क्रियया संपादयिष्यामीति ॥

धृतराष्ट्रपरिपृष्टसैन्यसंनिवेशकथनप्रसङ्गे कृष्णार्जुनसंवादद्वारेण परमरहस्यज्ञानमर्थं प्रकरणमिदं येनैव प्रक्रान्तं तत्परिसमाप्तं सदुपसंहर्तुं स एव,

संजय उवाच ।

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

स्पष्टार्थः श्लोकः ॥

इत्थमाश्चर्यभूतपरमरहस्यश्रवणे कुतस्तवाधिकार इत्याह,

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतरं महत् ।**
**योगं योगीश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥**

[ शां. पा. १–एतद् गुह्यमहं परम्.—शां. भाष्ये तु 'एतं संवादं गुह्यतमं परं.' २—योगेश्वरात्. ]

एतदत्यन्तरहस्यं भगवतो यदुकुलावतीर्णात्कृष्णाभिधानात्परमेश्वरात्, प्रयत्नाहितयोगानां योगिनामीशितुः सहजसिद्धिनिरतिशयसमाधेः स्वयमात्मनैव साक्षा-

द्व्यवधानेन योगं यथाप्रतिपादितज्ञाननिष्ठतया स्वकर्मानुष्ठानलक्षणं निरतिशयं समाधिमर्जुनायोपदिशतोऽहमशृणवम् । कुतो हेतोः? व्यासप्रसादाद्भगवत्कृष्णद्वैपायनानुग्रहात्तेन हि तस्मै तादृङ्महायोगश्रवणपरमेश्वररूपदर्शनादियोग्यताधानाय दिव्यं ज्ञानमयं चक्षुर्वितीर्णम् । अत्रैतदित्यादिपदानां सामान्योपक्रमविवक्षया नपुंसकत्वम् । वाक्यस्य विशेषाभिधानपर्यवसितत्वाद्योगशब्दः पुंस्यवबोद्धव्यो योगं बोधं कर्मयोगाख्यं समाधिं कथयतो भगवत एतत्प्रकरणं गुह्यतरमहं श्रुतवानिति व्याख्येयम् ॥

अत एवाऽऽह,

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**
**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महाराज प्रहृष्ये च पुनः पुनः ॥ ७७ ॥**

[ शां. पा. १—संस्मृत्य. २—महान् राजन् . ३—त्हृष्यामि च. ]

निगदव्याख्यातौ श्लोकौ ॥

अथ येनाभिप्रायेण कुरुपाण्डवसैन्ययोर्जयपराजयजिज्ञासारूपेण धृतराष्ट्रः पृष्टवांस्तत्र निश्चयमाह,

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा इति मतिर्मम ॥ ७८ ॥**

**इति श्रीभगवद्गीतासूपनिषत्स्वष्टादशोऽध्यायः ॥ १८ ॥**

[ शां. पा. १—योगेश्वरः २—नीतिर. ]

यत्र पक्षे वैश्वरूप्यदर्शनादिना प्रकटितानन्यसाधारणयोगैश्वर्यमहिमा भगवान्हरिस्तिष्ठति, यत्र चाप्रतिमनिजपराक्रमपरितोषितपशुपतिः पार्थः पृथासूनुः कार्मुकभृत्तिष्ठति तत्र पक्षे श्रीर्लक्ष्मीर्विजयः सकलविपक्षक्षपणात्सर्वातिशायित्वं, भूतिर्भावः सत्ता च ते स्थिरेति प्रत्यक्षदृष्टकृष्णार्जुनप्रभावातिशयस्य मम बुद्धिरित्योम् ।

अध्यायश्च नगेन्दुकः कविवरस्यायं, प्रयोगे नवे
निर्व्यूढः फलितं बिभर्ति स्वजनो यस्मिन्वराभ्युद्गमम् ।

---

१ राना १–°याच—°कात्.

श्रद्धा भक्तिसखी समर्पितनवाकल्पक्रियोद्भासिनी
　सर्वैश्वर्यसमागमाभ्युदयदामासाद्य संविद्वधूम् ॥
शब्दार्थाभिनवप्रकर्षसरसा सैषा कवीन्द्रस्य वाग्
　विस्रब्धैः परिचर्यतां सहृदयैस्त्यक्त्वा त्वरामादरात् ।
दिव्यामोदरसार्द्रभूरिकुसुमस्फीता नवोद्यानभू-
　र्भृङ्गानेव यतस्ततो नयति वा नैषा पुनस्त्वादृशान् ॥
दधति बहवः श्लाघ्ये कर्मण्यवश्यमहो नवं
　क्वचिदपि पुनस्तान्निर्वाहः कथां प्रतिपद्यते ।
वियति नियतं तेजोभाजः स्फुरन्ति सहस्रश-
　स्तिमिरविचलं धातुः सर्गं विधातुमलं रविः ॥
भावः क्वापि विजृम्भते निजगुणौचित्येन जित्वा जगद्
　दुर्वारः सुमनोविशेषविदुषां वीतव्यपेक्षान्तरः ।
प्रत्यूषे विविधौषधीरसगुणास्वादैकहेवाकिनो
　धावन्त्येव हि पङ्कजे मधुलिहो लुप्तान्यपुष्पस्पृहाः ॥
आमोदो मलयद्रुमस्य पवनैर्विस्तार्यते दक्षिणै-
　राघ्रायाप्यलयो यमन्यविषयं माद्यन्ति मन्दादराः ।
प्रीतोऽपि स्वगुणः स्वयं गुणवता वक्तुं कथं शक्यते
　तेनावर्जयितुं जयन्तु सुजनाः केचित्कृताभ्युद्गमाः ॥
यो नारायण इत्यभूच्छ्रुतनिधिः श्रीकान्यकुब्जे द्विज-
　स्तद्वंशे स्वगुणप्रकर्षखचितो मुक्तः कणाख्योऽभवत् ।
तस्यैषा सदृशानुजेन रचिता रामेण विद्वज्जन-
　श्लाघ्यत्वात्सफलश्रमेण भगवद्गीतापदार्थप्रथा ॥
यैत्सत्येऽपीन्दुतारानिकरमणिशिखादीपिकादिप्रकाशे
　सन्तोऽप्यत्यन्तसौक्ष्म्यात्क्वचन विनिभृता यान्ति नाशं निशायाम् ।

---

१ राना १–रुचिरवि°. २–राना १–°क्षापरः. ३ राशा १–स्वजनाः. ४ राशा १·२–ये सत्यपीन्दु°; राना १–सत्येऽप्येन्दु°. [ एवमुभयथाऽपि पाठो दुष्ट इति तर्कदृष्ट्या शुद्धः पाठः स्वीकृतः. ]

तन्न्यक्कारप्रगल्भा सुगुणविलसितेनाऽऽशु विद्योतयन्ता-
न्सर्वान्सम्यक्पदार्थाञ्जयति दिनपतेर्ज्योतिरित्यूर्जितं तत् ॥

इति श्रीराजानकरामकविरचिते वाक्यार्थान्वयमात्रे भगवद्गीताविवरणेऽष्टादशोऽध्यायः ॥ समाप्तं सर्वतोभद्राभिधानं गीताविवरणम् ॥



[ मुद्रणत्वरासमुत्पन्ना दोषाः केवलमत्र संगृहीताः । तत्राप्यन्तिममुद्रणावस्थायां समुत्पन्नदोषा एव प्रायो दरीदृश्यन्ते । ]

# शुद्धिपत्रम्.

—:+×+:—

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ७ | तत्स्वपुषा | तत्स्ववपुषा |
| २ | ९ | निखल° | निखिल° |
| ,, | १३ | विविधः | विविधैः |
| ,, | १४ | °माशङ्क्यमानो | °माशङ्क्यमानो |
| ३ | १७ | कर्तति | कर्तेति |
| ,, | ,, | तस्यव | तस्यैव |
| ८ | १६ | सर्वात्मनां | सर्वात्मना |
| ९ | ५ | वचनमब्रीत् | वचनमब्रवीत् |
| ,, | २२ | अयने तु | अयनेषु तु |
| १० | ८ | सौद्रभश्च | सौभद्रश्च |
| ,, | २३ | योद्धव्यमवास्मिन् | योद्धव्यमास्मिन् |
| १४ | ८ | व्यक्त्वोत्तिष्ठ | त्यक्त्वोत्तिष्ठ |
| ,, | १० | मा गः | मा गाः |
| १७ | २ | निन्द्रामाचक्षते | निद्रामाचक्षते |
| ,, | ५ | प्रवर्तयिषु° | प्रविवर्तयिषु° |
| १८ | १ | °कत्वादुपन्यस्य | °कत्वाद्युपन्यस्य |
| १९ | ३ | °बन्धीयमानं | °बन्ध्यमानं |
| ,, | २० | देहत्वविशिष्टस्य | देहविशिष्टस्य |
| २४ | २४ | छिन्दति | छिन्दन्ति |
| २७ | ८ | तथव | तथैव |
| २९ | २६ | त एव | ते एव |
| ३० | २३ | तादृशे | तादृशो |
| ३१ | ८ | °त्पर्वापररात्रादि- | °त्पूर्वापररात्रादि- |
| ३३ | ३ | °माणतातादृक्सं° | °माणतादृक्सं° |
| ,, | ५ | विधीयता° | विधेयता° |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३ | ८ | त्रगुण्यविषया | त्रैगुण्यविषया |
| ,, | ,, | त्रैगुण्ये | त्रैगुण्यं |
| ३७ | ६ | °नावछिन्नमत | °नावच्छिन्नमत |
| ३९ | १२ | यागे | योगे |
| ४० | २१ | सखदुःखे- | सुखदुःखे- |
| ४२ | १५ | श्रूयते | श्रूयन्ते |
| ४५ | ५ | सर्वभतान्य° | सर्वभूतान्य° |
| ४९ | १९ | °तकर्मानुष्ठान° | °तकर्माननुष्ठान° |
| ५१ | १२ | पर्वस्माद्यो° | पूर्वस्माद्या° |
| ५३ | २४ | सर्वकिल्बिषः | सर्वकिल्बिषैः |
| ५५ | ७ | °व्युत्थापकाद° | °व्युत्थापनाद° |
| ,, | २१ | श्लोकपाठे | ( निरसनीयमेतत् ) |
| ५९ | ३ | ज्ञाननिष्ठ° | ज्ञाननिष्ठ° |
| ६२ | २३ | तेऽपि क° | तेऽपि कर्मभिः |
| ७० | ७ | गीताविवृतौ | गीताविवरणे |
| ८४ | ३ | °रेकतमेनापि | °रेकतरेणापि |
| ८७ | १५ | त्संदहेमय° | त्संदेहमय° |
| ८९ | १७ | एतत्पङ्क्त्यनन्तरं [शां. पा.—बन्धात्प्रमु°] इति योज्यम् | |
| ९० | २७ | न चिरेणा° | नचिरेणा° |
| ९१ | १० | ,, | ,, |
| ९२ | १२ | निर्वृते | निर्वृत्ते |
| ९८ | १५ | °वस्तुनोऽसंदिग्ध° | °वस्तुनोरसंदिग्ध° |
| १०० | ५ | आरभ्यते | आरम्यते |
| १०७ | १४ | °रेणाभ्यधास्यत | °रे नाभ्यधास्यत |
| १०९ | १२ | °पगमेजय° | °पगमेजेय° |
| ११६ | २६ | °योश्चान्त्यत° | °योश्चात्यन्त° |
| ११७ | २७ | विनाशयतु° | विनाशयितु° |
| ११९ | १ | कालान्तरपे° | कालान्तरापे° |
| १२० | — | पुष्पिकारम्भे ‘ इति ’ योजनीयम् | |

| टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२३ | ६ | तादंशि | तादृंशि |
| १२४ | १९ | परापरेमे | परापरे इमे |
| १२५ | ४ | जीवषु | जीवेषु |
| १२९ | २१ | तस्या राधन० | तस्याराधन० |
| १३१ | १३ | भतानि | भूतानि |
| १३३ | २ | हस्तान्यस्त० | हस्तन्यस्त० |
| १३७ | २७ | ०सामर्थ्यन | ०सामर्थ्येन |
| १४२ | १ | °तिपत्तिविवेकि० | °तिपत्तिर्विवेकि |
| ,, | ५ | ०भुवना लोकाः | ०भुवनात् लोकाः |
| १४८ | — | पुष्पिकारम्भे | "इति" योजनीयम् |
| १४९ | २० | प्राप्य | अप्राप्य |
| ,, | २१ | ०परिवर्ततो० | परिवर्तिनो० |
| १५२ | २४ | पुन | पुनः |
| १६५ | २ | ऽसंमढः | ऽसंमूढः |
| ,, | ३ | ०लक्षणः ' इत्यनन्तरं वाक्यसमाप्तिर्निरसनीया | |
| ,, | १० | आहसा | अहिंसा |
| १६७ | २४ | ०णमेषां ते | ०णं येषां ते |
| १७१ | १ | ०धायिष्यमाणां | ०धास्यमानां |
| ,, | २१ | तानिदानी० | तानीदानी० |
| १७३ | १६ | स्थावराणा | स्थावराणां |
| १७४ | १३ | [ " प्रजनश्चास्मि " इति शां. पाठः ] | |
| १८० | १५ | पश्याऽऽश्चर्याणि | पश्याऽऽश्चर्याणि |
| ,, | २४ | पश्चाशतो | पश्चाशतं |
| ,, | २६ | ०न्यप्रमेयान्य० | ०न्यप्रमेयाण्य० |
| १८३ | १६ | [ " पश्यामि त्वां " इति शां. पाठः ] | |
| १८५ | १७ | [ टीकानुसारेण 'त्वां' इति पाठो दृश्यते ] | |
| १८६ | २७ | दृष्वैव | दृष्ट्वैव |
| १८९ | ५ | [ टीकानुसारेण ' कृतेपि त्वत् ' इति पाठो भाति ] | |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०० | २ | न चिरात्पार्थ | नचिरात्पार्थ |
| ,, | १५ | ०मुपदेक्ष्य | ०मुपादिश्य |
| २०७ | १६ | प्रतिपादितव्ये | प्रतिपादयितव्ये |
| २१० | ५ | इन्द्रियार्थेषु | इन्द्रियार्थेषु |
| २१७ | १८ | भोक्तृव्यप० | भोक्तृत्वव्यप० |
| २२३ | ८ | ज्ञेत्रं | क्षेत्रं |
| ,, | १९ | क्षेत्रक्षेत्रयोर० | क्षेत्रक्षेत्रज्ञयोरे० |
| २३५ | ४ | ०त्रपुसीमता | ०त्रपुसीसता |
| २४१ | १ | शरीरान्तोपात्त० | शरीरान्तरोपात्त० |
| ,, | १० | ०धिष्ठीयत्वेन | ०धिष्ठेयत्वेन |
| २४८ | १७ | निर्णीतुं | निर्णेतुं |
| २५० | ८ | परावद्यनिष्कर° | परावद्याविष्कर० |
| २५३ | ९ | नष्टात्मनो | नष्टात्मानो |
| २५८ | १३ | °द्बहुविधान् | °द्बहुविधाम् |
| २६२ | ३ | [ ' दुःख ' अस्योपरि संख्या १ भाव्या ] | |
| ,, | २० | °गनियमा | °गनियमो |
| ,, | २७ | तथाविधेन | अतथाविधेन |
| २६५ | २ | ०रहितो | ०रहितैः |
| २६९ | ७ | षोडध्याय० | षोडशाध्याय० |
| २७९ | ११ | तद्विपरित– | तद्विपरीत– |
| २९१ | १४ | ०मपर्गहेतु | ०मपवर्गहेतु |
| २९२ | १७ | ब्रह्मं | ब्रह्म |
| २९३ | १ | भवद्योगी | भवन्योगी |
| २९३ | २३ | [ ' हृद्देशेऽर्जुन ' इत्यनन्तरं ' तिष्ठति ' इति योज्यम् | |
| ३०१ | १० | विनिष्टः | विनष्टः |
| ३०२ | २ | ०मशूणवम् | ०मशूणवम् |
| ,, | १९ | ०तात्सूप० | ०तासूप० |